॥ श्रीः ॥

आचार्यदण्डिविरचितः

# काव्यादर्शः ॥



वादिजङ्घालदेवविरचितया व्याख्यया

पण्डित-शिरोमणिना वे· कृष्णमाचार्येण परिष्कृत्य

सम्पादितया

तरुणवाचस्पतिना

अन्येन च केनापि कृताभ्यां व्याख्यान्तराभ्यां च

सहितः

तिरुवादि श्रीनिवास मुद्रणालये

मुद्रितः

1936

# विषयाः ॥

# उपोद्घातः ॥

काव्यादर्शस्य प्राचीनं व्याख्यानत्रयमद्य मूलग्रन्थेन सह प्रकाश्यते । तत्र प्रथमं वादिजङ्घालकृतम् । तस्य प्रथमपरिच्छेदभागः अद्य मद्रनगरस्थ-राजकीय-'राजधानीमहाकलाशाला'यां संस्कृतपण्डितपदमधितिष्ठद्भिः श्री. उ. वे. शिरोमणि-कृष्णमाचार्यैः चिरात् प्रकाशितपूर्वः । तैरेव सदयं वितीर्णं मुद्रितमेकमादर्शमवलम्ब्य तस्य भागस्य मुद्रणमिह सुखमकार्ष्म । अवशिष्टस्य तु भागस्य कथमपि एकां लिखितमातृकां सम्पाद्य मुद्रणं निरवर्ति । तेन इदम्प्रथममिदं प्रकाशनं कृत्स्नस्य वादिजङ्घालव्याख्यानस्येति ज्ञातव्यम् ।

बुद्धिपूर्वं प्रौढिमवलम्बमानेन वादिजङ्घालेन नूनं व्याख्यानशैली काठिनीकृता । अशुद्धिभूयिष्ठामेकामेव मातृकामवलम्ब्य मुद्रणे प्रवर्तमानैर्यावान् क्लेशोऽनुभाव्यो भवेत् स सर्वोऽस्माभिरनुभूतः । तत्र तत्र प्रतिभातान् समीचीनपाठान् रेखासन्दंशेन प्रदर्शितवन्तः स्मः । बहुषु तु स्थलेषु अशुद्धयः ग्रन्थपाताश्च विद्यमानास्तथैव मुक्ताः । शोधनार्थमपेक्षितायाः सामग्र्याः कालस्य च दौर्लभ्यात् । यथाकथाञ्चिदपूर्वं किमपि व्याख्यानं प्रकाश्यत इति पुनरस्य यथातृप्ति परिशोधनावसरो भविष्यतीति च कथमपि सन्तुष्यते ।

अन्यद्व्याख्यानद्वयं चिरात् पूर्वं उक्तमद्रराजधानीमहाकलाशालायां संस्कृताचार्यपदमास्थितैः कीर्तिशेषैः एम्. रङ्गाचार्यैः सम्पादितम् । राजकीयैः प्रकाशितम् । तस्य पुस्तकस्येदानीं दुर्लभत्वात् तस्य व्याख्यानद्वयस्य पुनर्मुद्रणमिह उचितमभात् । तत्रापि बहुभिः कारणैः यावत्तृप्ति शोधनं दुष्करमभूत् ।

एषां त्रयाणां व्याख्यानानां क्रमेण १, २, ३, इति प्रतिश्लोकं संख्या दत्ता । तत्र आद्ययोर्द्वयोः कर्त्रोः वादिजङ्घाल इति तरुणवाचस्पतिरिति च नाममात्रं ज्ञायते नान्यत् किमपि । चरमस्य तु न तदपि ।

गुणपरामर्शे, न परमस्मिन् व्याख्यानत्रये अपि तु एतावता कालेन अस्माभिर्दृष्टेषु सर्वेष्वेव व्याख्यानेषु तरुणवाचस्पतिकृतं सर्वथा उत्तमम् । प्रायः सर्वत्र ग्रन्थकाराशयं दर्शयति । अनपेक्षितं न स्पृशत्यपि । न क्वचित् बहु भाषते । तृतीयपरिच्छेदे न युक्ततरं स्पष्टतरं वा केनचिदुदाहरणश्लोकानां विवरणं कर्तुं शक्यम् । तथा युक्तं स्पष्टं च तत्रास्य विवरणम् । वादिजङ्घालो वृथैव अतिपरिश्राम्यति परिश्रमयति च । अन्यस्तु तूष्णीक एव ।

सर्वैरप्येतैर्व्याख्यानैरगतार्थत्वं काव्यादर्शे बहुषु स्थलेष्वस्माकमभात् । तस्मात् मार्जनां नाम संक्षिप्तां चतुर्थीं व्याख्यां विलिख्य अन्ते अयोजयाम ।

अथ काव्यादर्शकारं दण्डिनं प्रति किञ्चिदुच्यते । अवन्तिसुन्दरीकथासार इति दशकुमारचरितसमानकथावस्तुकस्य कस्यचित् पद्यकाव्यस्योपक्रमे एवं केचन श्लोका दृश्यन्ते—

अस्ति प्रासादविस्तारग्रस्तव्योमान्तरा पुरी ।
काञ्चीपुराख्या कल्याणी ककुभा कुम्भजन्मनः ॥

या तत्र(?)विगलद्भोगैरसंख्यवसुभिर्जनैः ।
भोगवत्यमरावत्योर्न्यक्कुर्वाणेव गर्विता ॥

तस्यां जज्ञे बुधव्रातध्वस्ताखिलविपल्लवः ।
पल्लवेषु महीपाल(ः) सिंहविष्णुरिति श्रुतः ॥

.... ... .... .... ....

अस्त्यनन्तपुरं नाम प्रदेशे पश्चिमोत्तरे ॥

आर्यदेशशिखारत्नं तत्रासन् बहवो नृपाः ।
ततोऽभिनिःसृता काचित् कौशिकी ब्रह्मसन्ततिः ॥

तस्यां नारायणस्वामिनाम्ना नारायणोदरात् ।
दामोदर इति श्रीमानादिव... ... वाभवत् ॥

स मेधावी कविर्विद्वान् भारविः(विं) प्रभवं गिराम् ।
अनुरुध्याकरोन्मैत्रीं नरेन्द्रो विष्णुवर्धनीम् ॥

... ... ... ... ...

वहतः पैतृकीं वृत्तिं तस्यासीत् तनयत्रयम् ।
मनोरथाह्वयस्तेषां मध्यमो वंशवर्धनः ॥

ततस्तनूजाश्चत्वारः स्रष्टुर्वेदा इवाभवन् ।
श्रीवीरदत्त इत्येषामुत्तमस्तत्त्ववेदिनाम् ॥

यवीयानस्य च श्लाघ्या गौरी नामाभवत् प्रिया ।
ततः कथञ्चित् सा गौरी द्विजाधिपशिखामणेः ॥

कुमारं दण्डिनामानं व्यक्तशक्तिमजीजनत् ।
स बाल एव मात्रा च पित्रा चापि व्ययुज्यत ॥

... ... ... ... ...

मित्राणि मातृदत्ताद्याः केरलेभ्यो द्विजोत्तमाः ।
त्वद्दर्शनार्थमायातास्तस्मिन् सन्निदधत्यमी ॥

---

एतत्प्रामाण्येन किरातार्जुनीयकारस्य भारवेः प्रपौत्रो दण्डीति वदन्ति* । कालस्त्वस्य सप्तमं शतकमित्यन्यत्र द्रष्टव्यम् ।

दण्डिभामहयोर्मध्ये कः प्राचीन इत्यत्र महान् विवादः । तत्र भामहप्राचीनत्ववादिनः बम्बाय्-मुद्रितप्रतापरुद्रयशोभूषणसम्पादक-श्रीत्रिवेदिप्रभृतयः । अयमेव पक्षो युक्त इत्यस्माकं निर्णयः । एतदुपपादनाय यद्वक्तव्यं तत् सर्वं भामहीयकाव्यालङ्कारोपोद्घाते काव्यादर्शकाव्यालङ्कारस्थ-विप्रतिपन्नस्थलविशेषप्रदर्शनपूर्वकमवोचम ।

---

* अत्र विस्तरः Proceedings and Transactions of the Second Oriental Conference, Calcutta—अत्र 93-प्रभृति 201-पुटपर्यन्तवर्तिनि लेखे द्रष्टव्यः ।

इमानि तानि स्थलानि—

1 काव्यशरीरम् । *

2 वर्णयित्वा वधप्रतिपादनम् ।

3 कथाऽऽख्यायिकाभेदः ।

4 गौडवैदर्भमार्गभेदः ।

5 भामहीयमवाचकोदाहरणं दण्डिनः प्रहेलिकाविशेषोदाहरणम् ।

6 अलङ्कारोद्देशः ।

7 उपमादोषाः ।

8 हेतुसूक्ष्मलेशालङ्काराः ।

9 उदात्तालङ्कारः ।

10 अपह्नुतिः ।

11 अनन्वयः । ससन्देहः । उपमारूपकम् । उत्प्रेक्षावयवः ।

12 प्रतिज्ञाहान्यादिदोषाः ।

13 दोषान्तराणि ।

14 सागररूपणं व्याकरणस्य भामहेन । काव्यस्य दण्डिना ।

इति । अन्यदपि किञ्चिदिदानीं वक्तव्यं भवति ।

---

* The editors of the Kavyalankara of the Kasi Sanskrit Series say in their Introduction 'भामह makes no linguistic division of Kavya as दण्डी does.' But we read in Bhamaha

संस्कृतं प्राकृतं चैतदपभ्रंश इति त्रिधा । I. 16

And Dandin here again wants to improve upon this and says:

तदेतद्वाङ्मयं भूयः संस्कृतं प्राकृतं तथा ।
अपभ्रंशश्च मिश्रं चेत्याहुरार्याश्चतुर्विधम् ॥ I. 32

1 यमकविषये अर्थालङ्कारेष्विव भामहेनातिसंक्षेपे कृते दण्डी अतिविस्तरं करोतीति सर्वे जानन्ति । किन्त्वस्मिन्नपि प्रकरणे भामहोक्तिं स्मरन्नेव दण्डी तत्र तत्र विशिष्य किञ्चिदाहेत्येतदत्रावधातव्यम् ।

सन्दष्टकसमुद्गादिरत्रैवान्तर्गतिर्मता ।

इति भामहेनोक्ते

उक्तान्तर्गतमप्येतत् स्वातन्त्र्येणात्र कीर्त्यते ।

इत्ययमाह ।

आदौ मध्यान्तयोर्वा स्यात्

इति भामहः ।

आदिमध्यान्तमध्यान्तमध्याद्याद्यन्तसर्वतः ॥

इत्ययम् ।

कृत्स्नं च सर्वपादेषु दुष्करं साधु तादृशम् ।

इति भामहः सर्वपादकृत्स्नयमकस्य दुष्करत्वमभिधाय उदाहरणमददद्व विरमति । दण्डी तु

'दुष्कराभिमता ये तु वर्ण्यन्ते तेऽत्र केचन ।'

'गोमूत्रिकेति तत् प्राहुर्दुष्करं तद्विदो विदुः ।'

'यः स्वरस्थानवर्णानां नियमो दुष्करेष्वसौ ।
इष्टश्चतुःप्रभृत्येव वर्ण्यते सुकरः परः ॥'

'इति दुष्करमार्गेऽपि कश्चिदादर्शितः क्रमः ।'

'विशदबुद्धिरनेन सुवर्त्मना सुकरदुष्करमार्गमवैति हि ।'

'शब्दार्थालंक्रियाश्चित्रमार्गाः सुकरदुष्कराः ।
गुणा दोषाश्च काव्यानामिह संक्षिप्य दर्शिताः ॥'

इति दुष्करमार्गे स्वस्य सामर्थ्यातिशयं प्रकटयन् बहुकृत्वस्तत्कीर्तनं करोति, बहु चोदाहरति ।

2 नानाधात्वर्थगम्भीरा यमकव्यपदेशिनी ।
प्रहेलिका सा ह्युदिता रामशर्माच्युतोत्तरे ॥

इति यमकस्य क्लिष्टत्वे प्रहेलिकात्वं भवेदिति प्रहेलिकायां काव्यान्तर्गत्यनर्हत्वेन अत्यन्तमवज्ञां दर्शयति भामहे,

प्रहेलिकाप्रकाराणां पुनरुद्दिश्यते गतिः ।

इति तन्निरूपणं प्रतिजानानः

क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे ।
परव्यामोहने चापि सोपयोगाः प्रहेलिकाः ॥

इति तासां पयोजनप्रदर्शने संरम्भं वहन्

एताः षोडश निर्दिष्टाः पूर्वाचार्यैः प्रहेलिकाः ।

इति तासां पूर्वैरेव प्रदर्शितत्वं वदंश्च दण्डी तास्वतीवादरं दर्शयति ।

3 भामहेन कृत्स्नेन एकेन परिच्छेदेन दर्शितां शब्दशुद्धिं दण्डी न कटाक्षयत्यपि ।

एवं तावत् भामहेनोक्तस्य परिष्करणे विस्तरणे च, खण्डितस्य समर्थने, समर्थितस्य खण्डने; उपेक्षितस्य परिग्रहे, परिगृहीतस्योपेक्षणे च दण्डिनः साभिनिवेशप्रवृत्तिदर्शनात् तस्मादयं सर्वथाऽर्वाचीनः दृष्टतद्ग्रन्थश्चेति निस्सन्देहं प्रमिमः ।

काव्यादर्शव्याख्यातॄणामन्येषां च ग्रन्थकाराणां एवमेव मतिरासीदिति तत्तद्ग्रन्थतः प्रतीयते । अत्र तरुणवाचस्पतिव्याख्याने द्रष्टव्यानि स्थलानि त्वेवादिना दर्शितानि * । वादिजङ्घालव्याख्यानेऽपि तत्तत्स्थल-

* Indian Antiquary Vol. XLII page 264. There is one more place which was not quoted there:

**भामहेन अनन्वयः सन्देहः उत्प्रेक्षावयवोऽपि च त्रयोऽलङ्कारा दर्शिताः । तेषां उपमोत्प्रेक्षयोरन्तर्भाव इत्याह । II २५८**

दर्शने सोऽभिप्रायो व्यक्तोभवति । तथा हि—

अत्र २१ पुटे 'भामहमतमाक्षिपति' ।

२५ 'ततश्च यदुक्तं भामहेन तन्निरस्तं भवति ।

१५१ 'गतोऽस्तमर्को भातीन्दुः .... प्रचक्षते ॥'

इति यदुक्तं भामहेन तदपाकरोति ।

२०९ '.... भामहेन पृथगुदाहृतौ यौ तावस्माभिः उपमास्वेव दर्शितौ'

३१८ 'अपरे भामहादयः अपार्थादिवत् प्रतिज्ञाहानिदोषोऽपि काव्ये परिहर्तव्य इति तल्लक्षणमपि प्रणीतवन्तः । तदनिच्छन् स्वमतं दर्शयति ।'

'पूर्वेभ्यो भामहादिभ्यः सादरं विहिताञ्जलिः'

इति विद्यानाथस्य

'इह हि तावद्भामहोद्भटप्रभृतयश्चिरन्तनालङ्कारकाराः'

इति रुय्यकस्य च वचनेन भामहः आलङ्कारिकेषु प्रथमगणनीयः प्राचीनतम इति तयोरभिप्राय इति स्फुटमवगम्यत एव ।

वक्रोक्तिजीवितकारः कुन्तकः तृतीयोन्मेषे रसवतोऽलङ्कारत्वं निराकुर्वन् प्रथमं

"'रसवद्दर्शितस्पष्टशृङ्गारादि'

[इति] रसवल्लक्षणम् ।"

इति भामहलक्षणं निर्दिश्य विकल्प्य दूषयित्वा

'यदपि कैश्चित्

स्वशब्दस्थायिसञ्चारिविभावाभिनयास्पदम्

इत्यनेन पूर्वमेव लक्षणं विशेषितम्'

इत्युद्भटोक्तिमपि तत्समानयोगक्षेमं निरूप्य

ततः परं

'यदपि

'रसवद्रसमसंश्रयात्'

इति कैश्चिल्लक्षणमकारि तदापि न सम्यक् समाधी[धि]यतामति-

[धि]तिष्ठति'

इत्युपक्रम्य लक्षणान्तरं विमृशति । अत्र 'कैश्चित्' इति निर्दिष्टो लक्षण-कारो दण्ड्येवेति

'रसपेशलम्

इति पाठे न किञ्चिदत्रातिरिच्यते'

इत्यनुपदं पाठान्तरप्रदर्शनादवगम्यते । अयं हि सांप्रतं प्रसिद्धः काव्यादर्शे पाठः । कुन्तकग्रन्थादेव तु 'रसवद्रससंश्रयात्' इत्यपि पाठ आसीदिति ज्ञायते । एवं वादिजङ्घालव्याख्यानतोऽपि तत्र तत्र पाठभेदा अवगम्यन्त इतीदं तावदास्ताम् । अयमत्र निर्दिष्टो लक्षणकारो दण्डीत्यत्र तु नास्ति कश्चित् संशयः । इत्थं भामहोद्भटदण्डिकृतलक्षणविमर्शनपुरस्सरं रसवतोऽलङ्कारत्वं निरस्य पश्चात् ध्वनिकारमतविमर्शे प्रवर्तते । तेनायं कुन्तकः एषां ग्रन्थकाराणां कालतः पौर्वापर्यमवदधान एव तदुक्तिविमर्शे एतं क्रममाश्रयतीति प्रतीयते । तथा चेत् कुन्तकाभिप्रायेणापि भामहो दण्डिनः प्राचीन इति वक्तव्यं भवति ।

S. V. O. I.
Tirupati,
25—6—41.

D. T. Tatacharya

॥ श्रीः ॥

आचार्यदण्डिविरचितः

# काव्यादर्शः ॥

व्याख्यानत्रयसमेतः

---

## प्रथमः परिच्छेदः ।

चतुर्मुखमुखाम्भोजवनहंसवधूर्मम ।
मानसे रमतां नित्यं सर्वशुक्ला सरस्वती ॥ १ ॥

---

१. मुरारिनाभिकमलाज्जातो यश्चतुराननः ।
ज्ञानं मे तत्प्रिया देयाद्विश्वशुभ्रा तु भारती ॥

लक्ष्मीवल्लभमनिशं वन्दे वसुदेवनन्दनं कृष्णम् ।
नीता वराहवपुषा समुन्नतिं येन वसुधेयम् ॥

अविघ्नेन शास्त्रसमाप्तिमभिवाञ्छन् चतुर्मुखेत्यादिना आशीर्द्वारेण वाग्देवतामभिष्टौति । चतुर्मुखो ब्रह्मा । तस्य मुखान्यम्भोजानीव मुखाम्भोजानि 'उपमितं व्याघ्रादिभिः' इत्यादिना समासः । तेषां वनमिव वनं समूहः पद्मषण्डः । हंसस्य वधूः हंसी । सा, मानसं सरः चित्तं चोच्यते तत्र मम मानसे मम चेतसि रमताम् । नित्यं दीर्घकालमिति 'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इति कर्मसंज्ञा । ततः कर्मणि द्वितीया । रमतामित्याशिषि लोट् । सर्वं शुक्लमनवद्यं वाङ्मनःशरीरं

यस्याः सा सर्वशुक्ला सर्वानवद्या । शुक्लशब्दोऽयमनवद्यवाची । सरस्वती वाग्देवता भारती । तेन सर्वशुक्ला श्वित्रिणीति न कुचोद्यस्यावकाशः । वर्णपदवाक्यात्मकरूपत्वाद्वाचो न शुक्लादिरूपशङ्काऽप्यस्ति, वाचामाकाशगुणत्वेन निर्गुणत्वाच्च । शब्दे माधुर्यादिकमपीहोक्तमुपचरितं पृथिव्युदकयोः समवेतं कविभिरभिष्टूयमानं न वास्तवमिति प्रत्येतव्यम् । ये च भक्तिभरनम्रमानसाः शिरोग्रीवाद्यवयवसन्निवेशवतीं स्त्रियं सरस्वतीं परिकल्पयन्ति, तेषामपि मते सर्वशुक्लेति श्वित्रिदोषापादनं न दुष्परिहरम् । सर्वशुक्लेति प्रकारकार्त्स्न्ये वर्तमानस्येह सर्वशब्दस्योपादानम्; यथा 'सर्वदीनो भिक्षुः' । तेन करचरणतलजिह्वाक्षिपक्ष्मभ्रू[illegible]विवर्जं सर्वं शुक्लमङ्गं लभ्यत इत्यनवद्यम् ॥ १ ॥

२. काव्यलक्षणात्मकं प्रबन्धमारभमाणः तस्य निष्प्रत्यूहपरिसमाप्त्यर्थं शब्दाधिदेवतां सरस्वतीं स्वचित्ते सन्निधिं प्रार्थयते—चतुर्मुखेति । चतुर्मुखस्य मुखाम्भोजवने हंसवधूः हंसीभवन्ती । सर्वशुक्ला सर्वस्माच्छुक्लतरा सर्वस्मात् श्वेतरस्मात् शुक्लपदार्थादतिशयेन शुक्ला; वृत्तौ तरपो लोप इति वचनात् समासे तरपो लोपे सति, सर्वशुक्लेति रूपसिद्धिः । यद्वा सर्वः सकलः शुक्लः शुक्लगुणो यस्यां सा सर्वशुक्ला, अतिशयितशुक्लगुणेति यावत् । एवंरूपो ध्यानविशेषः कवित्वप्रकर्षावह इत्यभियुक्ताः । सा सरस्वती मम मानसे मनोरूपे सरसि नित्यं रमतां यावत्प्रबन्धपरिसमाप्ति सान्निध्यताम् । मुखानां पङ्कजवनत्वेन तत्र सरस्वत्याः हंसीत्वेन च श्लेषेण रूपणात् श्लेषानुविद्धं परम्परितरूपकमलालङ्कारः ॥ १ ॥

३. शास्त्रमारभमाणानां विदुषाम् आशीर्नमस्क्रियावस्तुनिर्देशेष्वन्यतमस्य करणीयत्वात् अत्रापि काव्यादर्शकारः सकलकलाकलापालोकनविमिश्रितबुद्धिराचार्यः स्वशास्त्रस्याविघ्नसमाप्तये वाग्देवतां मनसि प्रतिष्ठापयितुकामः आशीर्वादमुखेन सरस्वतीं स्तौति—चतुर्मुखेति । कमलास-

नस्य मुखकमलवने हंसवधूरिव रममाणा सर्वशुक्ला सरस्वती, मानसाख्ये सरसि कमलवनसञ्चारिणी हंसी यथा रमते, तथा मम चेतसि दीर्घं रमतां इत्याशास्ते ॥ १ ॥

**पूर्वशास्त्राणि संहृत्य प्रयोगानुपलक्ष्य च ।**
**यथासामर्थ्यमस्माभिः क्रियते काव्यलक्षणम् ॥ २ ॥**

१. पूर्वशास्त्राणि मेधाविरुद्रभामहादिप्रोक्तानि काव्यलक्षणानि संहृत्य संक्षिप्य तथा प्रयोगान् काव्यनाटकादीनुपलक्ष्य च यथासामर्थ्यमस्माभिः क्रियते काव्यलक्षणमिति सुबोधम् ॥ २ ॥

२. ग्रन्थकारः स्वप्रवृत्तेर्विषयं दर्शयति—पूर्वशास्त्राणीति । पूर्वाचार्यकृतानि लक्षणानि संहृत्य समुच्चित्य संक्षिप्य प्रयोगान् महाकविप्रयोगांश्च उपलक्ष्य तत्तदुपात्तविशेषसहितं यथासामर्थ्यं यथौचित्यं अस्माभिर्लक्षणं क्रियते ॥ २ ॥

३. एवमाशास्य शास्त्रमारिप्सुराचार्यः शास्त्रारम्भे सम्बन्धाभिधेयप्रयोजनानि प्रथमं सूचयन् श्लोकेनैकेनाह—पूर्वशास्त्राणीति । सम्बन्धस्तावत्प्रतिपाद्यप्रतिपादकलक्षणः । प्रतिपाद्यस्तावत् सर्वेषु लक्षणशास्त्रेषु विप्रकीर्णस्य काव्यलक्षणस्य समुच्चयरूपः ; तस्य प्रतिपादकोऽयं ग्रन्थः ; तयोरयं प्रतिपाद्यप्रतिपादकलक्षणतया सम्बन्धो दृश्यते । अभिधेयस्तावद्यानि लक्षणान्यत्र प्रतिपाद्यन्ते तान्येवाभिधेयानि भवन्ति । अभिधानं च प्रतिपादकरूपोऽयं ग्रन्थः । अनेकेषु शास्त्रेषु विप्रकीर्णलक्षणरूपस्य एकेनैवाल्पीयसा ग्रन्थेनावगतिः प्रयोजनत्वेन अभिहिता । पूर्वेषां काश्यपवररुचिप्रभृतीनां आचार्याणां लक्षणशास्त्राणि संहृत्य पर्यालोच्य कालिदासप्रभृतीनां प्रयोगानुपलक्ष्य च यथासामर्थ्यं बुद्ध्यनुरूपं अस्माभिः काव्यलक्षणं क्रियते ॥ २ ॥

१. इदानीं 'वाचामेव प्रसादेन लोकयात्रा प्रवर्तते' इत्यनेन वाचां लोकयात्राप्रवर्तनं प्रयोजनमभिदधानः काकदन्तपरीक्षावत् निष्प्रयोजनत्वाद्नारम्भणीयतालक्षणं दोषं परिहरति । केषां लोकयात्रा प्रवर्तत इत्याह—

**इह शिष्टानुशिष्टानां शिष्टानामपि सर्वथा ।**
**वाचामेव प्रसादेन लोकयात्रा प्रवर्तते ॥ ३ ॥**

शिष्टाश्चानुशिष्टाश्च शिष्टानुशिष्टाः । शिष्टाश्च शब्दार्थसम्बन्धव्यवस्थतन्त्राः सूत्रवार्तिकभाष्यकाराः । अनुशिष्टाः सुबन्धुदिङ्नागभर्तृहरिप्रभृतयः । तथा न केवलं तेषामेव किं तु शिष्टानामपि परिशिष्टानां बालगोपालादीनाम् , वाचामेव प्रसादेन लोकव्यवहारः प्रवर्तते । यद्वा शिष्टानुशिष्टानामिति वाचां विशेषणमेतत् । शिष्टैरनुशिष्टाः शिष्टानुशिष्टाः वैयाकरणप्रयुक्ता वाचः । तथा शिष्टानामपि परिशिष्टानां च प्राकृतापभ्रंशादीनां बालादिप्रयुक्तानां वाचामेव प्रसादेन लोकयात्रा प्रवर्तते। सर्वथेत्यनेन वाचां व्यवहारोपयुक्ततां दर्शयति । शब्दमन्तरेण संविदभावात् स्मरणाभावात् ततोऽभिलाषानुत्पत्तेः प्रवृत्तिनिवृत्त्योरभावः । तदुक्तम्—

'.... संवित्सामर्थ्यभाविनः ।
स्मरणादभिलाषेण व्यवहारः प्रवर्तते ॥'

तथा—

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिवाभाति सर्वं शब्दे प्रतिष्ठितम् (?) ॥'

तथा च धर्मकीर्तिनाऽप्युक्तम्—'नायमशब्दमर्थं व्यवस्यति निर्णयात्' इति अलमतिविस्तरेण ॥ ३ ॥

२. काव्यलक्षणारम्भप्रतिक्षेपिणः क्रमेणानुकूलयिष्यन् सामान्येन शब्दलक्षणावतारस्य व्यवहाराङ्गतया शब्दस्य तावदवश्यंभावं दर्शयति— इहेति । इह लोके शिष्टानुशिष्टानां शिष्टैः पाणिन्यादिभिः अनुशिष्टानां

साध्वसाधुविभागेन दर्शितानां, शिष्टानां अपभ्रष्टानामपि, वाचां शब्दानामेव महिम्ना सर्वथा सर्वप्रकारेण लोकयात्रा लोकव्यवहारः—इदं कुरु, इदं मा कुरु, इयमस्य संज्ञा, इदमस्याः संज्ञायाः संज्ञि—इत्यादिरूपः प्रवर्तते ॥ ३ ॥

३. तस्य लक्षणस्य शब्दमन्तरेण अनुपाद्यमानत्वात् लोकयात्रा च शब्देनैवोपपाद्यते इति तदाह— इहेति । इह अस्मिन् लोके शिष्टैराचारवद्भिराचार्यैः कृतानुशासनानां वाचां, शिष्टानामपि व्यतिरिक्तानां वैखरीणामपि । तेषां शब्दानां प्रसादेनैव लोकयात्रा प्रवर्तते ; इतरथा लोकयात्राप्रसिद्धिश्च न भवति ॥ ३ ॥

१. अमुमेवार्थं व्यतिरेकद्वारेण दर्शयति—

**इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम् ।**
**यदि शब्दाह्वयं ज्योतिरा संसारान्न दीप्यते ॥ ४ ॥**

तम इव तमो गुरुत्वादावारकत्वादज्ञानमुच्यते । तदुक्तम्— 'गुरु अपवारकमेव तमः । पञ्च विपर्ययभेदाः—तमो मोहो महामोहस्तामिस्रमन्धतामिस्रं' इति । तत् तमः कृत्स्नमस्मिन्निति तमःकृत्स्नमिति बहुव्रीहिः । कामचारतो विशेषणविशेष्यभाव इति तमःशब्दस्य विशेषणत्वात् पूर्वनिपातः । तेनायमर्थः—तमःकृत्स्नं तमोजालमयमिदं भुवनत्रयमन्धं जायेत इति विधेयमेतत् । अन्धमिवान्धं हेयोपादेयविवेकशून्यं जायेत स्यात् । यद्वा इदं भुवनत्रयं कृत्स्नमन्धं तमो जायेत । अन्धं कृत्स्नमिति च तमसो विशेषणम् । अन्धं तमो घोरमन्धकारं निरालोकं भवेत् । किं यदि स्यादित्याह—शब्दो ज्ञानमालोकश्च त्रीणि ज्योतींषि । तेषु मध्ये यदि शब्दसंज्ञकं ज्योतिर्न दीप्यते न प्रकाशते । आ(?) कुत इत्याह— आ संसारात् संसरणं संसारः सृष्टिः, तस्मादा संसारात् आ सृष्टेः । यद्वा षडिन्द्रियाणि षड् विषयाः षड् बुद्धयः सुखं दुःखं शरीरमित्येकविंशतिभेदं दुःखं संसारः । तद्योगात् तदाधाराः प्राणिनः । आ संसारात् आ भूतग्रामात् । आङ् चायमभिविधौ द्रष्टव्यः ॥ ४ ॥

२. एवमर्थं (?)दर्शयन् व्यतिरेकं दर्शयति—इदमिति । भुवनत्रय-शब्देन प्राणिनो लक्ष्यन्ते । सर्वे प्राणिनः शब्दप्रमाणाभावे अन्धं तमो गाढमज्ञानं भजेरन् ; गाढाज्ञानेन व्याप्ता भवेयुः इत्यर्थः । यदि शब्दाह्वयं ज्योतिः शब्दाख्यप्रदीपः आ संसारात् संसारोपक्रममारभ्य न दीप्येत न प्रकाशेत । शब्दाभावे सर्वव्यवहारोच्छित्तिरिति भावः ॥ ४ ॥

३. उक्तमेवार्थं विवृणोति—इदमिति । इदं भुवनत्रयं सकलमन्धं तमो भवति शब्दाभिधानं ज्योतिः संसारावधेः यदि न दीप्यते न प्रकाशी-भवति ॥ ४ ॥

**आदिराजयशोबिम्बमादर्शं प्राप्य वाङ्मयम् ।**
**तेषामसन्निधानेऽपि न स्वयं पश्य नश्यति ॥ ५ ॥**

१. नृगनहुषादिचिरतरातीतभूपालकीर्तिबिम्बं यशःशरीरं तेषां स्वात्मनो बहुकालव्यवहितत्वेऽपि न नश्यति । पश्य उपलभस्व अवेहि ।

भामहेनाप्युक्तम्—

'उपेयुषामपि दिवं सन्निबन्धविधायिनाम् ।
आस्त एव निरातङ्कं कान्तं काव्यमयं वपुः ॥'

एतेन चेतरदर्पणात् वाङ्मयदर्पणस्य वैलक्षण्यं दर्शयति ॥ ५ ॥

२. अन्यमपि शब्दप्रभावातिशयं दर्शयति—आदिराजेति । आदिराजानां भरतभगीरथादीनां दीर्घकालातीतानां यशोबिम्बं यशोरूपं प्रतिबिम्बम् । बिम्बशब्दोऽत्र प्रतिबिम्बे वर्तते । वाङ्मयं आदर्शं प्राप्य, तेषां राज्ञां असन्निधानेऽपि दीर्घकालातीतत्वेऽपि न नश्यति , किं तु प्रति-भासत एव । पश्येत्याश्चर्ये । लोके बिम्बसन्निधाने प्रतिबिम्बो दृष्टः ; नात्र तथेत्याश्चर्यम् ॥ ५ ॥

३. अस्मिन्नर्थे प्रमाणमाह—आदिराजेति । मान्धातृप्रभृतीनां यशश्शरीरं शब्दमयं दर्पणं प्राप्य तत्र स्थिरीभूतं तेषाम् असन्निधानेऽपि न नश्यति । स्वयमपि पश्यति लौकिकी वाचोयुक्तिः ॥ ५ ॥

**गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधैः ।**
**दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ॥ ६ ॥**

१. गीर्वाग्भारती कामं दुग्धे कामदुघा धेनुः स्मर्यते । सम्यक् छन्दोऽलङ्कारसाधुशब्दैः प्रयुक्ता सती । सैव वाक् दुष्प्रयुक्ता छन्दोभङ्गापशब्दश्रुतिदुष्टादिशब्दैः पुनः प्रयुक्ता गोत्वं पशुत्वं प्रयोक्तुः शंसति ।

भामहेनाप्युक्तम्—

'नाकवित्वमधर्माय मृतये दण्डनाय वा ।
कुकवित्वं पुनः साक्षान्मृतिमाहुर्मनीषिणः ॥ ६ ॥'

२. शब्देन सर्वव्यवहारोऽस्तु, किं तल्लक्षणेनेत्यत आह—गौर्गौरिति । सम्यक् प्रयुक्ता सम्यग्ज्ञातरूपा प्रयुक्ता गीर्वाणी कामदुघा गौः स्मर्यते । 'एकः शब्दः सम्यक् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग्भवति ।' शब्दलक्षणापरिज्ञानेन अनर्थमाह—दुष्प्रयुक्तेति । सैव वाक् दुष्प्रयुक्ता सम्यगज्ञातविषये प्रयुक्ता प्रयोक्तुर्गोत्वम् अज्ञत्वं प्रकटयति । तेन स इहलोकपरलोकयोः दुष्यति । तथा च स्मर्यते—'यस्तु प्रयुंक्ते कुशलो विशेषे शब्दान् यथावद्व्यवहारकाले । सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः ।'—इति ॥ ६ ॥

३. तेषामेव शब्दानां प्रयोगवैलक्षण्ये फलविशेषं दर्शयितुमाह—गौर्गौरिति । पशुत्वमज्ञानितां शंसति, न निष्प्रयोजनताम् ॥ ६ ॥

**तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन ।**
**स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम् ॥ ७ ॥**

१. यत एवम्, अतः अल्पमपि श्रुतिदुष्टादि दुष्टं काव्ये नोपेक्ष्यं कथञ्चन कथमपि प्रमादादिनापि । 'एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' इतीदं निदर्शनं काव्यादन्यत्र द्रष्टव्यम् । यथा

सुन्दरमपि शरीरमेकेनामचन्दनसदृशेन श्वित्रेण दुर्भगं जुगुप्सनीयम् , एवं काव्यमपि छन्दोभङ्गानलङ्कारापशब्दादिदोषेण दुर्भगं विद्वद्भिरनादरणीयं स्यात् । तदुक्तं भामहेनापि—

'सर्वथा पदमप्येकं न निगाद्यमवद्यवत् ।
विलक्षणेन काव्येन दुःसुतेनेव निन्द्यते ॥' इति ॥ ७ ॥

२. एवमपशब्दकरस्य अनर्थकरत्वात् काव्ये स्वल्पोऽप्यपशब्दो न प्रयोक्तव्य इत्याह—तदल्पमपीति । काव्ये स्वल्पमपि दुष्टं कथञ्चन नोपेक्ष्यम् ; यत्नेन परिहरणीयम् । काव्यशरीरं गुणयुक्तमपि एकेन दोषेण निन्द्यं भवति । तत्र निदर्शनमाह—स्यादिति । सुन्दरमपि सौन्दर्यगुणयुक्तमपि युवतिशरीरं एकेन श्वित्रेण निन्द्यं भवति ॥ ७ ॥

३. तस्मात्स्वल्पोऽपि दोषो नोपेक्षणीय इत्याह—वदिति ॥ ७ ॥

१. गुणदोषस्वरूपपरिज्ञानमन्तरेण काव्यं दोषरहितं गुणवच्च रचयितुं ज्ञातुं च न शक्यते । गुणदोषपरिज्ञानमपि शास्त्रपरिज्ञानमन्तरेणानुपपन्नमित्येतत् दर्शयति—

**गुणदोषानशास्त्रज्ञः कथं विभजते जनः ।**
**किमन्धस्याधिकारोऽस्ति रूपभेदोपलब्धिषु ॥ ८ ॥**

गुणाः छन्दोऽलङ्कारसाधुशब्दादयः । दोषाः श्रुतिदुष्टार्थदुष्टदुष्टश्रुतिकष्टापार्थव्यर्थादयः । तान् अशास्त्रज्ञः व्याकरणतर्कच्छन्दोऽलङ्कारादिशास्त्रानभिज्ञो जनः कथं विभजते , एते गुणाः एते दोषाः इति कथं ज्ञातुं क्षमः । एतदेव दृष्टान्तेन प्रत्याययति—किमन्धस्य दर्शनशक्तिहीनस्य पुरुषस्याधिकारोऽस्ति । किमित्येतदाक्षेपे वर्तते । आक्षेपश्च प्रतिषेधः । 'प्रतिषेधोक्तिराक्षेपः' । केत्याह—रूपभेदोपलब्धिषु । रूपं

द्रव्यत्रयवृत्ति । तदुक्तम्—'पृथिव्युदकतेजसां त्रयाणां रूपवत्त्वम्' इति । तस्य भेदा विशेषाः ; तथा हि-पृथिव्यां पञ्चप्रकारं रूपं शुक्लादि , अप्स्वेकमेव रूपम्, तेजसि शुक्लं भास्वरं चेति । तदुपलब्धिषु तद्विशेषपरिज्ञानेषु । यथाऽन्धस्य न रूपविशेषोपलब्धावधिकारः, तथा अनधिगतशास्त्रस्य न गुणदोषपरिज्ञाने । ननु चान्धस्य रूपमात्रोपलब्धावधिकारे सिद्धे सत्येवमुच्येत—'किमन्धस्याधिकारोऽस्ति रूपभेदोपलब्धिषु' इत्यादि । यावता रूपमात्रोपलब्धिरप्यन्धस्य नास्ति । किं च एकनिषेधः शेषाभ्यनुज्ञां कुर्यात् । तथा हि—वामेनाक्ष्णा न पश्यति इत्युक्ते दक्षिणेनाक्ष्णा पश्यति इति प्रतीयते । तद्वदन्धस्य रूपभेदोपलब्धावधिकारे निषिद्धे रूपसामान्योपलब्धावधिकारोऽभ्यनुज्ञातः स्यात् । न चैतदुपपन्नम् , अक्ष्यर्थसन्निकर्षे सति संयुक्तसमवायात् रूपोपलब्धेरिति चेन्न ; ग्रन्थकाराभिप्रायानभिज्ञानात् । किमन्धस्याधिकारोऽस्ति रूपभेदोपलब्धिषु इति ब्रुवता ग्रन्थकारस्यायमभिप्रायः—रूपसामान्योपलब्धावप्यन्धस्याधिकारो नास्ति । किमङ्ग ! पुना रूपविशेषोपलब्धिषु इति । अन्धस्य रूपविशेषोपलब्धेरसम्भवातिशयप्रख्यापनपरत्वादस्य । न च विशेषनिषेधः सामान्याभ्यनुज्ञां करोतीत्ययं न्यायः सर्वत्रानुवर्तव्यः । अन्यथा 'न वेदाध्ययनसम्पन्नोऽयं ब्रात्यः' इति विशेषनिषेधः अन्यत्र वेदाध्ययनं सम्पादयेत् । न च सर्वो विप्रो वेदाध्ययनसम्पन्नः । तस्मात् स्वरूपप्रत्यायकोऽपि कश्चिद्विशेषनिषेध इत्यलमतिशिथिलवचःसमाधानेन । (?) । कथमन्यथा निबरीसनिशातमस्तिरोहितनयनपुटकोटरस्य मधुरतररससहकारतरुपरिपक्वफलास्वादाद्रूपानुमानम्? एकसामग्र्यधीनत्वात् रूपरसयोः । तदुक्तम् सकलतार्किकचक्रवर्तिना—

'एकसामग्र्यधीनस्य रूपादे रसतो गतिः ।
हेतुधर्मानुमानेन धूपेन्धनविकारवत् ॥'

न च रूपसामान्यवत् रूपविशेषस्याप्यनुमानेनान्धस्योपलब्धिः ;

अनुमानस्य सामान्यविषयत्वात् । विशेषविषयं च प्रत्यक्षम् । अप्रत्यक्षाः स्वरूपविशेषा अन्धस्येत्यलमतिप्रपञ्चेन । ततोऽनवद्यमेतत्—'किमन्धस्याधिकारोऽस्ति रूपभेदोपलब्धिष्वि'ति । बहुवचनं चोपपन्नं भवति, व्यवच्छेद्यबहुत्वसम्भवात् ॥ ८ ॥

२. पूर्वकविप्रयुक्तं प्रयुञ्जानैः काव्यदोषः परिह्रियत इति चेत् तत्राह गुणदोषानिति । अशास्त्रज्ञः प्रयोगमात्रपरो जनः कथं गुणदोषान् विभजते विविनक्ति अयं गुणः अयं दोषः इति, प्रयुक्तेष्वपि स्खलनदर्शनात् ? अशास्त्रचक्षुषा दोषगुणापरिज्ञाने निदर्शनमाह किमन्धस्येति । अन्धस्य इदं शुक्लम्, इदं नीलम् इति भेदपरिज्ञाने न शक्तिरस्ति ॥ ८ ॥

३. उक्तस्य लक्षणस्य स्वरूपावगतौ शास्त्रनिश्चयेन अवश्यं भवितव्यमित्याह—गुणेति ॥ ८ ॥

**अतः प्रजानां व्युत्पत्तिमभिसन्धाय सूरयः।**
**वाचां विचित्रमार्गाणां निबबन्धुः क्रियाविधिम् ॥ ९ ॥**

१. यत एवम्, अतः प्रजानामविदुषां जनानां व्युत्पत्तिमभिसन्धाय 'अलङ्कारशास्त्रमधिगम्य काव्यलक्षणे व्युत्पन्ना भवन्तु' इति विचिन्त्य सूरयः मेधाविरामशर्मादयः आचार्याः । वाचां किंविशिष्टानामित्याह—विचित्रमार्गाणां विचित्रो नानाप्रकारो मार्गो वैदर्भीगौड्यादिः यासां ता विचित्रमार्गाः, तासाम् । निबबन्धुः विरचितवन्तः । किमित्याह—क्रियाविधिम्, क्रियत इति क्रिया कृतिः काव्यम्; क्रियाया विधिः क्रियाविधिः । विधीयते ज्ञायते अनेनेति विधिः लक्षणम् । काव्यलक्षणं कृतवन्त इत्यर्थः ॥ ९ ॥

२. लक्षणारम्भसमर्थनमुपसंहरति—अत इति । यतो दोषगुणविभागज्ञानस्य शास्त्राधीनत्वम्, अतः पूर्वाचार्याः काव्यवाक्यानि व्युत्पि-

ऽसूनां जनानां काव्यवाक्यानां व्युत्पत्तिं दोषराहित्येन गुणवत्त्वेन च विशिष्टज्ञानम् अभिसन्धाय उद्दिश्य , गौडीयादिभेदेन विचित्रमार्गाणां वाचां क्रियाविधिं रचनाप्रकारं निबबन्धुः प्रबन्धरूपेण कृतवन्तः ॥ ९ ॥

२. इदानीं शास्त्रनिश्चयद्वारेणैव विदुषां प्रवृत्तिरित्याह—अत इति। अभिसन्धाय उद्दिश्य । विचित्रमार्गाणां नानाविधार्थप्रकाशकानाम् ; क्रियाविधिं विधानम् ॥ ९ ॥

**तैः शरीरं च काव्यानामलङ्काराश्च दर्शिताः ।**

१. तैः सूरिभिः शरीरं च काव्यानां प्रदर्शितम् अर्थावच्छिन्नवर्णानुपूर्वीरूपम् । तथा न केवलं शरीरमेव , अलङ्कारश्चोपमारूपकादिर्दर्शितः । तयोर्द्वयोः शरीरमिव शरीरम् । अलङ्काराधारत्वात् । तद्व्याचष्टे—

**शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली ॥ १० ॥**

तावच्छब्दः क्रमे वर्तते । अथ किं शरीरमित्याह—इष्टः अभिवाञ्छितोऽभिधातुर्योऽर्थः तेन व्यवच्छिन्ना उपेता पदानां नामाख्यातोपसर्गनिपातानामावली परिपाटी सा शरीरम् ॥ १० ॥

२. एवं पूर्वेषां काव्यलक्षणारम्भसामर्थ्यतः आदावेव स्वप्रवृत्तेर्विषयो दर्शितः । इदानीं पूर्वाचार्यदर्शितं काव्यशरीरमाह—तैरिति । शरीरं तावदिति । धर्मिणि सति धर्माणामभिधानमिति प्रथमं काव्यशरीरमभिधीयते , पश्चादलङ्कार इत्यर्थः । अलङ्कार्यं काव्यशरीरम् इष्टार्थव्यवच्छिन्ना पदावली विवक्षितार्थपरिच्छिन्नः शब्दसन्दर्भः ; यथा रामचरिते विवक्षिते—ब्रह्मादिभिर्देवैरर्थितो लक्ष्मीपतिर्दशरथस्य चतुर्धा पुत्रत्वमवाप्नोति रामावतारनाम्नः प्रबन्धस्य , कैकयीवरदाननिभेन दशरथेन वनवासायादिष्टस्य राघवस्य विराधवधादिरावणवधान्तोक्तिः रघुवीरचरितनाम्नः काव्यस्य, शरीरम् । एवं कृष्णस्य चरिते कंसवधरुक्मिणीकल्याणादि ॥ १० ॥

३. लक्षणविद्भिः पूर्वाचार्यैः काव्यानां स्वरूपं च अलङ्काराश्च दर्शिताः ; तयैव दृशा वयमपि दर्शयाम इत्याह—तैरिति । विवक्षितार्थस्य अन्यूनानतिरेकतास्वरूपेण प्रतिपादनसमर्था पदावली काव्यशरीरं भवति ॥ १० ॥

१. इदानीं काव्यशरीरभेदाः कति भवन्तीत्याह—

**पद्यं गद्यं च मिश्रं च तत् त्रिधैव व्यवस्थितम् ।**

पद्यं गद्यं च मिश्रं च तत् काव्यशरीरं त्रिधैव व्यवस्थितम् । पद्यस्वरूपं निरूपयति—

**पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ॥ ११ ॥**

चत्वारः पादाः अस्या इति चतुष्पदी । इत्युक्तं यत् तत् वृत्तं समार्धसमविषमभेदेन, तथा जातिर्मात्रानियमेनेत्येवं द्विप्रकारम् । वृत्तं छन्दोभेदात् भिद्यते ॥ ११ ॥

२. तत् काव्यशरीरं त्रिविधमित्याह—**पद्यमिति** । पद्यलक्षणमाह—**पद्यं चतुष्पदी** इति । अत्र पादपर्यायः पदशब्दः । चतुर्णां पदानां समाहारश्चतुष्पदी । चतुष्पदीति पद्यलक्षणं प्रायिकत्वादुक्तम् ; द्विपदीपञ्चपदीषट्पदीनामपि दृश्यमानत्वात् । पादश्चतुर्थो भागः इति च लक्षणं प्रायिकत्वात् ; आर्यासु अर्धसमविषमेषु च न्यूनाधिकाक्षरदर्शनात् । विपुलाचूलिकादिषु विपुलायां यतिमात्रं निषिद्धं त्रिषु गणेषु ; चूलिकार्धमेकोनत्रिंशदित्यर्धस्य लक्षणकथनेऽपि एकाक्षरन्यूनाधिकभावेन पादः कल्पनोयः । पद्यं विविधमित्याह—**तच्चेति** । वर्णसंख्यया गुरुलघुनियमेन च प्रवृत्तं छन्दोवृत्तम् ; मात्रागणनेन वृत्तं जातिः ॥ ११ ॥

३. उक्तस्य शरीरस्य प्रमाणमाह—**पद्यमिति** । वृत्तानि मन्दाक्रान्तादीनि । जातयो वैतालीयादयः ॥ ११ ॥

**छन्दोविचित्यां सकलस्तत्प्रपञ्चो निदर्शितः ।**
**सा विद्या नौर्विविक्षूणां गम्भीरं काव्यसागरम् ॥ १२ ॥**

१. सर्वोऽप्यक्षरगणनियमो वृत्तं मात्रानियमस्तु जातिरिति छन्दोविचित्यां छन्दांसि उक्तात्युक्तामध्यादिभेदानि विचीयन्ते यस्यां सा छन्दोविचितिः, तस्यां तत्प्रपञ्चः वृत्तजातिलक्षणप्रपञ्चो निदर्शितः । सा विद्या छन्दोविचितिः नौरिव नौः विविक्षूणामवतारितुमिच्छतां गम्भीरं काव्यमेव सागरस्तमिति ॥ १२ ॥

२. वृत्तावान्तरजातिभेदलक्षणानि विस्तीर्णत्वान्नेह प्रपञ्च्यन्ते, छन्दोविचित्यां द्रष्टव्यानीत्याह—**छन्दोविचित्यामिति** । सकलस्तत्प्रपञ्चो वृत्तजातिप्रपञ्चः । वर्णच्छन्दांसि षड्विंशतिः, दण्डकाश्च बहवः, अर्धसमवृत्तानि, गणजातिर्नगणजातिश्चेति छन्दःप्रपञ्चः छन्दोविचित्यां पिङ्गलनागेन दर्शितः पर्यालोचनीयः । सा विद्या कवेरवश्यं शिक्षणीयेत्याह—**सा विद्येति** । गम्भीरं काव्यसागरं विवक्षूणां सा नौर्भवति । विवक्षूणां वहतेः सन्; विवक्षूणां तरितुमिच्छूनामित्यर्थः । काव्यस्य पारगमनं विवक्षितं न तु अन्तःप्रवेशः । नौः प्रवहणं पोतपात्रम्; तेन समुत्तीर्यते । विविक्षूणामित्यपपाठः ॥ १२ ॥

३. एषां विशेषः छन्दोविचित्यां वक्ष्यन्त इत्याह—**छन्दोविचित्यामिति** ॥ १२ ॥

१. ननु चेह मुक्तकादीनां लक्षणाद्यनभिधानात् न्यूनं काव्यलक्षणप्रणयनमित्याशङ्कायामाह—

**मुक्तकं कुलकं कोशः संघात इति तादृशः ।**
**सर्गबन्धांशरूपत्वादनुक्तः पद्यविस्तरः ॥ १३ ॥**

१. मुक्तकमित्यादि । सर्गबन्धांशरूपत्वात् तादृशो मुक्तकादिः पद्यविस्तरः पृथङ्नोक्तः, तस्य सर्गबन्धमहाकाव्यलक्षणादेव गतार्थत्वात् । तथा हि–मुक्तकमेकं सुभाषितमुच्यते; यथा–'सहसा विदधीत न क्रियाम्' इत्यादि । कुलकं द्विप्रभृतिश्लोकानामेकवाक्यभावेन प्रधानक्रियायामुपसंहारः ; यथा 'मृणालिनीनामनुरञ्जितं त्विषा' इत्यत आरभ्य 'प्रकुर्वते वारिदरोधनिर्गताः परस्परालापमिवामला दिशः' इति । कोशोऽप्यनेकभिन्नार्थकथाग्रथितः कथाकोशः कृष्णसारः तारागण इति । सङ्घातोऽप्यसर्गसन्धोऽभिमतैकवस्तुनिरूपणप्रवणः, यथा द्रविडसङ्घातमेघदूतसूर्यशतकादिः । एतौ कोशसङ्घातावपि सर्गबन्धांशरूपौ । तथा भारते अनेककथाप्रपञ्चो हिमवत्पर्वतवर्णनं चेति कोशसङ्घातौ ॥ १३ ॥

२. मुक्तकादयो भेदाः सर्गबन्धांशभूतत्वात् न प्रथमं कांक्षिता इत्याह—मुक्तकमिति । मुक्तकमितरानपेक्षमेकं सुभाषितम् । कुलकमेकक्रियान्वितानि पञ्चषाणि पद्यानि । कोशो नानाकर्तृकसुभाषितरत्नसमुदयः । सङ्घातः एकार्थविषयः एककर्तृकः पद्यसङ्घातः, शरत्सङ्घातद्रमिडसङ्घातादिवत् ॥ १३ ॥

३. मुक्तकमित्यादि । मुक्तकं वाक्यान्तरनिरपेक्षो यः श्लोकः । कुलकं नाम पद्यस्यैवांशभूतम् । एकस्मिन् प्रबन्धे आदिमध्यान्तगतक्रिया सर्वत्रोपकारकत्वेनाद्रियते चेत् तत् कुलकम् । एकस्मिन्नेव प्रयोजने प्रवृत्ता नानाविधाः श्लोका भवेयुश्चेत् तथाविधानां समूहः सङ्घातः । एवंविधो यो भेदः पद्यविस्तरः स सर्गबन्धस्यांशरूपेणाद्रियमाण इति नोक्तः ॥ १३ ॥

**सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम् ।**
**आशीर्नमस्क्रियावस्तुनिर्देशो वाऽपि तन्मुखम् ॥ १४ ॥**

१. सर्गबन्धो महाकाव्यम् । उच्यते तस्य महाकाव्यस्य लक्षणं लक्ष्यतेऽनेनेत्यसाधारणो धर्मो लक्षणम् । अथ तस्य कति वा मुखानि भवन्तीत्याह । तत्राशीरिष्यमाणार्थाशंसनमाशीः । यथा–

**सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम् ।**
**आशीर्नमस्क्रिया वस्तुनिर्देशो वाऽपि तन्मुखम् ॥**

१. सर्गबन्धो महाकाव्यम् । उच्यते तस्य महाकाव्यस्य लक्षणम् । लक्ष्यतेऽनेनेत्यसाधारणो धर्मो लक्षणम् । अथ तस्य कति वा मुखानि भवन्तीत्याह । तत्रेष्टाविद्यमानार्थाशंसनमाशीः । यथा—

श्रियं जगद्बोधविधौ विहायसि
व्यदीपि नक्षत्रमिवैकमुद्गतम् ।
स यस्य वस्तीव रथस्य सूनुः (?)
प्रवर्तको नेमिरनश्वरीं क्रियात् ॥

इति । नमस्क्रिया यथा—

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥

इति शिवयोर्नमस्कारः । वस्तुनिर्देशोऽपि कथानिर्देशः ; यथा–

श्रियःपतिः श्रीमति शासितुं जग-
ज्जगन्निवासो वसुदेवसद्मनि ।
वसन् ददर्शावतरन्तमम्बरा-
द्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥

इति कथानायकस्य हरेरादावभिधानमिति ॥ १४ ॥

१. कुतः पुनस्तस्योत्पत्तिरिति । आह—

**इतिहासकथोद्भूतमितरद्वा सदाश्रयम् ।**
**चतुर्वर्गफलायत्तं चतुरोदात्तनायकम् ॥ १५ ॥**

**नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः ।**
**उद्यानसलिलक्रीडामधुपानरतोत्सवैः ॥ १६ ॥**

विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः ।
मन्त्रदूतप्रयाणाजिनायकाभ्युदयैरपि ॥ १७ ॥

अलंकृतमसंक्षिप्तं रसभावनिरन्तरम् ।
सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः सुसन्धिभिः ॥ १८ ॥

सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जनम् ।
काव्यं कल्पान्तरस्थायि जायेत सदलंकृति ॥ १९ ॥

पुरावृत्तमितिहासः, ततः उत्पन्नम् । न केवलं तदेव, तथा इतरद्वा सदाश्रयम् अन्यद्वा शोभनाश्रयम् । चतुर्वर्गफलायत्तं धर्मार्थकाममोक्षफलाधीनम् । चतुरोदात्तनायकं चतुरो विदग्धः उदात्तः शौर्यत्यागादिगुणयुक्तो नायको यत्र तत् । तथा नगरादिवर्णनैः उद्यानसलिलयोः क्रीडया मधुपानरतोत्सवेन च विप्रलम्भेन वञ्चनया विवाहेन च तथा कुमारोदयवर्णनेन मन्त्रदूतप्रयाणाजिनायकाभ्युदयैरपि अलंकृतम् । असंक्षिप्तम् । रसभावनिरन्तरं रसाः शृङ्गारादयोऽष्टौ, शान्तश्च नवम इत्यपरे, भावाः हासरतिशोकादयोऽष्टौ स्थायिनः सञ्चारि(?)व्यभिचारिभेदाः चतुस्त्रिंशत, तैर्निरन्तरम् । सर्गैरित्यादि । पूर्वोत्तरघटनयुक्तैः सर्वत्र सर्गेषु भिन्नवृत्तान्तैः नानाच्छन्दोविचित्रान्तैरुपेतम् लोकरञ्जनं काव्यं कल्पान्तरस्थायि जायेत सदलंकृति ॥ १५—१९ ॥

२. सर्गबन्धलक्षणमाह—सर्गबन्धो महाकाव्यमिति । महत्त्वादस्यैव लक्षणं क्रियत इति । तदाह—आशीरित्यादिसदलंकृतीत्यन्तेन । अप्राप्तस्य वस्तुनः प्राप्तुमिच्छा आशीः । नमस्क्रिया नमस्कारः; वन्दे इति, उपास्महे इति, ध्यायामः इति, जयति इति च तत्पर्यायाः । वस्तुनिर्देशः इतिवृत्तस्य संक्षेपेणोक्तिः नायकोपन्यासो वा । तेष्वेकतमः काव्यशरीरस्य मुखं आरम्भो भवति । इतिहासो महाभारतादिः, तत्रोद्भूतं; कथा बृहत्कथा, तत्रोद्भूतं वा; इतरद्वा लोकसिद्धं स्वबुद्धिकल्पितं वा । सदाश्रयं

चातुर्वर्ण्योद्भूतश्लाघ्यचरितनायकाश्रयम् । चतुर्वर्गफलायत्तं धर्मार्थकाममोक्षेष्वन्यतमाधीनम् । चतुरोदात्तनायकं विदग्धोदारनायकम् । नगरार्णवादिवर्णनैः ; उद्यानक्रीडादिभिः ; विप्रलम्भैः वियोगचेष्टितैः ; विवाहैः सम्भोगचेष्टितैः ; कुमारोदयवर्णनैः पुत्रार्थतपश्चरणदौहृदवर्णनबालक्रीडादिभिः—मन्त्रणं मन्त्रः कार्यविचारः, दूतः दूतसंप्रेषणम्, प्रयाणं चतुरङ्गबलेन जयार्थं यात्रा, आजिः समरः, नायकाभ्युदयः नायकविजयः—एभिरङ्गैरलंकृतं शोभितम् । असङ्क्षिप्तं असङ्कोचितम् । रसभावनिरन्तरं रसैः शृङ्गारादिभिः, भावैः व्यभिचार्यादिभिश्च, निरन्तरम् । अनतिविस्तीर्णैः—एकार्थप्रतिपादकः सर्गः ; तस्य अतिविस्तारे अभिनवार्था बहवो लभ्येरन् ; अतः अनतिविस्तीर्णैः । श्राव्यवृत्तैः पथ्यावक्त्रेन्द्रवज्रोपेन्द्रवज्रावंशस्थप्रहर्षिणीवसन्ततिलकमालिनीप्रमुखश्रुतिमधुरवृत्तैः । सुसन्धिभिः श्रुतिपरुषसन्धिरहितैः ; अथ वा काव्यप्रयोजनभूतैकपुरुषार्थप्रवृत्तस्य नायकस्य प्रारम्भयत्नप्राप्त्याशानियताप्तिफलागमसन्धियुक्तैः ; यद्वा मुखप्रतिमुखादिपञ्चसन्धियुक्तैः । सर्वत्र सर्वेषु सर्गेषु । भिन्नवृत्तान्तैः—तत्तत्सर्गविहितपूर्वभिन्नानि वृत्तानि येषां ते—तैः सर्गैः ; उपेतम् । सदलंकृति स्वभावाख्यानाद्यलङ्कारवत् । ईदृशं काव्यं लोकरञ्जनं कल्पान्तरस्थायि च जायेत ॥ १५-१९ ॥

२. उक्तस्य सर्गबन्धस्य स्वरूपं लक्षणं च प्रदर्शयितुमाह—**सर्गबन्ध** इति । महाकाव्यम्—नायकगौरवं ग्रन्थस्य महत्त्वं च यस्मिन् अस्ति, तेन सर्गबन्धेन भवितव्यम् । कानि तानि लक्षणानि इति आशङ्कायां आह—आशीरित्यारभ्य सदलंकृतीत्येतदन्तं काव्यसमुदायलक्षणम् । रमताम्, (वि?)जयताम्, इत्यादिः आशीः । वन्दे, नमामि, नमः, इत्यादिः नमस्क्रिया । आसीत्, अभूत्, अस्ति, इत्यादिः वस्तुनिर्देशः ।

वा-शब्दो विकल्पे ; एषां अन्यतमेन काव्यारम्भे भवितव्यम् । इतिहासकथोद्भूतम्—भारतरामायणादिषु एकां कथां आश्रित्य प्रवृत्तम् । सदाश्रयम्—हर्षशूद्रकोदयनादिसत्पुरुषसमाश्रयम् । चतुर्वर्गफलायत्तम्—धर्मार्थकाममोक्षेषु अन्यतमाधीनं कृत्स्नाधीनं वा । चतुरोदात्तनायकम्—चतुरः कुशलः, उदात्तः वंशवीर्यादिभिः प्रथितः ; एवंविधनायकोपेतम् । विप्रलम्भैः वञ्चनादिभिः , विप्रलम्भशृङ्गारादिभिः वा । दूतशब्देन दूतस्य कार्थमुच्यते । नायकाभ्युदयैः—नायकस्य जयादिसिद्धिः अभ्युदयः । असङ्क्षिप्तम् इति न सङ्क्षेपमात्रमत्र प्रतिषिद्धम् ; अतिविस्तरोऽपि नेष्टः—अतिसङ्क्षेपातिविस्तराभ्यां रहितम् । रसभावनिरन्तरम्—रसाः शृङ्गारादयः, भावाः रत्यादयः ; तैः श्लक्ष्णम् । सर्गैः सर्गाध्यायपरिच्छेदादिभिः ; अनतिविस्तीर्णैः सङ्कोचविस्ताराभ्यां रहितैः । सुसन्धिभिः–सन्धयः पञ्च मुखप्रतिमुखगर्भावमर्शनिर्वहणानि इति ; एते काव्यस्य नाटकस्य वा सर्वशरीरोपयोगभूताः । रसानुबन्धकरी बीजस्योक्तिः यत्र क्रियते तत् मुखत्वेन अभिहितम् ; उक्तमुखस्य यत्र प्रकाशनं क्रियते तत् प्रतिमुखम् ; तस्यैव बीजस्य दृष्टनष्टत्वप्राप्तौ सत्यां पुनर्निभृतरूपबीजवापनं तस्य फलभाक्तिमार्गे (?) गर्भसंज्ञितम् ; गर्भनिर्भिण्णबीजस्य विलोपेन वा संश्लेषेण वा यत्र उपयोगः क्रियते सः अवमर्शः ; मुखाद्यानां अर्थानां एकत्र समाहारः निर्वहणाय समापनाय यत्र भवति तत् निर्वहणम्—एभिः युक्तम् । भिन्नसर्गान्तम्—पूर्वस्मात् वृत्तात् अन्तवृत्तम् यत्र भिन्नं तत् भिन्नसर्गान्तम्॥ १९॥

न्यूनमप्यत्र यैः कैश्चिदङ्गैः काव्यं न दुष्यति ।
यद्युपात्तेषु सम्पत्तिराराधयति तद्विदः ॥ २० ॥

१. न्यूनमप्यत्र यैः कैश्चित् नगरादिवर्णनैरङ्गैः काव्यं तदपि न दुष्यति । किं यदि स्यादित्याह—यदि उपात्तेष्वङ्गेषु केषुचित् सम्पत्तिः पूर्णता आराधयति तद्विदः ॥ २० ॥

२. नगरार्णवाद्यङ्गेषु कानिचिदङ्गानि येषु न दृश्यन्ते तेषां अङ्ग-वैकल्यात् किं दुष्टत्वम् ? नेत्याह—न्यूनमिति । उपात्तेषु कविना आहितेषु अङ्गेषु गुणालङ्कारातिशयः काव्यविदां चेतश्चमत्कारं करोति चेत्, अङ्गवैकल्यं न दोषाय ॥ २० ॥

३. न्यूनमिति । यैः कैश्चिदङ्गैः हीनमपि न दुष्यति, अपि तु स्वीक्रियत एव । कैश्चिदिति उदासीनोक्तिरियम् ; लोकानुग्रहतया अप्रमुक्तैः (?) सर्वैरङ्गैर्भवितव्यम् इत्यभिप्रायः। तद्विदः—लक्षणविदः रसविदः पण्डितान्—आराधयति चेत् ॥ २० ॥

**नायकं प्रागुपन्यस्य गुणतस्तेन विद्विषाम् ।**
**निराकरणमित्येष मार्गः प्रकृतिसुन्दरः ॥ २१ ॥**

१. नायकं प्रागुपन्यस्य गुणतः गुणैः 'प्रकृत्यादेरुपसंख्यानम्' इति तृतीया, तस्यास्तसिल् । तेन प्रागुपन्यस्तेन नायकेन विद्विषां निराकरणमित्येष मार्गः प्रकृतिसुन्दरः स्वभावरमणीयः ॥ २१ ॥

**वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि ।**
**तज्जयान्नायकोत्कर्षकथनं च धिनोति नः ॥ २२ ॥**

१. न केवलं नायकमेव प्रागुपन्यस्य, तथा रिपोरपि वंशवीर्यश्रुतादीनि वर्णयित्वा तज्जयादेवंविधरिपुजयात् नायकोत्कर्षकथनं च नायकाधिक्यप्रतिपादनं च धिनोति नः प्रीणयतीति वदन् भामहमतमाक्षिपति । तदुक्तम्—

'नायकं प्रागुपन्यस्य वंशवीर्यश्रुतादिभिः ।
तस्यैव न वधं ब्रूयादन्योत्कर्षाभिधित्सया ॥
यदि काव्यशरीरस्य न स व्यापितयेष्यते ।
न चाभ्युदयभाक्तस्य मुधादौ ग्रहणं स्तवे ॥'

इति ॥ २२ ॥

२. इतिवृत्तभेदेन प्रबन्धद्वैविध्यमाह—गुणतः इति ॥ २१-२२ ॥

३. गुणत इति । नायकगुणतः विद्यावीर्यौदार्यदाक्षिण्यादिभिः । प्रकृतिसुन्दरः स्वभावरमणीयः । पूर्वाचार्यमतमुपन्यस्य आत्मनो मतमाह—वंशेति । धिनोति नः अस्मान् प्रीणयति । अपिना नायकस्येवेति । चशब्देन पूर्वोक्तमपीति यावत् ॥ २१-२२ ॥

१. तदेवं पद्यात्मकं काव्यशरीरं व्याख्याय गद्यात्मकमाह—

**अपादः पदसन्तानो गद्यमाख्यायिका कथा ।**
**इति तस्य प्रभेदौ द्वौ तयोराख्यायिका किल ॥ २३ ॥**

**नायकेनैव वाच्याऽन्या नायकेनेतरेण वा ।**
**स्वगुणाविष्क्रियादोषो नात्र भूतार्थशंसिनः ॥ २४ ॥**

अपादः पदसन्तानो गद्यम्, छन्दोभिरनिबद्धः पदानां सुप्तिङन्तानां सन्तानः समूहो गद्यमुच्यते । तस्य गद्यस्य द्वौ प्रभेदौ । कौ तावित्याह—आख्यायिकेत्येकः, कथेति द्वितीयः । तयोर्मध्ये आख्यायिका किलेत्यक्षमयाऽनुवादः । नायकेनैव वाच्या, नापरेण । अवधारणार्थ एवकारः । तदुक्तं भामहेन—

प्रस्तुतानाकुलश्रव्यशब्दार्थपदवृत्तिना ।
गद्येन युक्तोदात्तार्था सोच्छ्वासाख्यायिका मता ॥
वृत्तमाख्यायते तस्यां नायकेन स्वचेष्टितम् ।'

कथा नायकादन्येनैव वाच्या, न नायकेन स्वयम् । तदुक्तम्—

'न वक्त्रापरवक्त्राभ्यां युक्ता नोच्छ्वासवत्यपि ।
संस्कृता प्राकृता चेति कथाऽपभ्रंशभाक्तथा ॥
अन्येन चरितं तस्यां नायकेन तु नोदितम् ।
स्वगुणाविष्कृतिं कुर्यादभिजातः कथं जनः ॥'

इति नियमं निरसकर्तुमिदमाह—अन्या कथा नायकेन इतरेण वा । वाशब्दो वक्तृविषयमनादरं प्रदर्शयति । तत्र नायकः कथं स्वयं गुणख्यापनं कुर्यादित्यत्राह—स्वगुणाविष्क्रिया दोषो नात्र । स्वयं स्वकीयगुणकीर्तनं नायकस्य कथायां न दोषः भूतार्थशंसिनः, भूतं सत्यमर्थं शंसति यः तस्य । स्वस्यासतो गुणानध्यारोप्य कथयतो दोषः, न स्वस्वरूपानुवाद इति ॥ २३--२४ ॥

२. श्लोकद्वयेन गद्यलक्षणमाह—अपाद इति । पादरहितः पदसन्दर्भो गद्यम् । भामहेन गद्यस्य द्वौ भेदौ दर्शितौ; तौ उपन्यस्यति । आख्यायिका कथा इति तस्य प्रभेदौ द्वौ; तयोः आख्यायिका किल नायकेनैव वाच्या । काव्ये खलु नायकस्य स्वगुणवर्णनं दोषाय इत्याशंक्य आह—स्वगुणेति । आख्यायिकायां च नायकस्य स्वगुणाविष्क्रियादोषो न भवति । अन्यूनानतिरिक्तस्वचरितकथनेन विकत्थनराहित्यात् नेयमत्र दोषः ॥ २३--२४ ॥

३. पद्यमुपन्यस्य गद्यप्रकारमाह—अपाद इति । अपादः पादरहितः पदानां सन्तानः श्रेणी गद्यत्वेन अभिमतः । सा गद्यसन्ततिः आख्यायिका कथा इति द्विप्रकारा । तयोः आख्यायिकाकथयोः । आख्यायिका किल इति आचार्याणां मतभेदं दर्शयितुमाह । किलेति । अपरमार्थे, स्वपक्षे भेदो नास्ति इति । पूर्वाचार्यमतमाह—नायकेनेति । आख्यायिका नायकेन, कथानायकेन वा अन्येन वा, वाच्या । आख्यायते अनेन इति आख्यायिका । अत्र आख्यायिकाकथयोः आत्मप्रशंसादोषो न स्यात् । भूतार्थशंसिनः—भूतं अतिक्रान्तं अर्थं शंसितुं शीलं यस्य तस्य; भूतार्थशंसित्वात् दोषो नास्ति ॥ २३--२४ ॥

अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात् ।<br>
अन्यो वक्ता स्वयं वेति कीदृग्वा भेदकारणम् ॥ २५ ॥

१. अनियमो दृष्टः । आख्यायिका स्वयं नायकेनैव वाच्या नान्येनेत्ययं नियमो न दृष्टः ; यतस्तत्राप्यन्यः । न केवलं कथायां तथा , आख्यायिकायामपि अन्यैरुदीरणात् नायकादपरैरभिधानात् । अपरं च—अन्यो वक्ता स्वयं वेति कीदृक् भेदकारणम् ? कोऽयं कथाऽऽख्यायिकयोर्भेदहेतुः ॥ २५ ॥

२. अपि तु दोषान्तरमस्तीति आह—अपि त्विति । नायकेनैव वाच्यतानियमो न दृष्टः । तत्रापि आख्यायिकायामपि , अन्यैः नायकात् अन्यैः , हर्षचरितादौ भट्टबाणादिभिरपि , उदीरणस्य दृष्टत्वात् । दूषणान्तरमाह—अन्य इति । वक्तृभेदमात्रस्य प्रबन्धजातिभेदे अहेतुत्वात नास्त्येव भेदकारणम् ॥ २५ ॥

३. तेषां मतं दूषयति—अपि त्विति । तु-शब्दः पक्षान्तरं व्यावर्तयति ; अपि-शब्दो यद्यर्थे । तत्र कथापक्षेऽपि अन्यैः उदीरणात् नायकेन उदीरणाद्वा अनियमो दृष्टश्चेत् , अन्यो वक्ता स्वयं वेति उभयोः काव्यभेदे कारणत्वं कीदृशम् ? नास्तीति अर्थः । उभयोः भेदकारणत्वं संज्ञापपादकं इति यावत् ॥ २५ ॥

१. पुनरपि कथाख्यायिकयोः परोपगतं भेदमाशंक्यापाकरोति—

**वक्त्रं चापरवक्त्रं च सोच्छ्वासत्वं च भेदकम् ।**
**चिह्नमाख्यायिकायाश्चेत्**

वक्त्रम् अपरवक्त्रमिति द्वौ वृत्तभेदौ । तदुभयं यस्यामस्ति तथा योच्छ्वासाङ्किता सा आख्यायिका । तदुक्तम्—'वक्त्रं चापरवक्त्रं च काले भाव्यर्थशंसि च'

इति । अत्रोच्यते—

**प्रसङ्गेन कथास्वपि ॥ २६ ॥**

**आर्यादिवत् प्रवेशः किं न वक्त्रापरवक्त्रयोः ।**
**भेदश्च दृष्टो लम्भादिरुच्छ्वासो वास्तु किं ततः ॥ २७ ॥**

१. न केवलमाख्यायिकासु कथास्वपि आर्यादिवत् आर्यादिरिव वक्त्रापरवक्त्रयोः प्रवेशः किं न स्यात् । तथा कथायां दृष्टो लम्भादिर्भेदो मन्दारवतीलम्भो रतिलम्भ इति सोऽपि न भेदक इत्याह—उच्छ्वासो वाऽस्तु । कथायामपि न केवलं लम्भः, तथा उच्छ्वासो वा भवतु । किं ततः ? ततो नाममात्रेण न भेदो भवेदित्यर्थः ॥ २७ ॥

२. ननु स्वरूपेऽपि भेदोऽस्ति, स्थाने स्थाने भाव्यर्थवाचिनोः वक्त्रापरवक्त्रयोः सत्त्वात्, उच्छ्वासशब्दनिर्देशेन मध्ये मध्ये पर्यवसानाच्च, इत्याह— वक्त्रमिति चेदन्तेन । दूषयति— प्रसङ्गेनेति । यथा 'स्तनयुगमश्रुस्नातम्' 'दूरं मुक्तालतया' इत्यार्या, 'पश्योदञ्चद्वाञ्चत्' इति शार्दूलविक्रीडितं च दृश्यते ; तथा वक्त्रापरवक्त्रयोः प्रवेशोऽप्यस्तु । कथायां तु क्वचित् लम्भ इति क्वचिदाश्वास इति च प्रयुज्यते ? तद्वत् उच्छ्वासोऽपि भवत्वस्याम् । एतानि न भेदहेतवः ॥ २६, २७ ॥

३. परस्यैव अभिप्रायप्रदानमुखेन तमेवार्थं दूषयति—वक्त्रमिति । सर्वास्वाख्यायिकासु वक्त्रापरवक्त्रे नाम द्वे वृत्ते प्रयुक्ते दृष्टे । आश्वाससमये आश्वास इति कविना प्रयुक्तं च दृष्टम् । एतदेव आख्यायिकाकथयोः आख्यायिकायाः चिह्नमिति वदसि चेत्, नैवेत्याह—कथास्विति । कथास्वपि परिच्छेदस्थाने आश्वास इति कविभिः प्रयुक्तो दृष्टः ; वक्त्रापरवक्त्रे च प्रसङ्गेन भवतः ; तस्मात् एतानि आख्यायिकालक्षणानि न भवन्ति इत्यर्थः । उक्तमेव अर्थं निदर्शनेन साधयति—आर्यादिवदिति । कथासु आर्यादीनां प्रयोगो यथा दृश्यते तथा वक्त्रापरवक्त्रयोः प्रयोगे का हानिः स्यात् । एवं दूषिते परवादी आह—भेदश्च इत्यादि । लम्भः, पटलः इत्यादि कथायां प्रयुक्तं दृष्टम् ; आश्वासः, परिच्छेदः इति च आख्यायिकायां प्रयुक्तो दृष्टः ; तस्मात् भेदोऽस्ति इति । परवादिकथां दूषयन्नाह—

आश्वासो वाऽस्तु किं ततः इति । तेन किं आयातं इत्यर्थः । परिच्छेदसमये आश्वासः , पटलः , लम्भ : काण्डः इति वा प्रयुक्ते कोऽपि अर्थभेदो न दृश्यत इति यावत् ॥ २६, २७ ॥

**तत्कथाख्यायिकेत्येका जातिः संज्ञाद्वयाङ्किता ।**
**अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातयः ॥ २८ ॥**

१. यतोऽयमनन्तरोक्तो न लक्षणभेदः , ततः कथाख्यायिकेत्येका जातिः संज्ञाद्वयाङ्किता । अत्रैवास्यामेवैकस्यां जातौ अन्तर्भविष्यन्ति । शेषास्त्वाख्यानजातयः कुसुममञ्जरीप्रभृतयः ॥ २८ ॥

२. भेदनिराकरणं उपसंहरति—तदिति । बहुनायकचरितरूपाः दशकुमारचरितवत् आख्यानशब्दवाच्याः प्रबन्धाः ; तेषामपि कथायामन्तर्भावः ॥ २८ ॥

३. इत्युभयोः भेदाभावं प्रसाध्य, तमेवार्थं निगम(न?)रूपेण उपसंहरति—तदिति । यस्मात् उक्तप्रकारेण भेदप्रतिपत्तौ प्रमाणं नास्ति, तस्मात् कथा आख्यायिका इत्येका जातिः— एकजातिरित्यर्थः । संज्ञाभेद एव अस्तीति यावत् । आख्यानजातयः शकुन्तलोपाख्यानादयः अत्रैव कथायामेव अन्तर्भविष्यन्ति ॥ २८ ॥

यदप्युक्तमाख्यायिकालक्षणम्—

'कवेरभिप्रायकृतैरङ्कनैः कैश्चिदङ्किता ।
कन्याहरणसंग्रामविप्रलम्भोदयान्विता ॥'

इति , तदपि न युक्तमित्याह—

**कन्याहरणसंग्रामविप्रलम्भोदयादयः ।**
**सर्गबन्धसमा एव न ते वैशेषिका गुणाः ॥ २९ ॥**

१. कन्याहरणादयोऽपि न विशेषकारिणः, किं तु सर्गबन्धसमाः । सर्गबन्धो महाकाव्यम् । तस्मिन्नपि सन्त्येव कन्याहरणादयः । ततो न कन्याहरणादिभिर्गुणैरुपेता आख्यायिका भवेत्, कन्याहरणादीनां साधारणत्वात् । असाधारणश्चान्यतो व्यतिरिक्तो धर्मो लक्षणम् ॥ २९ ॥

२. भामहेन 'कन्याहरणसंग्रामविप्रलम्भोदयान्विता' इति आख्यायिकाविशेषणतया उक्तम् । आख्यायिकाभेद एव अत्र निराकृतः । एतान्यङ्गानि गद्यप्रबन्धस्यैव असाधारणानि न, किं तु सर्गबन्धस्यापि साधारणानि इत्याह—कन्येति । नैते वैशेषिका गुणा इत्यत्र गुणशब्दः अप्रधानवाचित्वेन अङ्ग एव लक्षणया प्रयुक्तः । एतानि अङ्गानि सर्गबन्धस्यापि साधारणानीति वदन्ति । नगरार्णवाद्यङ्गानि स्वभावाख्यानादयोऽलङ्काराश्च प्रबन्धमात्रसाधारणानि इति दर्शितम् ॥ २९ ॥

३. एवं एकजातित्वं प्रसाध्य, गद्यात्मककाव्यस्य लक्षणमाह—कन्येति । कन्याहरणादीनि लक्षणानि सर्गबन्धस्य उक्तानि; तानि तेषामेव वैशेषिका गुणा न भवेयुः ; गद्याकृतीनामपि समानानि इत्यर्थः ॥२९॥

**कविभावकृतं चिह्नमन्यत्रापि न दुष्यति ।**
**मुखमिष्टार्थसंसिद्धौ किं हि न स्यात् कृतात्मनाम् ॥ ३० ॥**

१. कविभावकृतं चिह्नं कवेरभिप्रायकृतं चिह्नमन्यत्रापि कथायामपि न दुष्यति न दोषाय जायते । न च कवेरभिप्रायकृतात् चिह्नादेवाख्यायिकाकथयोर्भेदः, तस्य कविभावकृतस्य चिह्नस्यान्यत्रापि कथायामपि भावात् । मुखं उपायः । इष्टार्थावगमे अभिलषितार्थसंसिद्धौ वा किं न स्यात् किं न भवेत् कृतात्मनाम् ॥ ३० ॥

२. कवीति । कविबुद्धिकल्पितं अन्यदपि बन्धचिह्नं न दुष्यति ; शोभावहमित्यर्थः । यथा—सर्गान्ते माघेन श्रीशब्दः, भारविणा लक्ष्मी-

शब्दः, प्रवरसेनेन च अंशान्ते अनुरागशब्दः, हस्तिमल्लेन च लम्भान्ते लम्भशब्दः, इत्यादि । तत्र हेतुमाह—कृतात्मनां शिक्षितबुद्धीनां इष्टार्थसंसिद्धौ किं लोकरञ्जकं मुखं उपायो न भवति ॥ ३० ॥

३. उक्तलक्षणादन्यदपि कविभिरलङ्काररूपेण ऊह्यते ; तदपि दोषाय न भवति इत्याह—कवीति । भावः अभिप्रायः ॥ ३० ॥

१. गद्यात्मकं काव्यशरीरमभिधाय मिश्रमभिधातुमाह—

**मिश्राणि नाटकादीनि तेषामन्यत्र विस्तरः ।**
**गद्यपद्यमयी काचिच्चम्पूरित्यभिधीयते ॥ ३१ ॥**

मिश्राणि नाटकादीनि गद्यपद्यमयानि च नाटकनाटिकाप्रहसनभाणादीनि । तेषामन्यत्र भरतादिनाट्यशास्त्रे दशरूपके च निर्णयः । ततः नाटकादीनि निश्चीयन्ताम् । तथा गद्यपद्याभ्यां निर्वृत्ता चम्पूरित्यपि काचिदस्ति । सा च मिश्रकाव्यशरीरे ऽन्तर्भवति, न पृथक् काव्यशरीरमिति । अनेन काव्यशरीरलक्षणं नाव्याप्तिदोषदुष्टमित्युक्तं भवति ॥ ३१ ॥

२. मिश्रं दर्शयति । मिश्राणि गद्यपद्यमिश्राणि नाटकादीनि—'नाटकं सप्रकरणं भाणः प्रहसनं डिमः । व्यायोगसमवाकारौ वीथ्यङ्केहामृगा दश' इति दश रूपकाणि । तेषां अन्यत्र भरते विस्तरः । तल्लक्षणानि तत्रैव द्रष्टव्यानि इत्यर्थः । न केवलं नाटकादीन्येव मिश्रप्रबन्धाः, चम्पूसंज्ञकोऽपि कश्चिदस्तीत्याह—गद्यपद्यमयीति ॥ ३१ ॥

३. एवं गद्यपद्यलक्षणं प्रसाध्य, तयोः यानि लक्षणानि उक्तानि तान्येव मिश्रकाव्यस्य लक्षणानि भवेयुः इत्यमुमेवार्थं संहृत्य मिश्रस्य स्वरूपं दर्शयितुमाह—**मिश्राणीति** । संस्कृतपैशाचाद्यैः भाषाविशेषैः गद्यपद्यैश्च ग्रथितानि यानि मिश्राणीत्युच्यन्ते तानि नाटकादीनि । तेषां नाटकव्यायोगप्रकरणभाणादीनां विस्तरः शास्त्रान्तरे भरतादिभिः प्रणीते द्रष्टव्यः । इदानीं

काव्यलक्षणस्य प्रस्तुतत्वात् नेह तेषां लक्षणमुच्यते । संस्कृतस्यैवापि गद्यपद्यमयताऽस्तीति आह—गद्यपद्येति ॥ ३१ ॥

**तदेतद्वाङ्मयं भूयः संस्कृतं प्राकृतं तथा ।**
**अपभ्रंशश्च मिश्रं चेत्याहुरार्याश्चतुर्विधम् ॥ ३२ ॥**

१. तदेतदनन्तरोक्तं वाङ्मयं गद्यं पद्यं मिश्रं च त्रिविधमपि भूयः संस्कृतप्राकृतापभ्रंशमिश्रभेदाच्चतुर्धा चतुर्भिः प्रकारैः भिद्यते ॥ ३२ ॥

२. भाषाभेदात् प्रबन्धचातुर्विध्यमाह—तदिति ॥ ३२ ॥

३. एवं गद्यपद्यमिश्रवशेन काव्यनाटकादीनां त्रैविध्यं प्रसाध्य, इदानीं गद्यपद्यमिश्रात्मकानां काव्यादीनां समानरूपतया उपयुज्यमानेषु भाषाविशेषेषु पूर्वाचार्यैः प्रदर्शितान् विशेषान् विस्तरेण अनुसन्धत्ते—तदिति । आप्ताः चतुर्विधमित्याहुः ॥ ३२ ॥

१. तदेवं संस्कृतादीनुद्दिश्य स्वयं व्याचष्टे—

**संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः ।**
**तद्भवस्तत्समो देशीत्यनेकः प्राकृतक्रमः ॥ ३३ ॥**

संस्कृतं नाम दैवी वाक्; देवा इन्द्रादयः, तेषामियं दैवी, महर्षिभिः ब्रह्मादिभिरन्वाख्याता । तद्भवं तस्मात् संस्कृतात् उत्पन्नं संस्कृतयोनि प्राकृतमेकम् । यथा—वत्सः वच्छो । राजा राआ । तत्समं संस्कृतेन समम् । यथा—तमालं कुवलयं धम्मिल्लचिकुरभारादि । देशी देशाख्या । यथा—नेसरो सूरो भमिओ विण्ण इत्यनेको भाषाभेदात् प्राकृतक्रमः ॥ ३३ ॥

२. तत्र संस्कृतस्य लक्षणमाह—संस्कृतमिति । दैवी देवैर्व्याहृता, इह लोके महर्षिभिः अन्वाख्याता संस्कृतम् इति । महाराष्ट्रादिदेशभाषा प्राकृतम्; प्रकृतेः संस्कृतात् आगतम् इति । तत्र त्रिविधम्—

तद्भवम् , तत्समम , देशी इति । प्राकृतं प्रकृतिप्रत्ययादिव्युत्पत्तिमत् संस्कृतम् ; ततः आगतमिति वा प्राकृतशब्दस्य व्युत्पत्तिः । अभ्युद्गमोत्पत्तिमत् देश्यम् ; तदपि प्राकृतमिति व्यपदिश्यते । तत्र तद्भवं प्राकृतं यथा—णमह , आवडिआ , इत्यादि । तत्समं संस्कृतसमं यथा—तलुनी, आसुरा , इत्यादि । देशी इति मागधी गृह्यते ॥ ३३ ॥

३. संस्कृतमिति । संस्कृतमिति अन्वाख्याता । इति-शब्दः प्रकारवाची । तद्भवं संस्कृतभवम्—छेत्तम् , मज्झे , रुक्खो , इत्यादि । तत्समं तेन संस्कृतेन समम्—कीरः, अम्बा, गौः, इत्यादि । देशी—पोव्वळ्ळी इति क्रमुकनाम, चरिंससी इति काञ्चनस्य नाम , दोग्घट इति गजस्य नाम । इत्यनेकप्रकारः प्राकृतविन्यासः ॥ ३३ ॥

१. तत्रोत्कृष्टं किं प्राकृतमित्याह—

**महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः ।**
**सागरः सूक्तिरत्नानां सेतुबन्धादि यन्मयम् ॥ ३४ ॥**

मराटदेशविषयां भाषामुत्तमं प्राकृतमाहुः । सूक्तान्येव रत्नानि, तेषां सागर इव सागरः सेतुबन्धादि सेतुबन्धहरिविजयरावणविजयादि प्रवरसेनादिकृतं काव्यं यन्मयं यया निर्वृत्तम् ॥ ३४ ॥

३. तस्य विशेषान् दर्शयन् आह—महेति । यन्मयं यया निबद्धं सा महाराष्ट्राश्रया ॥ ३४ ॥

१. तत्र किं महाराष्ट्राश्रयैव भाषा प्राकृतमुत्कृष्टत्वादाद्रियते, उत अन्यदपीत्याह—

**शौरसेनी च गौडी च लाटी चान्या च तादृशी ।**
**याति प्राकृतमित्येव व्यवहारेषु सन्निधिम् ॥ ३५ ॥**

तादृशी आवन्त्यादिः ॥ ३५ ॥

३. शौरसेनीति । अन्याऽपि तादृशी मालवादिदेशाश्रिता ॥ ३५

आभीरादिगिरः काव्येष्वपभ्रंश इति स्मृताः ।
शास्त्रे तु संस्कृतादन्यदपभ्रंशतयोदितम् ॥ ३६ ॥

१. आभीरादिगिरः आभीरगुर्जरादिगिरः सर्वाः अपभ्रंशतयोदिताः । शास्त्रे तु संस्कृतादन्यत् व्याकरणे संस्कृतादन्यत् सर्वं प्राकृतमप्यपभ्रंशत्वेनोक्तम् । संस्कृतादपभ्रष्टत्वात् ॥ ३६ ॥

२. अपभ्रंशलक्षणमाह—आभीरेति । आभीरदेशो नाम आभीरप्रायः पश्चिमसमुद्रपार्श्ववर्तिजनपदः ; तत्र प्रचुरा गीः आभीरभाषा । आदिशब्देन घूर्जरभाषा गृह्यते ॥ ३६ ॥

३. आभीरेति । आभीरो नाम पश्चिमार्णवतीरे वर्तमानो देशविशेषः ; अथ वा आभीरादयः गोपालादयः । इति संस्कृतादीनां भेदप्रभेदाः ॥ ३६ ॥

१. तत् किंविषयमित्यस्य विषयं निरूपयति—

संस्कृतं सर्गबन्धादि प्राकृतं स्कन्धकादि यत् ।
ओसरादिरपभ्रंशो नाटकादि तु मिश्रकम् ॥ ३७ ॥

संस्कृतं वाङ्मयं सर्गबन्धादि महाकाव्यविषयम् । आदिशब्देन कथाऽऽख्यायिकादयो ग्राह्याः । प्राकृतं स्कन्धकादि । आदिशब्दात् गाथाद्विपद्यादि । ओसरादीन्यपभ्रंशः । आदिशब्दात् सट्टिकादि । नाटकादि मिश्रकं नाटकभाणप्रभृति मिश्रकम् ॥ ३७ ॥

२. भेदानां स्थानान्याह—संस्कृतमिति । सर्गबन्धो मुकुलकादि काव्यं संस्कृतमयम् । स्कन्धकं नाम आर्यागीतिनिर्मितं काव्यम् ; आदिशब्देन गीत्युपगीत्यादिनिर्मितं च गृह्यते ; एतत् प्राकृतम् । ओसरादिः—ओसर इति अपभ्रष्टभाषारचितः कश्चित् प्रबन्धः । नाटकादि तु रूपकदशकं तत्तत्पात्रानुरूपभाषामयम् ॥ ३७ ॥

३. ग्रन्थरचनामुखेनापि तेषां भेदं दर्शयन् आह—**संस्कृतमिति** । सर्गबन्धादयः गद्यपद्यबन्धरूपाः । स्कन्धकं नाम जातिविशेषस्य संज्ञा ; तदादि यत् तत् प्राकृतम् । अपभ्रंशभाषया रचितस्य प्रबन्धस्य परिच्छेदः ओसरः इत्युच्यते ; तत् (?) अपभ्रंश एव प्रयोक्तव्यः । नाटकादि तु इत्यत्र तु-शब्दो विशेषवाची । अपि च नाटकप्रकरणादयो दश भेदाः ; ते तावत् भाषाभिः सर्वाभिः ग्रथितव्याः इत्यर्थः ॥ ३७ ॥

**कथा हि सर्वभाषाभिः संस्कृतेन च बध्यते ।**
**भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम् ॥ ३८ ॥**

१. कथा हि सर्वभाषाभिः प्राकृतापभ्रंशमिश्राभिः तथा संस्कृतेन च बध्यते । तदुक्तं भामहेन—'संस्कृता प्राकृता चेति कथापभ्रंशभाक् तथा ।' इति । यतः कथायां भाषानियमो नास्ति, अतो भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम् ॥ ३८ ॥

२. **कथेति** । ईश्वरेण तथा भूतभाषया देव्यै कथितः प्रबन्धो बृहत्कथा ॥ ३८ ॥

३. **कथेति** । भूताः इति प्रमथाः । अद्भुतार्थां विस्मयनीयां नरवाहनदत्तकथाप्रायाम् ॥ ३८ ॥

१ इदानीं सर्ववाङ्मयस्य प्रेक्षणीयश्रव्यभेदात् द्वैविध्यमाह—

**लास्यच्छलिकशम्यादि प्रेक्ष्यार्थमितरत्पुनः ।**
**श्रव्यमेवेति सैवैषा द्वयी गतिरुदाहृता ॥ ३९ ॥**

लास्यं शृङ्गाररसप्रायं पुरुषनृत्तं, शम्या किन्नरनृत्तं, छलिकं देवस्त्रीनृत्तं, आदिशब्देन नाटकप्रस्तारडोम्बलिकापवटिकादि प्रेक्ष्यार्थं प्रेक्षणप्रबन्धं वाङ्मयम् । सर्वमन्यत् करणाङ्गहारादिरहितं श्रव्यमाकर्णनीयमेव गीतधर्मशास्त्रव्याकरणादीनि सर्वम् । वाङ्मयस्य प्रेक्षणीयश्रोतव्यभेदात् सैषा द्वयी गतिरुक्ता ॥ ३९ ॥

२. दृश्यश्रव्यभेदेन प्रबन्धद्वैविध्यमाह—लास्येति । लास्यच्छलिक-शम्यादि दृश्यम् । तत्र शृङ्गारप्रधानं लास्यम् । वीरशृङ्गारप्रधानं छलिकम् । एतदेव किन्नरविषयं शम्या । तदादिनृत्तप्रबन्धः प्रेक्ष्यः ; इतरत् सर्ग-बन्धादि श्रव्यमेव ; इति द्विविधम् । नाटकादि तु दृश्यश्रव्यं इति बोद्धव्यम् ॥ ३९ ॥

३. संस्कृतादिरूपेण चतुर्विधा गतिः प्रकारान्तरेण द्विधाऽपि भवे-दित्याह—लास्येति । चतुर्विधानां वाङ्मयानां लास्यच्छलिकशम्यादि अभि-नयरूपेण प्रवृत्तं यत् तत् प्रेक्षार्थम् ; इतरत् सर्गबन्धादि श्रव्यम् । इति पुनः द्वयी गतिः । तत्र प्रेक्षार्थे—

'लास्यं शृङ्गारभूयिष्ठं नृत्तमीश्वरभाषितम् ।
छलिकं छद्मना वृत्तं सूरयस्तद्विदो विदुः ॥
शम्या तु सव्ययोः पातः सतालकरपादयोः ।
उभयोः करयोः पातः सन्निपात इति स्मृतः ॥'

मर्दलच्छलिकादिवाद्यविशेषाणां एकस्मिन् काले विरमणप्रक्रमणं छलिकं इत्युच्यते । अरत्निमात्रप्रायनानावर्णैरचितयष्टिहस्तैः बहुभिः—बह्वीभिर्वा—तैरेव तालहस्तैश्च तालयष्टीनां एकावसरे सन्निपातो वा, तालं विना यष्टिहस्तैरेव यष्टीनां सन्निपातो वा, शम्या इत्युच्यते ॥ ३९ ॥

१. तदेवं द्विधा त्रिधा चतुर्धा च काव्यशरीरमभिधाय वैदर्भगौडी-यमार्गविभागं दर्शयति—

**अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम् ।**
**तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ ॥ ४० ॥**

सूक्ष्मभेदः दुर्लक्षभेदः परस्परमन्योन्यं यतः तेन सः उदाहर्तुं न शक्यः । तथा च वक्ष्यति—

'इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् ।
तथाऽपि न तदाख्यातुं सरस्वत्याऽपि शक्यते ॥'

तत्रानेकस्मिन् गिरां मार्गे वैदर्भगौडीयौ दाक्षिणात्यप्राच्यमार्गौ वर्ण्येते प्रस्फुटान्तरौ । यतस्तद्वर्णने प्रस्फुटान्तरत्वं विशेषणत्वेऽपि हेतुः । यथा गुरवो राजमाषाः न भक्षणीया इत्यत्र गुरुत्वादिति हेतुः प्रतीयते, यथा वा यत् कृतकं तदनित्यमित्यत्र कृतकमिति विशेषणमपि कृतकत्वादनित्यमिति गम्यते, तथाऽत्रापि प्रस्फुटान्तरत्वात् वर्ण्येते ताविति । ततश्च यदुक्तं भामहेन—

'वैदर्भमन्यदस्तीति मन्यन्ते सुधियोऽपरे ।
तदेव च किल ज्यायः सदर्थमपि नापरम् ॥
गौडीयमिदमेतत्तु वैदर्भमिति किं पृथक् ।
गतानुगतिकन्यायात् नानाऽऽख्येयममेधसाम् ॥'

इति तन्निरस्तं भवति ॥ ४० ॥

२. अथ सन्दर्भकाव्यगुणभेदेन (?) द्वैविध्यं दर्शयितुं उपक्रमते— अस्तीति । 'वैदर्भी साऽथ पाञ्चाली गौडीयावन्तिका तथा । लाटीया मागधी चेति षोढा रीतिर्हि गद्यते'—इति प्रसिद्धा रीतयः षट् । तत्र इतरा रीतयः चतस्रः परस्परं स्वल्पभेदाः; वैदर्भगौडीयौ तु मार्गौ प्रस्फुटभेदौ मतौ । तौ वर्ण्येते लक्ष्यलक्षणैः प्रदर्श्येते ॥ ४० ॥

३. सम्प्रति गद्यपद्यात्मकस्य संस्कृतस्यैव गौडवैदर्भानुसारेण विशेषं दर्शयितुमाह—अस्तीति । वैदर्भो नाम मध्यमदेशात् दक्षिणतो देशः; तत्र भवा हि वैदर्भाः; तेषां इयं रीतिः वैदर्भी । गौडो नाम मध्यमदेशात् पूर्वो जनपदः; तस्मिन् जनपदे भवाः गौडीयाः । अत्र वैदर्भगौडीययोः मार्गयोर्द्वयोः भेदः कथ्यते ॥ ४० ॥

१. इदानीं वैदर्भमार्गस्य प्राणाः कति भवन्तीत्याह—

श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥ ४१ ॥

इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः ।
एषां विपर्ययः प्रायो दृश्यते गौडवर्त्मनि ॥ ४२ ॥

श्लेषादयः समाध्यन्ता दश गुणाः स्मृताः प्राणाः । एषामेव विपर्ययः प्रायो बाहुल्येन न सर्वथा लक्ष्यते गौडवर्त्मनि ॥ ४१-४२ ॥

२. मार्गभेदकरान् गुणान् उद्दिशति—श्लेष इति द्वयेन । प्रायःशब्दः अर्थव्यक्त्यौदार्यसमाध्यादयो गुणा उभयसाधारणा इति दर्शयति ॥ ४१-४२ ॥

३. प्रतिज्ञातभेदकरान् गुणान् दर्शयितुमाह—श्लेष इति । एषां श्लेषादीनां विपर्ययः अन्यथात्वं गौडप्रस्थाने लक्ष्यते । प्रायोग्रहणं साकल्यनिवृत्त्यर्थम् । तेन अर्थव्यक्त्यौदार्यसमाधिगुणा उभयमार्गतुल्या इति गम्यते ॥ ४१-४२ ॥

१. तत्रोद्दिष्टानां श्लेषादीनां लक्षणमाह—

श्लिष्टमस्पृष्टशैथिल्यमल्पप्राणाक्षरोत्तरम् ।
शिथिलं मालतीमाला लोलालिकलिला यथा ॥ ४३ ॥

अनुप्रासधिया गौडैस्तदिष्टं बन्धगौरवात् ।
वैदर्भैर्मालतीदाम लंघितं भ्रमरैरिति ॥ ४४ ॥

तत्रास्पृष्टशैथिल्यं यत् तत् श्लिष्टमुच्यते । अथ शिथिलं किमुच्यत इत्याह—अल्पप्राणाक्षरोत्तरम् , अल्पप्राणानि अक्षराणि उत्तराणि बहूनि यत्र तत् शिथिलम् । तस्योदाहरणमाह—मालतीमाला लोलालिकलिला यथा । लोलाश्च ते अलयश्च तैः कलिला व्याप्ता । मालतीमालेति अल्पप्राणलकाराक्षरप्राचुर्यादिदं शिथिलम् । एवंविधेन यत्र स्पृष्टं तत् श्लिष्टः

मुच्यते । इदं शिथिलमपि अनुप्रासधिया गौडैरिष्टम् । यदुक्तं भामहेन— 'सरूपवर्णविन्यासमनुप्रासं प्रचक्षते' इति । वैदर्भैः पुनः बन्धगौरवमाश्रितम् । अतो नैवंविधमिष्टं शिथिलम्, अश्लिष्टत्वादस्य । ते हि वैदर्भाः अमुमेवार्थमेभिरक्षरैरेवमाहुः—मालतीदाम लंघितं भ्रमरैरिति ॥ ४३-४४ ॥

२. श्लेषं तद्विपर्ययं शैथिल्यं च लक्षयति—श्लिष्टमिति । श्लिष्टं श्लेषगुणयुक्तम् । वाक्यम् इति शेषः । अल्पप्राणाक्षरोत्तरम्—अल्पप्राणाक्षरमयमेव यद्वाक्यं—तत् शिथिलम् । तथा च वक्ष्यति—'बन्धशैथिल्यदोषो हि दर्शितः सर्वकोमले'—इति । तद्विपरीतं श्लिष्टम् । शैथिल्यश्लेषयोः उदाहरणे मार्गभेदेन दर्शयति—मालतीमालेति मालतीदामेति च ॥

३. उक्तान् गुणान् अत्र सोदाहरणं क्रमेण अनुसन्धत्ते—श्लिष्टमिति । श्लेष एव श्लिष्टम् इत्युच्यते । अत्र भावे क्तः । अस्पृष्टशैथिल्यम् । वर्णानां गुम्फनसमये यत् शिथिलत्वेन न प्रतिभाति तत् अस्पृष्टशैथिल्यम् । तदपि ; महाप्राणवद्भिः अक्षरैः भवितव्यम् ; तदन्यत् शिथिलम् अल्पप्राणाक्षरभूयिष्ठम् ; अन्तस्थाभिः वर्गाणां प्रथमतृतीयपञ्चमाक्षरैश्च भवितव्यम् । क्रमोल्लङ्घनेन शिथिलस्य उदाहरणं आह—मालतीमालेति । यत् शिथिलस्य उदाहरणसूचनं तदेतत् शिथिलमपि अनुप्रासबुद्ध्या गौडैः इह स्वीकृतं इत्याह—अनुप्रासेति । शिथिलमपि तत् पूर्वोक्तं अनुप्रासबुद्ध्या गौडैः स्वीकृतम् । वैदर्भैस्तु रचनादार्ढ्यात् श्लेषः स्वीकृतः—मालतीदाम लङ्घितं भ्रमरैः इति । लङ्घितम् आक्रान्तम् ; इतिशब्दः उदाहरणे ॥ ४४ ॥

१. श्लेषं व्याख्याय प्रसादलक्षणमाह—

**प्रसादवत् प्रसिद्धार्थमिन्दोरिन्दीवरद्युति ।**
**लक्ष्म लक्ष्मीं तनोतीति प्रतीतिसुभगं वचः ॥ ४५ ॥**

यत् प्रसिद्धार्थं तत् प्रसादवदुच्यते । तदुदाहरति—इन्दोरिन्दीवरद्युति लक्ष्म लक्ष्मीं तनोति इति प्रतीतिसुभगं वचः ॥ ४५ ॥

२. प्रसादं लक्ष्यलक्षणाभ्यां दर्शयति—प्रसादवदिति ॥ ४५ ॥

३. प्रसादस्य उदाहरणमाह—प्रसादवदिति ॥ ४५ ॥

व्युत्पन्नमिति गौडीयैर्नातिरूढमपी[मितो]ष्यते ।
यथानत्यर्जुनाब्जन्मसदृक्षाङ्को वलक्षगुः ॥ ४६ ॥

१. गौडीयैः पुनरिदमतिरूढमिति अतीव प्रसिद्धमिति नेष्यते । अनत्यर्जुनाब्जन्मसदृक्षाङ्को वलक्षगुरितीदमिष्यते व्युत्पन्नमिति यतः । अत्यर्जुनं धवलं तत्प्रतिषेधादनत्यर्जुनमसितं नीलम् । अप्सु जन्म यस्य तत् अब्जन्म उत्पलम् । अनत्यर्जुनं च तत् अब्जन्म च नीलोत्पलम् । तेन सदृक्षः सदृशः अङ्को लाञ्छनं यस्य स तथा । वलक्षाः शुभ्रा गावः करा यस्य वलक्षगुश्चन्द्रः ॥ ४६ ॥

२. प्रसादविपर्ययं गौडेष्टं दर्शयति—व्युत्पन्नमिति ॥ ४३ ॥

३. अप्रसादस्य उदाहरणं दर्शयन् आह—व्युत्पन्नमिति । गौडीयैः पौरस्त्यैः नातिरूढमपि अतिप्रगल्भमपि ईहितं दृश्यते । कुतः ? व्युत्पन्नं इति । तैः एवं स्वीकृतम् इत्याह—यथेति । अनत्यर्जुनाब्जन्म नीलोत्पलम् ; वलक्षगुः श्वेतभानुः ॥ ४६ ॥

१. प्रसादमभिधाय समतालक्षणमाह—

समं बन्धेष्वविषमं ते मृदुस्फुटमध्यमाः ।
बन्धा मृदुस्फुटोन्मिश्रवर्णविन्यासयोनयः ॥ ४७ ॥
कोकिलालापवाचालो मामेति मलयानिलः ।
प्रोच्चलच्छीकराच्छाच्छनिर्झराम्भःकणोक्षितः ॥ ४८ ॥
चन्दनप्रणयोद्गन्धिर्मन्दो मलयमारुतः ।

१. गौडाभ्युपगतं बन्धवैषम्यमुदाहरति—

स्पर्धते रुद्धमद्धैर्यो वररामाननानिलैः ॥ ४९ ॥
इत्यनालोच्य वैषम्यमर्थालङ्कारडम्बरौ ।
अवेक्षमाणा ववृधे पौरस्त्या काव्यपद्धतिः ॥ ५० ॥

बन्धेषु यद्विषमं तत् सममुच्यते। ते बन्धाः त्रयः मृदुस्फुटमध्यमाभिधानाः। किंयोनय इत्याह--मृदुस्फुटोन्मिश्रवर्णविन्यासयोनयः, मृदवश्चाल्पप्राणाः, स्फुटाश्च महाप्राणाः, उन्मिश्राश्च तदुभयरूपाः, ते च ते वर्णाश्च, तेषां विन्यासो योनिः येषां ते तथाविधाः। तत्र मृदुबन्धमुदाहरति—कोकिलेति। मृदुवर्णविन्यासयोनित्वान्मृदुबन्धः। स्फुटबन्धमुदाहरति–प्रोच्चलदिति। स्फुटवर्णत्वात् स्फुटबन्धः। मध्यममुदाहरति–चन्दनेति। उन्मिश्रवर्णत्वात् मध्यमबन्ध इति॥

एकस्मिन्नेव श्लोकार्धे पूर्वोत्तरपादयोः सर्वस्फुटसर्वमृदुवर्णविन्यासात् विषमोऽयमिति बन्धवैषम्यदोषमनालोच्य पौरस्त्या काव्यपद्धतिः गौडानां काव्यरचना ववृधे। अर्थालङ्काराक्षराटोपावेवापेक्षन्ते गौडाः, न बन्धवैषम्यलक्षणं दोषं मन्यन्ते॥ ४७-५०॥

२. समतां लक्षयति—सममिति। बन्धाः शब्दसन्दर्भाः त्रिविधाः—मृदुवर्णजनितो बन्धः, अमृदुस्फुटवर्णजनितो बन्धः, मृदुस्फुटमिश्रवर्णजनितो बन्धश्चेति। मिश्रवर्णजनितो बन्धो मध्यमः। तेषु बन्धेषु एकैकस्मिन् अविषमत्वम् एकरूपत्वं समत्वम्॥

त्रयाणां बन्धानां त्रिभिः अर्धैः उदाहरणानि आह–कोकिलेति। अत्र बन्धेषु मध्यमबन्धसत्त्वं वैदर्भेष्टम्। मृदुबन्धे विशेषाभावात्, स्फुटबन्धे सौकुमार्याभावाच्च, तौ न वैदर्भाभिमतौ इति बोद्धव्यम्। समताविपर्ययं वैषम्यं दर्शयति—स्पर्धत इति। समताविपर्ययस्य गौडेष्टत्वं दर्शयति–इतीति। उपमारूपः अर्थालङ्कारः स्फुटवर्णानुप्रासश्च विषमपरिग्रहहेतुः॥ ४७--५०॥

३. समोदाहरणं सममिति। समं बन्धेषु समत्वेन स्वीकृतम्; अविषमम् इति यावत्। ते हि बन्धाः मृदुस्फुटमिश्रत्वात् त्रिविधा भवन्ति। मृद्वक्षरैः अल्पप्राणाक्षरैः ग्रथिताः मृदवः। नमृदुस्फुटाक्षरैः

घोषवद्भिः ग्रथिताः स्फुटाः । मिश्राक्षरैः ग्रथिताः समाः । एषु मृदु-स्फुटौ गौडीयैः स्वीकृतौ । मध्यमस्तु अविषमः इति वैदर्भैः स्वीकृतः ॥

३. मृदूदाहरणं कोकिलेत्यादि । स्फुटोदाहरणं उच्चलदिति । मिश्रोदाहरणं चन्दनेत्यादि । उक्तं निगमयति—इतीति । इति वैषम्यं अनालोच्य, अर्थालङ्कारयोः डम्बरम् अतिसुभगतां आलोक्य च, गौडानां काव्यपद्धतिः ववृधे प्रवृत्ता ॥ ४७-५० ॥

१. माधुर्यमुदाहरति—

**मधुरं रसवद्वाचि वस्तुन्यपि रसःस्थितः । ***
**येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः ॥ ५१ ॥**

वाचि यद्रसवत् तन्मधुरम् । मधुरमित्यनेन धर्मिपदेन धर्मोऽभि-धीयते माधुर्यम् । क्वचिद्धर्मिणा धर्मनिर्देशः, यथा—ककुद्मान् विषाणी प्रान्तवालधिर्गोत्वे लिङ्गमिति । अत्र विषाणीत्यादिना धर्मिणा धर्मो गोत्वमुच्यते । वाचि रसवदिति विशेषणात् 'रसवद्रसपेशलम्'इत्य-र्थालङ्कारगतं न रसवत्त्वमिहोच्यते । तद्धि शृङ्गारादिरसयुक्तम् । इदं तु शब्दमाधुर्यमिति ज्ञातव्यम् । न केवलं वाच्येव, वस्तुनि अर्थेऽपि रसः स्थितः, रसवत्त्वं स्थितम् । येन रसवत्त्वेन माद्यन्ति तुष्यन्ति मधुनेव मधुव्रताः ॥ ५१ ॥

२. मधुरं लक्षयति—मधुरमिति । शब्दाश्रयं अर्थाश्रयं च विबुध-मनोरञ्जनं माधुर्यं द्विविधम् ॥ ५१ ॥

३. माधुर्यमाह—मधुरमिति । वाचि शब्दे रससमुपेते वस्तुनि अर्थे च रसस्थितिः यस्य तत् मधुरं नाम ॥ ५१ ॥

---

* रसस्थितिः ।

१. कथं पुना रसवद्भवतीत्याह—

**यया कयाचित् श्रुत्या यत् समानमनुभूयते।**
**तद्रूपादिपदासक्तिः सानुप्रासा रसावहा ॥ ५२ ॥**

यया कयाचित् श्रुत्या यत् वचः स्थानगुणप्रमाणरूपया कण्ठोष्ठतालुदन्ताद्युदात्तादिह्रस्वदीर्घादिकया समानं सदृशमनुभूयते तस्य रूपं तद्रूपं तदादि(:?)यस्य तत् तद्रूपादि तच्च तत्पदं च तद्रूपादिपदं तस्य तेन वाऽऽसत्तिः प्रत्यासत्तिः अव्यवहितता सा रसावहा रसं रसवत्तामावहति। सानुप्रासा अनुप्रासेन सह वर्तत इति सानुप्रासा ॥ ५२ ॥

२. तत्र शब्दमाधुर्यं लक्षयति—ययेति। यया कयाऽपि श्रुत्या कण्ठाद्येकस्थानजननप्रयुक्तेन स्पृष्टतादिप्रयत्नजन्येन वा एकेन ध्वनिविशेषेण यच्च रूपं समानं अनुभूयते, तस्य शब्दरूपस्य, तद्रूपादिपदासक्तिः— तद्रूपेण तच्छ्रुतिमता आदिपदेन पूर्वानुभूतेन पदेन शब्देन सह, या आसक्तिः सा रसावहा; स्थानादिजन्यैकश्रुतिमतोः पदयोः वर्णयोर्वा स्थितिरपि प्रकृष्टा श्रुतिसाम्यनामरसावहेत्यर्थः। सानुप्रासा—अनुप्रासश्च रसावहः इति यावत्। एवं द्विविधं शब्दमाधुर्यम् ॥ ५२ ॥

३. माधुर्यस्वरूपं प्रदर्श्य प्रथमं शब्दे इदं दर्शयितुमाह—ययेति। तद्रूपं तथाविधं रूपं आदिः यस्य तस्य आसक्तिः या सा सानुप्रासा। शब्देन रसावहा सा भवति ॥ ५२ ॥

१. तत्र स्थानश्रुत्या समानं मधुरमुदाहरति—

**एष राजा यदा लक्ष्मीं प्राप्तवान् ब्राह्मणप्रियः।**
**तदा प्रभृति धर्मस्य लोकेऽस्मिन्नुत्सवोऽभवत् ॥ ५३ ॥**

अत्र षकाररेफयोर्मूर्धन्ययोः, जकारयकारयोस्तालव्ययोः, तथा दकारलकारयोर्दन्त्ययोः, मकारपकारयोरौष्ठ्ययोः स्थानगतं श्रुतिसारूप्यमस्तीति मधुरमुक्तम् ॥ ५३ ॥

२. तत्र श्रुतिसाम्यस्य उदाहरणमाह—एष इति । षरयोः मूर्धन्यत्वात् श्रुतिसाम्यम् ; जायेति तालव्यत्वात्, दालेति दन्त्यत्वात्, पबयोरोष्ठयत्वात्, तदेति तिधेति च दन्त्यत्वात् ॥ ५३ ॥

३. प्राप्त-ब्राह्मण-प्रभृतीनां रेफः पृथक्प्रयुक्तराजेति रेफपदस्य आदिभूतत्वात् समानं अनुभूयते ॥ ५३ ॥ *

**इतीदं नादृतं गौडैरनुप्रासस्तु तत्प्रियः ।**
**अनुप्रासादपि प्रायो वैदर्भैरिदमीप्सितम् ॥ ५४ ॥**

१ इतीदमेवंविधं स्थानसारूप्यगतं माधुर्यं गौडैर्नादृतं नेष्टम् । यतस्तेषामनुप्रासः प्रियः । वैदर्भैः पुनः अनुप्रासादपि प्रायोऽभिमतमिदमेव । प्रायोग्रहणादनुप्रासोऽप्यभिमतः ॥ ५४ ॥

२. श्रुतिसाम्यवर्णानुप्रासौ वैदर्भगौडयोः विभाजितौ इत्याह—इतीति ॥ ५४ ॥

३. उक्तः प्रकारो वैदर्भैः स्वीकृतः, न तावत् गौडैः इत्याह—इतीति । इदम् इत्युक्तप्रकारानुप्रासः गौडैः न आदृतम् । तेषां गौडानामन्योऽनुप्रासः अतीव हि प्रियो भवति । वैदर्भैः अनुप्रासादपि इदमेव सुतरां स्वीकृतं भवति इत्यर्थः ॥ ५४ ॥

१. अथ कोऽनुप्रास इति पृष्टोऽनुप्रासलक्षणमाह—

**वर्णावृत्तिरनुप्रासः पादेषु च पदेषु च ।**
**पूर्वानुभवसंस्कारबोधिनी यद्यदूरता ॥ ५५ ॥**

वर्णावृत्तिरिति लक्षणम् । अनुप्रासो लक्ष्यम् । वर्णानामक्षराणामावृत्तिः, सरूपाणामिति वाक्यशेषः । तदुक्तं भामहेन—‘सरूपवर्ण-

---

* ‘एष यदा’ इत्येकारयकारयोः द्वितीयपादे प्र ब्र इत्यनयोः अनन्तरं त ध इत्यनयोश्च समानत्वमत्रोदाहरणमित्यस्माकं मतिः ।

विन्यासमनुप्रासं प्रचक्षते' इति । तस्य प्रदेशं निरूपयति—सोऽनुप्रासः पादेषु च वृत्तजात्योः, पदेषु च सुप्तिङन्तेषु च । किं यदि स्यादित्याह—पूर्वेति । पूर्वश्चासावनुभवश्च पूर्वानुभवः, तेन यः संस्कारः तस्य बोधिनीत्येवंशीला अदूरता यदि स्यात्, वर्णानामिति वाक्यशेषः । पूर्वानुभूतवर्णविषयं संस्कारं यद्यवबोधयत्यदूरता तदा अनुप्रासो भवति । यदा पुनर्न पूर्वोच्चारितवर्णविषयज्ञानविषयं भावनाख्यं संस्कारं बोधयति, तदा पूर्वोच्चारितोत्तरोच्चारितवर्णविषया अदूरता न स्यात् । यतो यद्विषयोऽनुभवस्तद्विषयः संस्कारः तद्विषया स्मृतिरिति ॥ ५५ ॥

२. अनुप्रासं लक्षयति-वर्णेति । पादेषु पादादिषु पदेषु,पदेषु-पदादिषु, इत्यर्थः ॥ ५५ ॥

३. गौडप्रियस्यानुप्रासस्य लक्षणं दर्शयितुमाह—वर्णावृत्तिरिति । पादेषु पदेषु च बहुशो वर्णानामावृत्तिः यदि क्रियते, तदा तत्र अनुप्रासः स्यात् । आवृत्तेः पूर्वमुच्चारितस्यैव वर्णस्य पुनरुच्चारणे क्रियमाणे पूर्वानुभूतसंस्कारबोधिनी अदूरता अस्ति चेत्, तदैव तत्र अनुप्रासो भवति ॥

१. तत्र पादेष्वनुप्रासमाह—

**चन्द्रे शरन्निशोत्तंसे कुन्दस्तबकविभ्रमे ।**
**इन्द्रनीलनिभं लक्ष्म सन्दधात्यलिनः श्रियम् ॥ ५६ ॥**

चन्द्रे कुन्द इन्द्र सन्द इति पादानुप्रासः ॥ ५६ ॥

२. तत्र पादानुप्रासं दर्शयति—चन्द्र इति ॥ ५६ ॥

३. पादानुप्रासोदाहरणमाह—चन्द्र इति । अत्र चतुर्षु पादेषु चन्द्र कुन्द इन्द्र सन्द इति क्रमेण नकारदकारौ अनुसृतौ भवतः । चन्द्र इन्द्र, कुन्द सन्द, इति केचित् आवृत्तिं पश्यन्ति ॥ ५६ ॥

१. पदेष्वनुप्रासमाह—

चारु चान्द्रमसं भीरु विम्बं पश्येदमम्बरे ।
मन्मनो मन्मथाक्रान्तं निर्दयं हन्तुमुद्यतम् ॥ ५७ ॥

अत्र चारु चान्द्रमसं भीरु इति, बिम्बं पश्येदमम्बरे इत्यत्र बिम्बम् अम्बर इति, मन्मनो मन्मथाक्रान्तमित्यत्र मन्मनो मन्मथ इति च सरूप-वर्णावृत्तेरनुप्रासः ॥ ५७ ॥

२. अथ पदानुप्रासं दर्शयति—चार्विति ॥ ५७ ॥

३. पदानुप्रासं दर्शयाति—चार्विति । चकारद्वयं बकारद्वयं मका-रद्वयं नकारद्वयं च पदे सन्निकृष्टानुप्रासत्वेन स्वीकृतं भवति । उद्यतम् उदितम् ॥ ५७ ॥

इत्यनुप्रासमिच्छन्ति नातिदूरान्तरश्रु(स्थि)तिम् ।
न तु रामामुखाम्भोजसदृशश्चन्द्रमा इति ॥ ५८ ॥

१. इति अनन्तरोक्तमनुप्रासमिच्छन्ति । नातिदूरान्तरश्रुतिम् अतिदूरमन्तरं यस्याः सा अतिदूरान्तरा श्रुतिः यस्य सः अतिदूरान्तरश्रुति-रिति अत्यन्तव्यवाहितवर्णविषयज्ञानस्तमनुप्रासं नेच्छान्ति । तमतिदुष्टमु-दाहरति—न त्विति । रामारमाशब्दयोरत्यन्तव्यवहितत्वेन पूर्वानुभव-संस्कारबोधिन्या अदूरताया अभावात् ॥ ५८ ॥

२. 'पूर्वानुभूतसंस्कारबोधिनी यद्यदूरता' इत्यस्य व्यावृत्तिं दर्शयति —इतीति ॥ ५८ ॥

३. इतीति । नातिदूरान्तरस्थितिम् इति दूरान्तरस्थितिरहितम् अनुप्रासं इच्छन्ति; रामामुखेत्याद्युदाहरणे दूरान्तरस्थितिमतीं मा इत्यस्या-वृत्तिमनुप्रासत्वेन नाङ्गीकुर्वन्ति ॥ ५८ ॥

१. गौडाभिप्रेतमनुप्रासमुदाहरति—

**स्मरः खरः खलः कान्तः कायः कोपश्च नः कृशः।
च्युतो मानोऽधिको रागो मोहो जातोऽसवो गताः ॥ ५९ ॥**

**इत्यादि बन्धपारुष्यं शैथिल्यं च नियच्छति।
अतो नैवमनुप्रासं दाक्षिणात्याः प्रयुञ्जते ॥ ६० ॥**

स्मरः खर इत्यादिः सरूपेरफविसर्जनीयखकारककाराक्षरप्रचुरः। च्युतो मान इत्यादिरोकारबाहुल्याद्रमणीय इति गौडा मन्यन्ते। स्मरः खर इत्यादि बन्धपारुष्यं नैष्ठुर्यं च्युतो मान इत्यादि च शैथिल्यं नियच्छाति यतः, अतो नैवंविधं दाक्षिणात्याः प्रयुञ्जत इति ॥ ५९-६० ॥

२. बन्धपारुष्यशैथिल्यावहस्य अनुप्रासस्य न वैदर्भेष्टत्वमित्याह— स्मर इति द्वयेन। 'इतीदं नादृतं गौडैरनुप्रासस्तु तत्प्रियः। अनुप्रासादपि प्रायो वैदर्भैरिदमीप्सितम् ॥'—इत्यत्र प्रायश्शब्देन उभयोः श्रुतिसाम्यानुप्रासयोः वैदर्भगौडयोरिष्टतरत्वमुक्तम्; न तु अनिष्टत्वम्। बन्धपारुष्यशैथिल्यावहस्य अनुप्रासविशेषस्य वैदर्भानिष्टत्वकथनात्; इत्यवगन्तव्यम् ॥ ६० ॥

**आवृत्तिमेव संघातगोचरां यमकं विदुः।
तत्तु नैकान्तमधुरमतः पश्चाद्विधास्यते ॥ ६१ ॥**

१. वर्णावृत्तिमेव सङ्घातगोचरां समुदायविषयां यमकं विदुराचार्याः। अव्यवहितसजातीयबह्वक्षरावृत्तिरनुप्रासविशेष एव यमकम्। तत्तु यमकमेकान्ततो न मधुरं दुर्बोधत्वात्। यद्यपि वाचि सरूपवर्णविन्यासः, तथाऽपि न वस्तुनि रसोऽस्तीति माधुर्यप्राणनिरूपणप्रकरणे यमकं न निरूप्यत इति। पश्चात् तृतीयपरिच्छेदे विधास्यते ॥ ६१ ॥

२. आवृत्तिमिति। एकवर्णावृत्तिवत् अनेकवर्णावृत्तिरूपं यत् यमकं दर्शयितव्यम्, तत्तु कोमलबुद्धीनामनन्तरावहं (न रसावहं ?) विस्तीर्णं च। अतः तृतीये परिच्छेदे दर्शयिष्यते ॥ ६१ ॥

३. स्मर इत्यादिना निर्दिष्टवर्णावृत्तिप्रसङ्गेन यमकं प्रस्तुतम्; तत् पश्चात् विधास्यत इत्याह । सङ्घातगोचरां वर्णानां पदानां च समूहविषयभूताम् । तत् यमकं मधुररसेनैव न समुपेतम्, इत्यतो हेतोः पश्चात् विधास्यते वक्ष्यते ॥ ६१ ॥

**कामं सर्वोऽप्यलङ्कारो रसमर्थे निषिञ्चति (तु) ।**
**तथाऽप्यग्राम्यतैवैनं भारं वहति भूयसा ॥ ६२ ॥**

१. सर्वोऽप्यलङ्कारः रूपकादिः शब्दालङ्कारश्च श्लेषादिरर्थे रसं माधुर्यं निषिञ्चति यद्यपि, तथाऽपि अग्राम्यतैव अग्राम्यशब्दाभिधानमेव एनं भारं रसवत्तां वहति भूयसा बाहुल्येन, न ग्राम्यतोक्तिरिति ॥ ६२ ॥

२. अर्थमाधुर्यमग्राम्यतारूपं दर्शयिष्यति प्रशंसति च—**काममिति** । उपमोत्प्रेक्षादिः अलङ्कारः सर्वोऽपि अर्थे रसं निषिञ्चतु । तथाऽपि एनम् अर्थरसातिशयं अग्राम्यतैव भूयसा वहति । सहृदयोद्वेगकरं ग्राम्यं, तद्विपरीतं अग्राम्यम् । तेन सहृदयसन्तोषकरम् अग्राम्यम् इत्यर्थः ॥ ६२ ॥

३. पूर्वं मधुरगुणलक्षणारम्भे अर्थेऽपि रसवत्ता अस्तीत्युक्तम्; साऽद्य दर्श्यते—**काममिति** । सर्वोऽपि अलङ्कारः अर्थे रसं कामं निषिञ्चतु ददातु । तथाऽपि इयं अग्राम्यतैव अनश्लीलतैव एनं माधुर्यस्य भारं भूयसा अत्यर्थं वहति । ग्राम्यार्थः प्रतिपाद्यते चेत्, स दुष्ट एव भवति ॥ ६२ ॥

१. तत्र ग्राम्यमुदाहरति—

**कन्ये कामयमानं मां न त्वं कामयसे कथम् ।**
**इति ग्राम्योऽयमर्थात्मा वैरस्यायैव कल्पते ॥ ६३ ॥**

कश्चित् कामपरवशः कन्यामाह—अहं त्वयि अनुरक्तः त्वामिच्छामि । त्वं किमिति मां नेच्छसि इति ग्राम्यमेतद्भवेत् । यतो नैतन्नायकप्रस्थानोचितम् । तथा हि—

'आकारसंवृतिः कार्या सुरक्तेनापि कामिना ।
रक्तः परिभवं याति परिभूतः कथं प्रियः ॥' ६३ ॥

२. अग्राम्यं दर्शयितुं प्रथमं ग्राम्यं दर्शयति—कन्ये इति ॥ ६३ ॥

३. ग्राम्योदाहरणमाह—कन्ये इति ॥ ६३ ॥

१. अयमेवार्थः पुनरग्राम्यशब्दैरुच्यमानो रसावहो भवतीत्याह—

**कामं कन्दर्पचण्डालो मयि वामाक्षि निर्दयः ।**
**त्वयि निर्मत्सरो दिष्ट्येत्यग्राम्योऽर्थो रसावहः ॥ ६४ ॥**

रसावहः माधुर्यमावहति ॥ ६४ ॥

२. अग्राम्यं दर्शयति—कामिति ॥ ६४ ॥

३. अग्राम्यस्य उदाहरणमाह—काममिति ॥ ६४ ॥

**शब्देऽपि ग्राम्यताऽस्त्येव सा सभ्येतरकीर्तनात् ।**
**यथा यकारादिपदं रत्युत्सवनिरूपणे ॥ ६५ ॥**

१. शब्देऽपि ग्राम्यताऽस्त्येव, न केवलमर्थे । सा कुतो भवतीत्याह—**सभ्येतरकीर्तनात्** । सभायां साधु सभ्यम्, तस्मादितरत् असभ्यम्, तस्य कीर्तनात् अभिधानात् । तदुदाहरति—यथा यकारादिपदम् । यकार आदिर्यस्य तत् यकारादि, तच्च तत्पदं च यकारादिपदम् रत्युत्सवनिरूपणे । यब्भिर्यभ इत्यादि । आदिशब्दात् भगादि ॥ ६५ ॥

२. ग्राम्यता नाम दोषो न केवलम् अर्थ एव दृश्यते, शब्देऽपि अस्तीत्याह—**शब्देऽपीति** । यथा—यकारादिपदं रतिशब्दार्थवाचकम्; यभशब्दः स्वरूपेणैव सभ्येतर इत्यर्थः ॥ ६५ ॥

३. प्रसङ्गागतां ग्राम्यतां शब्देऽपि दर्शयितुमाह—**शब्देऽपि** इति । यथा इति उदाहरणदर्शने (नम्?) । यकारादिपदं यभ मैथुने इत्यस्मात् यभ याभ इत्येवमादि ॥ ६५ ॥

१. श्रुतिदुष्टकल्पनादुष्टार्थदुष्टानुदाहरति—

पदसन्धानवृत्त्या वा वाक्यार्थत्वेन वा पुनः ।
दुष्प्रतीतिकरं ग्राम्यं यथा या भवतः प्रिया ॥ ६६ ॥

प(ख)रं प्रहृत्य विश्रान्तः पुरुषो वीर्यवानिति ।
एवमादि न शंसन्ति मार्गयोरुभयोरपि ॥ ६७ ॥

पदस्य सन्धानं संहिता प्रत्यासत्तिः । तथा पदसमुदायो वाक्यम् ;

साख्यातं साव्ययं चैव सविशेषं सकारकम् ।
वाक्यमित्युच्यते सद्भिः कैश्चिदर्थप्रसाधकम् ॥

तस्यार्थो वाक्यार्थः, तस्य भावो वाक्यार्थत्वं तेन । दुष्प्रतीतिकरं विवक्षितार्थविपरीतबुद्ध्युत्पादकं ग्राम्यम् । यथा या भवतः प्रियेत्यत्र या इति यच्छब्दस्य टाबन्तस्य सुलोपे रूपम् । तस्य च भवत इति षष्ठ्यन्तेन पदेन सम्बन्धः । तेन च दुष्प्रतीतिरुत्पद्यते । यभ मैथुने; यभनं याभः, सोऽस्यास्तीति याभवान् तस्य याभवतः इति ।

तदुक्तम्—

पदद्वयस्य सन्धाने यदनिष्टं प्रकल्पते ।
तदाहुः कल्पनादुष्टं स शौर्याभरणो यथा ॥

इति कल्पनादुष्टं व्याख्यातम् । परं शत्रुं प्रहृत्य विश्रान्तः पुरुषो नरो बलवानित्यमुमर्थमभिप्रेत्य प्रयुक्तं वाक्यं शिश्नविषयां बुद्धिमुत्पादयति; तथा हि—परं भगं प्रहृत्य विश्रान्तः पतितः पुरुषः कोटः (?) वीर्यवान् वीर्यं रेतः तद्वानित्यर्थदुष्टम् । तदुक्तम्—

अर्थदुष्टं च तज्ज्ञेयं यत्रोक्ते जायते मतिः ।
असभ्यवस्तुविषया शब्दैस्तद्वाचिभिर्यथा ॥

हन्तुमेवाभियुक्तस्य स्तब्धस्य विवरैषिणः ।
पतनं जायतेऽवश्यं कृच्छ्रेण पुनरुन्नतिः ॥

इत्यर्थदुष्टं व्याख्यातम् । एवमादीत्यादिशब्दात् श्रुतिकष्टं गृह्यते द्रष्टृद्रुह्यद्द्युतिह्लादादिकम् ।

तदुक्तं भामहेन—

श्रुतिदुष्टार्थदुष्टे च कल्पनादुष्टमित्यपि ।
श्रुतिकष्टं तथा चाहुर्वाचां दुष्टं चतुर्विधम् ॥

इति । एतच्च सर्वमसंग्राह्यत्वात् ग्राम्यमेवेति अग्राह्योऽर्थो रसावह इत्यनेनैव संगृहीतत्वात् न पृथगुक्तमिति । ॥ ६६-६७ ॥

२. पदसन्धिना वाक्यार्थान्तरप्रतीतिकरत्वेन च पुनर्द्विविधं शब्दग्राम्यं दर्शयति—पदेति । यच्छब्दभवच्छब्दौ सन्धिना श्लिष्टौ याभवच्छब्दप्रतीतिकरौ ग्राम्यौ । वीर्यवान् रामः खरं राक्षसं प्रहृत्य हत्वा विश्रान्त इति वाक्यम्, कश्चित् पुरुषः रतौ खरं प्रचण्डं प्रहृत्य वीर्यवान् विश्रान्तः इति वाक्यार्थान्तरप्रतीतिकरत्वात् ग्राम्यम् । 'कन्ये कामयमानं मां' —इत्यत्र वाक्यार्थ एव ग्राम्यत्वमित्यर्थग्राम्यत्वम्; अत्र तु उदाहरणे ग्राम्यवाक्यार्थान्तरप्रतीतिकृत् वाक्यमिति शब्दग्राम्यत्वम् । अर्थग्राम्यत्वशब्दग्राम्यत्वे गौडवैदर्भयोरुभयोरपि मार्गयोः परित्याज्ये इत्याह—एवमादीति ॥ ६६-६७ ॥

३. अत्र तस्या एव ग्राम्यतायाः प्रकारविशेषमाह—पदेति । पदानां सन्धिः पदसन्धानम् । तस्य वृत्तिः । तया वा; वाक्यार्थत्वेन वा दुष्प्रतीतिकरं यत् तदपि ग्राम्यमेव । यथा—या भवतः प्रिया इत्युक्ते, या अङ्गना भवतः प्रिया इति गम्यमेव; अत्र याभवतः पुरुषस्य प्रिया इति च गम्यते । श्रोतुर्हि अन्तःपदसन्धानप्रतीत्या दुष्प्रतीतिकरम् एतत् । वीर्यवान् पुरुषः कोऽपि खरं तीक्ष्णं प्रहृत्य, प्रहारं कृत्वा, युद्धान्ते विश्रान्तो भवति इत्युक्ते, श्रोतुः काऽपि दुष्टा वाक्यार्थप्रतीतिर्जायते ॥ ६६-६७ ॥

**भगिनीभगवत्यादि सर्वथैवानुमन्यते ।**
**विभक्तमिति माधुर्यमुच्यते सुकुमारता ॥ ६८ ॥**

१. भगिनीभगवत्यादि पुनः अतिदुष्टाभासमप्यतिसमर्थरूढत्वात् कविभिः सर्वथैवानुमन्यते । आदिशब्दात् गण्डः पाण्डुः इत्याद्यन्यदप्येवमादरणीयम् । इदानीं प्रकृतोपसंहारेणोत्तरं व्याख्यातुमाह—**विभक्तमिति** माधुर्यम् । कन्ये कामयमानं मां इत्याद्यमधुरम्, कामं कन्दर्पचण्डाल- इत्यादि मधुरमिति माधुर्यं विभाजितम् । इदानीं सुकुमारतोच्यते ॥ ६८ ॥

२. **भगिनीति** । भगिनीभगवत्यादिपदं ग्राम्यार्थान्तरप्रतीतिकरमपि सर्वत्रैव लोकवेदयोः दृष्टप्रयोगत्वात् न दुष्टम् । विस्तरेणोक्तं माधुर्यमुपसंहृत्य सौकुमार्यं लिलक्षयिषति ॥ ६८ ॥

३. **भगिनीति** । सर्वत्र वैदर्भगौडयोः । अथ सुकुमारमुच्यते ॥

**अनिष्ठुराक्षरप्रायं सुकुमारमिती(हे)ष्यते ।**
**बन्धशैथिल्यदोषोऽपि(षस्तु) दर्शितः सर्वकोमले ॥ ६९ ॥**

१. अनिष्ठुराक्षरप्रायं सुकुमाराक्षरप्रचुरं सुकुमारमितीष्यते । यद्येवं मालतीमालादि सुकुमारं स्यादित्याशंक्याह—**बन्धेति** । अल्पप्राणाक्षरयुक्तं शिथिलमुक्तम् ॥ ६९ ॥

२. तल्लक्षयति—**अनिष्ठुरेति** । अनिष्ठुराक्षरप्रायं मृद्वक्षरबहुलं निष्ठुराक्षरमिश्रं सुकुमारम् ॥ ६९ ॥

३. तस्य लक्षणमाह—**अनिष्ठुरेति** । निष्ठुराः किल क्षकारादयः; तदन्यत् अनिष्ठुरम् । तद्व्यामिश्रमिह वैदर्भमार्गे सुकुमारमित्युच्यते । सर्वकोमलेषु अक्षरेषु बन्धशैथिल्यदोषो दर्शितः ॥ ६९ ॥

१. सुकुमारमुदाहरति—

**मण्डलीकृत्य बर्हाणि कण्ठैर्मधुरगीतिभिः ।**
**कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि ॥ ७० ॥**

स्पष्टम् ॥ ७० ॥

२. सौकुमार्यमुदाहरति—मण्डलीकृत्येति ॥ ७० ॥

३. उदाहरणमाह—मण्डलीकृत्येति । मधुरगीतिभिः कण्ठैः उपलक्षिताः ॥ ७० ॥

**इत्यनूर्जित एवार्थो नालङ्कारोऽपि तादृशः ।**
**सुकुमारतयैवैतदारोहति सतां मुखम् (मनः) ॥ ७१ ॥**

१. इत्यनूर्जित एवार्थः, नार्थगौरवं शब्दगतमाश्रयगतं वा । नालङ्कारोऽपि तादृशः नाप्यलङ्कार ऊर्जितः अतिशयोक्त्यादिः । तथाऽपि सुकुमारतयैव सुकुमारत्वादेवैतदारोहति सतां मुखम् ॥ ७१ ॥

२. सौकुमार्यं प्रशंसति—इतीति । तदर्थः अपूर्वोऽर्थो रसवदर्थो वा न इति अनूर्जितः । तादृशः सुप्रसिद्धः शोभाकरो वा अलङ्कारः उत्प्रेक्षादिश्च नास्ति ॥ ७१ ॥

३. सुकुमारप्रशंसारूपेण निगमयति—इतीति । अनूर्जितः अतेजिष्ठः । अलङ्कारश्च न सुन्दरः ॥ ७१ ॥

**दीप्तमित्यपरैर्भूम्ना कृच्छ्रोद्यमपि बध्यते ।**
**न्यक्षेण क्षपितः पक्षः क्षत्रियाणां क्षणादिति ॥ ७२ ॥**

१. दीप्तमित्यपरैः गौडैर्भूम्ना बाहुल्येन कृच्छ्रेणोद्यते कृच्छ्रोद्यमसुकुमारं परुषाक्षरप्रायमपि बध्यते विरच्यते । उदाहरति—न्यक्षेण भार्गवेण पक्षः क्षपितः क्षत्रियाणां क्षणादिति एवंप्रकारम् ॥ ७२ ॥

२. सौकुमार्यविपर्ययं दीप्तमिति नाम्ना अपरे गौडाः स्वीकुर्वत इत्याह दीप्तमिति । कृच्छ्रोद्यं, कृच्छ्रेण उच्चार्यं, श्रमेण पठनीयम् । न्यक्षेण कात्स्न्र्येन; 'न्यक्षं कात्स्न्र्ये निकृष्टे च' इति वैजयन्ती ॥ ७२ ॥

३. सुकुमारस्य प्रत्युदाहरणमाह—दीप्तमिति । अपरैः गौडैः। न्यक्षेण साकल्येन ॥ ७२ ॥

१. अर्थव्यक्तिं व्याचष्टे—

**अर्थव्यक्तिरनेयत्वमर्थस्य हरिणोद्धृता ।**
**भूः खुरक्षुण्णनागासृग्लोहितादुदधेरिति ॥ ७३ ॥**

अर्थस्य यदनेयत्वं सार्थव्यक्तिः । यथा हरिणोद्धृता मुरवैरिणो-त्क्षिप्ता भूः पृथिवी उदधेः; किंभूतात्? खुरक्षुण्णनागासृग्लोहितात् उदधे-र्लोहितत्वे खुरक्षुण्णनागासृक् हेतुः ॥ ७३ ॥

२. अर्थव्यक्तिं लक्षयति—अर्थव्यक्तिरिति । अनेयत्वम् उपात्तेनैव शब्देन वाक्यार्थप्रतीतिः । अर्थव्यक्तिम् उदाहरति—हरिणेति ॥

३. अर्थव्यक्तिरिति । उक्तेनैव शब्देन विवक्षितार्थसिद्धिः अर्थ-व्यक्तिः । अनेयत्वं नाम वाक्ये शब्दान्तरस्य अध्याहारानाकांक्षा । अने-यत्वस्य उदाहरणमाह—हरिणेति । अत्र अर्थस्य शब्दान्तरनिरपेक्षता व्यक्ता ॥ ७३ ॥

१. नेयार्थमुदाहरति—

**मही महावराहेण लोहितादुद्धृतोदधेः ।**
**इतीयत्येव निर्दिष्टे नेयत्वमुरगासृजः ॥ ७४ ॥**

मही महावराहेण लोहितादुदधेरुद्धृता इति इयत्येव निर्दिष्टे नेय-त्वमनभिव्यक्तिः उरगासृजः ॥ ७४ ॥

२. अनेयार्थप्रतीत्यर्थं नेयार्थं दर्शयति—महीति ॥ ७४ ॥

३. शब्दान्तरसापेक्षत्वस्य उदाहरणं दर्शयति—महीति । अत्र तु लोहितसमुद्रस्य असम्भवात्, केन स लोहितः इति अपेक्षायाम्, उरगरुधि-रस्य नेयत्वात्, अध्याहार्योदाहरणमेतत् ॥ ७४ ॥

**नेदृशं बहुमन्यन्ते मार्गयोरुभयोरपि ।**
**न हि प्रतीतिः सुभगा शब्दन्यायविलंघिनी ॥ ७५ ॥**

१. नैवंविधं बहुमन्यन्ते सन्तः मार्गयोः वैदर्भगौडीययोरुभयोः ; यतः—न हि प्रतीतिः सुभगा शब्दन्यायविलङ्घिनी । भामहेनाप्युक्तम्—

नेयार्थं नीयतेऽनुक्तो यत्रार्थः कविभिर्बलात् ।
शब्दन्यायानुपारूढः कथञ्चित् स्वाभिसन्धिना ॥ इति ॥ ७५ ॥

२. अर्थव्यक्तिः मार्गद्वयसाधारणी इत्याह—नेति । अत्र हेतुमाह –न हीति । आकांक्षासन्निधियोग्यतावशेन पदैः प्रयुक्तैरेव अभिहितानां वाक्यार्थानां प्रतीतिं हित्वा अन्याभिधेयवत्त्वस्याभावः शब्दन्यायः ॥७५ ॥

३. नेति । शब्दन्यायविलङ्घिनी या सा प्रतीतिः सुभगा न । यावदर्थोऽभिमतः तावच्छब्देन भवितव्यम्; शब्दस्यापि यावदर्थप्रतिपादनशक्तिः तावदर्थेन भवितव्यम्; इति शब्दशास्त्रन्यायः ॥ ७५ ॥

१. उदारत्वमुदाहरति—

**उत्कर्षवान् गुणः कश्चिद्यस्मिन्नुक्ते प्रतीयते ।**
**तदुदाराह्वयं तेन सनाथा * सर्वपद्धतिः ॥ ७६ ॥**

१. उत्कर्षवान् सातिशयः कश्चित् शौर्यत्यागादिर्गुणो यस्मिन् अनुक्तोऽपि प्रतीयते, तदुदाराह्वयम् । तेन सनाथा सर्वपद्धतिः सर्वकाव्यरचना ॥ ७६ ॥

२. औदार्यं लक्षयति—उत्कर्षवानिति ॥ ७६ ॥

३. उदारगुणं दर्शयति उत्कर्षवानिति । सर्वपद्धतिः गौडवैदर्भयोः पद्धतिः, सर्वकाव्यनाटकादिपद्धतयो वा ॥ ७६ ॥

---

* काव्यपद्धतिः ।

१. तदुदाहरति—

अर्थिनां कृपणा दृष्टिः त्वन्मुखे पतिता सकृत् ।
तदवस्था पुनर्देव नान्यस्य मुखमीक्षते ॥ ७७ ॥

इति त्यागस्य वाक्येऽस्मिन्नुत्कर्षः साधु लक्ष्यते ।
अनेनैव पथाऽन्यच्च समानन्यायमूह्यताम् ॥ ७८ ॥

अन्यच्च अन्यदपि समानन्यायं सदृशमूह्यताम् ॥ ७७-७८ ॥

२. तदुदाहरति—अर्थिनामिति । तदवस्था कृपणावस्था । त्यागोत्कर्षवत्, शौर्यादिगुणोत्कर्षलक्षकवाक्यम् ऊह्यम् ॥ ७८-७९ ॥

३. अर्थिनामिति । तदवस्था कृपणा । अन्यच्च शौर्याद्यपि ॥

श्लाघ्यैर्विशेषणैर्युक्तमुदारं कैश्चिदिष्यते ।
यथा लीलाम्बुजक्रीडासरोहेमाङ्गदादयः ॥ ७९ ॥

१. श्लाघ्यैरुचितैः विशेषणैर्युक्तमुदारं कैश्चिदाचार्यैरिष्यते । यथेत्युदाहरणे । लीलाम्बुजं क्रीडासरः हेमाङ्गदम् । आदिशब्देन रत्नकुण्डलमत्तविलासिनीमदकरिप्रभृति ग्राह्यम् । अम्बुजादेर्लीलादिविशेषणं श्लाघ्यम् । एतदप्युदारमितीष्यत एव ॥ ७९ ॥

२. औदार्यं प्रकारान्तरेण लक्षयति—श्लाघ्यैरिति । वस्तुवैशिष्ट्यप्रतीतिकृद्विशेषणं दर्शयति—यथेति । कैश्चिदिति उभयविधः उदारार्थः प्रदर्श्यते ॥ ७९ ॥

३. श्लाघ्यैरिति । कैश्चिदाचार्यैः ॥ ७९ ॥

१. ओजोलक्षणमाह—

ओजस्समासभूयस्त्वमेतद्गद्यस्य जीवितम् ।
पद्येऽप्यदाक्षिणात्यानामिदमेकं परायणम् ॥ ८० ॥

तद् गुरूणां लघूनां च बाहुल्याल्पत्वमिश्रणैः ।
उच्चावचप्रकारं तद् दृश्यमाख्यायिकादिषु ॥ ८१ ॥

समासभूयस्त्वं समासप्राचुर्यमोजः । एतत् गद्यस्य जीवितं वैदर्भाणामिष्टम् । पद्येऽपि, न केवलं गद्ये, अदाक्षिणात्यानां गौडानामिदं समासभूयस्त्वमेकं प्रधानं परायणं शरणम् ॥

तदोजः । गुरूणां वर्णानां बाहुल्याल्पत्वमिश्रणैः उच्चमोजो भवति । लघूनां बाहुल्याल्पत्वमिश्रणैरवचमोजइति द्विविधम् ॥ ८०-८१ ॥

२. मार्गद्वयसाधारणम् ओजो लक्षयति—ओज इति द्वयेन । तत् ओजः–गुरुबहुलं लघुबहुलम् उत्कलिकाप्रायं पद्यगन्धि इति–बहुप्रकारम् । गुरुबहुलं यथा–'नाकनायकनिकायकामिनी' इति । लघुबहुलं यथा–'अवनिपवनवनगगनदहनतपनतुहिनकिरणयजमानमयीः' इति । मिश्रं यथा–'त्वङ्गत्तुङ्गतरङ्गदलिततारकम्' इति ॥ ८०-८१ ॥

३. ओज इति । गद्यस्य जीवितं प्रधानभूतम् ; एतद्दाक्षिणात्यानाम् । पद्येऽपि गद्येऽपि गौडानां इदं एकं परायणम् प्रधानगतिः इत्यर्थः । अथ ओजोगुणस्य वृत्तिप्रकारं दर्शयति–तदिति । तत् ओजोगुणसमवेतं, गुरूणां लघूनां च परस्परबाहुल्यात् , अल्पतया च , मिश्रणैश्च समेत्य, उच्चावचप्रकारं नैकभेदम् । तत् आख्यायिकादिषु द्रष्टव्यम् ॥ ८०-८१ ॥

१. गौडाभिमतमोजो दर्शयति–

**अस्तमस्तकपर्यस्तसमस्तार्कांशुसंस्तरा ।**
**पीनस्तनस्थिताताम्रवस्त्रेवाभाति वारुणी ॥ ८२ ॥**

अस्तमस्तके पर्यस्तः समस्तार्कांशुसंस्तरः यस्याः सा अस्तमस्तकपर्यस्तसमस्तार्कांशुसंस्तरा पीनस्तने स्थितमाताम्रं वस्त्रं यस्याः सा पीनस्तनस्थिताताम्रवस्त्रेव वारुणी पश्चिमा दिक् ॥ ८२ ॥

२. क्रमेण उदाहरति–अस्तेति । अस्तमस्तकम् अस्ताचलशिखरम् । वारुणी पश्चिमा दिक् ॥ ८२ ॥

इति पद्येऽपि पौरस्त्या बध्नन्त्योजस्विनीर्गिरः ।
अन्येऽप्यनाकुलं हृद्यमिच्छन्त्योजो गिरां यथा॥ ८३ ॥

पयोधरतटोत्सङ्गलग्नसन्ध्यातपांशुका ।
कस्य कामातुरं चेतो वारुणी न करिष्यति ॥ ८४ ॥

१. अन्येऽपि वैदर्भाः पुनः । वारुणी वरुणस्येयं वारुणी पश्चिमा दिक् ॥ ८३-८४ ॥

२. अयं गुणः गौडानामभिमततमः, दाक्षिणात्याः केचित् केचित् तमङ्गीकुर्वत इत्याह–इतीति । अन्येऽपीति । अनाकुलं अनुद्भटपदम् । तदुदाहरति—पयोधरेति ॥ ८३-८४ ॥

३. गद्य एव ईदृश्यः पर्याकुलाः ओजस्विन्यो द्रष्टव्या गिरः । पद्येऽपि ताः पौरस्त्यैः ग्रथ्यन्त इत्याह–इतीति। वैदर्भास्तु न ईदृशीः अङ्गीकुर्वन्ति इत्याह । अनाकुलम् आकुलताशून्यं, तेन हृद्यं हृदयहारि इच्छन्ति। उदाहरति-पयोधरेति ॥ ८३-८४ ॥

१. कान्तिं व्याचष्टे–
कान्तं सर्वजगत्कान्तं लौकिकार्थानतिक्रमात् ।
तच्च वार्ताभिधानेषु वर्णनास्वपि दृश्यते ॥ ८५ ॥

लौकिकार्थानतिक्रमात् लोके विदितो लौकिकः लोकप्रसिद्धः, स चासावर्थश्च तस्यानतिक्रमात् । तच्च कान्तं वार्ताभिधानेषु वार्ताप्रतिपादनेषु तथा वर्णनास्वपि दृश्यते ॥ ८५ ॥

२. कान्तलक्षणमाह–कान्तमिति । लौकिकार्थानतिक्रमात् लोकानुभवसंवादात् इति यावत् ॥ ८५ ॥

३. वैदर्भाणां कान्तस्वरूपमाह–कान्तमिति । कान्तं नाम सर्व-

जगत्कमनीयम् । तच्च लौकिकार्थानतिक्रमात् लौकिकार्थानुलङ्घनेन भवित-व्यम् । तत् कान्तं वार्ताभिधानेषु वर्णनासु च विद्यते । वार्ता नाम अन्यो-न्यकथनम् । वर्णना नाम प्रशंसावचनम् ॥ ८५ ॥

गृहाणि नाम तान्येव तपोराशिर्भवादृशः ।
सम्भावयति यान्येवं पावनैः पादपांसुभिः ॥ ८६ ॥

अनयोरनवद्याङ्गि स्तनयोर्जृम्भमाणयोः ।
अवकाशो न पर्याप्तस्तव बाहुलतान्तरे ॥ ८७ ॥

१. वार्ताभिधानेषु तावत् गृहाणि नामेत्यादि । वर्णनासु अनयो-रनवद्याङ्गीत्यादि ॥ ८६-८७ ॥

२. कान्तं वार्ताभिधाने वर्णनायां च क्रमेण उदाहरति-गृहाणीति द्वयेन ॥ ८६-८७ ॥

३. वार्ताऽभिधानोदाहरणम्-गृहाणीति । वर्णनोदाहरणम्-अन-योरिति । अवकाशो न पर्याप्तः, न परिपूर्णः । बाहुलतान्तरं बाहुलतयो-र्मध्यम् ॥ ८६-८७ ॥

इति सम्भाव्यमेवैतद्विशेषाख्यानसंस्कृतम् ।
कान्तं भवति सर्वस्य लोकयात्रानुवर्तिनः ॥ ८८ ॥

२. अनयोरुदाहरणयोः कान्तिमत्त्वं उपपादयति-इतीति । ऋषि-कल्पविशिष्टशापानुग्रहक्षमपुरुषोपश्लाघने परिणद्धोद्भिद्यमानस्तनकन्याविषयेऽपि कथ्यमानं एतत् कान्तं भवति ॥ ८८ ॥

३. वार्तावर्णनयोरेवंभूतं वाक्यं संभवति, लोकयात्रानुवर्तिनां का-न्तमपि सम्भवति इत्याह-इतीति । एतत् उक्तप्रकारं, विशेषवचसा संस्कृतं, पूज्यमेव लोकयात्रानुवर्तनशीलस्य ॥ ८८ ॥

१. गौडाभिमतमुदाहरति—

**लोकातीत इवात्यर्थमध्यारोप्य विवक्षितः।**
**योऽर्थस्तेनातितुष्यन्ति विदग्धा नेतरे जनाः॥ ८९॥**

**देवधिष्ण्यमिवाराध्यमद्य प्रभृति नो गृहम्।**
**युष्मत्पादरजःपातधौतनिःशेषकल्मषम्॥ ९०॥**

**अल्पं निर्मितमाकाशमनालोच्यैव वेधसा।**
**इदमेवंविधं भावि भवत्याः स्तनजृम्भणम्॥ ९१॥**

देवधिष्ण्यमिव देवायतनमिव। वर्णनामाह—अल्पमित्यादि॥८९-९१॥

२. कान्तिविपर्ययं अत्युक्तिनामगुणं गौडाभिमतं लक्षयति—लोकेति॥

शब्द इव अर्थे तत् उदाहरति—देवेति द्वयेन॥ ८९-९१॥

३. भृशमतिक्रान्त इव लोकयात्राम्, असन्नपि यः परमार्थतया वक्तुमिष्टः, तेन अर्थेन पौरस्त्यास्तुष्यन्ति न तु वैदर्भाः इत्याह—लोकेति। विदग्धाः पण्डिताः तुष्टा भवन्ति। अत्युक्तेरभीष्टत्वात्तेषाम्। विदग्धा इति गौडानाक्षिपति॥

देवेति। देवधिष्ण्यम् देवालयः; कल्मषं पापम्। इदमपि वार्तोदाहरणम्; अल्पमित्येतत् वर्णनोदाहरणम्। भवत्याः इदं स्तनजृम्भणम् एवं भावि इति अनालोच्यैव वेधसा आकाशं अवकाशं अल्पं निर्मितम्॥ ८९ ९१॥

**अत्युक्तिरियमित्युक्तमेतद्गौडोपलालितम्।**
**प्रस्थानं प्राक् प्रणीतं तु सारमन्यस्य वर्त्मनः॥ ९२॥**

१. प्राक् प्रणीतं तु गृहाणि नामेत्यादि अनयोरनवद्याङ्गीत्यादि च सारमन्यस्य वर्त्मनः वैदर्भमार्गस्य॥ ९२॥

२. इदमिति । अन्यस्य वर्त्मनो वैदर्भस्य सारं—गृहाणि नाम तान्येवेत्यादिश्लोकद्वयं पूर्वोक्तम् ॥ ९२ ॥

१. समाधिलक्षणमाह—

**अन्यधर्मस्ततोऽन्यत्र लोकसीमानुरोधिना ।**
**सम्यगाधीयते यत्र स समाधिः स्मृतो यथा ॥ ९३ ॥**

**कुमुदानि निमीलन्ति कमलान्युन्मिषन्ति च ।**
**इति नेत्रक्रियाध्यासाल्लब्धा तद्वाचिनी श्रुतिः ॥ ९४ ॥**

अन्यस्य धर्मिणो धर्मः अन्यत्र धर्म्यन्तरे सम्यक् आधीयते एकधर्मि(र्मि?)समवायादिकमवेक्ष्याध्यारोप्यते यत्र, तत्र समाधिरलङ्कारः । उदाहरणम्—कुमुदानीत्यादि । उन्मेषनिमेषावन्तःकरणसम्बन्धपूर्वेच्छाप्रयत्नकार्यौ, न कुमुदादिधर्मौ । तौ नेत्रधर्मावपि कुमुदकुवलयेष्वध्यारोप्येते । अध्यारोपाच्च तावुन्मेषनिमेषौ ब्रूत इति तद्वाचिनी श्रुतिर्लब्धा कुमुदादिभिरिति ॥ ९३-९४ ॥

२. समाधिं लक्षयति—अन्येति । अन्यस्य धर्मः अन्यधर्मः । ततोऽन्यत्र तस्माद्धर्मिणः अन्यस्मिन् धर्मिणि । लोकसीमानुरोधिना अर्थसादृश्यानुरोधिना । सम्यक् युक्तम् आधीयते यत्र तत्र स्यात्समाधिः । समाधिमुदाहरति—कुमुदानीति । कुमुदेषु कमलेषु च सङ्कोचविकासयोः सादृश्यात्, निमीलनोन्मेषौ अध्यस्य, निमीलन्ति उन्मिषन्ति इति शब्दौ प्रयुक्तौ ॥ ९३-९४ ॥

३. अन्येति । यत्र यो धर्मः तस्मादन्यत्र स समाधीयत इति समाधिः स्मृतः । उदाहरणम्—कुमुदानीति । कुमुदादिषु लोचनक्रियारोपात् तेष्वपि लोचनक्रियावाची शब्दो लब्धः ॥ ९३-९४ ॥

**निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् ।**
**अतिसुन्दरमन्यत्तु ग्राम्यकक्ष्यां व(वि)गाहते ॥ ९५ ॥**

१. निष्ठ्यूतादि गौणवृत्तिव्यपाश्रयं सुन्दरम् । अन्यत्तु मुख्यवृत्तिव्यपाश्रयं ग्राम्योक्तिमवगाहते ॥ ९५ ॥

२. केचिद्धर्माः मुख्यधर्मिणः अन्यस्मिन् धर्मिणि आधीयमानाः शोभन्ते , न तु मुख्यधार्मिणि , इत्याह—**निष्ठ्यूतेति** ॥ ९५ ॥

३. समाधिविषय एव श्लाघ्यानि , पक्षान्तरे ग्राम्याणि , पदानि आह—**निष्ठ्यूतेति** । निष्ठ्यूतं लालाजलत्यागः ; उद्गिरणं नाम जलादेर्यथेष्टत्यागः ; वमनं नाम पूर्वमेव वर्तमानस्य द्रव्यस्य बलात् निष्क्रमणम् । आदिशब्दात् उच्चारादयो गृह्यन्ते । ग्राम्यकक्ष्यां विगाहते हेयकल्पं भवति ॥ ९५ ॥

१. गौणवृत्तिव्यपाश्रयमुदाहरति—

**पद्मान्यर्कांशुनिष्ठ्यूताः पीत्वा पावकविप्रुषः ।**
**भूयो वमन्तीव मुखैरुद्गीर्णारुणरेणुभिः ॥ ९६ ॥**
**इति हृद्यमहृद्यं तु निष्ठीवति वधूरिति ।**
**युगपन्नैकधर्माणामध्यासश्च मतो यथा ॥ ९७ ॥**

इति हृद्यम् । मुख्यवृत्तिव्यपाश्रयं पुनरहृद्यम ; निष्ठीवति वधूरिति यथा । न केवलमेकधर्मस्यैकस्योन्मेषादेः पद्मादावध्यारोपस्तथा , युगपन्नैकधर्माणामपि अध्यासश्च मतः । नैकधर्माणामित्यत्र नलोपनुटावपि न भवतः , 'नञः' इति वचनात् नस्य सानुबन्धस्य प्रतिषेधवाचिनो ग्रहणात् ॥ ९६- ९७ ॥

२. तत् उदाहरति—**पद्मानीति** । पद्मेषु अर्कांशुषु च निष्ठीवनवमनोद्गिरणशब्दाः प्रयुक्ताः शोभन्ते । अपि तु निष्ठीवति वधूः , वमति, उद्गिरति वा इति अहृद्यम् । एकस्मिन् धर्मिणि अनेकधर्माध्यासं केचित् प्रतिषेधन्ति ; तान् प्रतिषेधति—**युगपदिति** ॥ ९६-९७ ॥

३. उदाहरणम्--पद्मानीति । उद्गीर्णारुणरेणुभिः मुखैः वमन्तीव । उक्तस्य शोभनतां विपर्यासे अशोभनतां च प्रकाश्य अनेकधर्माणामपि एकस्मिन् अध्यासो दृश्यत इत्याह–इतीति । नैकधर्माणाम् अनेकधर्माणाम् ॥ ९६-९७ ॥

१. उदाहरति—

**गुरुगर्भभरक्लान्ताः स्तनन्त्यो मेघपङ्क्तयः ।**
**अचलाधित्यकोत्सङ्गमिमाः समधिशेरते ॥ ९८ ॥**
**उत्सङ्गशयनं सख्याः स्तननं गौरवं क्लमः ।**
**इतीमे गर्भिणीधर्मा बहवोऽप्यत्र दर्शिताः ॥ ९९ ॥**

गर्भिणीधर्माः गर्भपरिक्लेशादयो बहवः स्त्रीधर्माः मेघपंक्तिषु दर्शिताः ॥ ९८-९९ ॥

२. तमुदाहरति—गुर्विति ॥ ९८-९९ ॥

३. उदाहरणं गुर्विति । स्तननं प्रकाशितस्वनम्(?) । अधित्यका पर्वतानां उपरितनमेखला । 'उपाधिभ्यां त्यकन्नासन्नदूरयोः'–इति त्यकन् प्रत्ययः ॥ ९८-९९ ॥

१. प्रकृतोपसंहारेण समाधिमभिष्टौति—

**तदेतत् काव्यसर्वस्वं समाधिर्नाम यो गुणः ।**
**कविसार्थः समग्रोऽपि तमेनमनुगच्छति ॥ १०० ॥**

कविसार्थः कविवर्गः । अनुगच्छति अनुसरति ॥ १०० ॥

२. समाधिः उभयोर्मार्गयोः साधारण इत्याह—तदिति ॥ १०० ॥

३. तदिति । तदेतत् समाधिवचनं काव्यानां सर्वस्वम् । कविसार्थः विद्वत्परिषत् । अत्रापि समाधिगुणः काव्यसर्वस्वम् इति ब्रुवता काव्यस्योपपादनात्(पादानात्) मार्गद्वयस्यापि साधारणस्समाधिरभिहितो भवति ॥ १०० ॥

१. प्रकृतमुपसंहरति—

इति मार्गद्वयं भिन्नं तत्स्वरूपनिरूपणात्।
तद्भेदास्तु न शक्यन्ते वक्तुं प्रतिकवि स्थिताः॥ १०१॥
इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत्।
तथाऽपि न तदाख्यातुं सरस्वत्यापि शक्यते॥ १०२॥

इत्यनन्तरोक्तप्रकारेण मार्गद्वयं भिन्नं तत्स्वरूपनिरूपणात् भिन्नलक्षणप्रतिपादनात्॥

यद्यपीक्ष्वादीनां माधुर्यस्यान्तरं महत महान् भेदः, तथाऽपि तत् प्रतिव्यक्तिगतं माधुर्यं सरस्वत्यापि न शक्यते कथयितुं यथा, एवं प्रतिकविस्थिता भेदाः प्रतिपादयितुं न शक्यन्ते॥ १०१-१०२॥

२. प्रतिपादितं मार्गद्वयभेदमुपसंहरति—**इतीति**॥१०१-१०२॥

३. **इतीति**। उक्तप्रकारेण प्रस्फुटान्तरौ वैदर्भगौडीयौ मार्गौ भिन्नौ। वैदर्भे च गौडे च तत्तत्कविवशात् पुनरपि भेदा भवन्ति। ते तु वक्तुं न शक्यन्ते। विद्यमानोऽपि भेदो वक्तुं न शक्यत इति दृष्टान्तेन समर्थयति—**इक्ष्विति**। इक्ष्वादीनां माधुर्यस्य अन्योन्यभेदः सुमहान्; तथाऽपि स माधुर्यविशेषः सरस्वत्यापि वक्तुं न शक्यते; स्वसंवेद्य इत्यर्थः। तद्वत् असावपीति यावत्॥ १०१-१०२॥

नैसर्गिकी च प्रतिभा श्रुतं च बहु निर्मलम्।
अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः॥ १०३॥

१. नैसर्गिकी च प्रतिभा स्वाभाविको बुद्धिगुणः। तथा श्रुतं च शास्त्रं बहु व्याकरणतर्कादिकं असन्दिग्धं निर्मलम्॥ १०३॥

२. कवित्वोत्पत्तौ हेतुमाह—**नैसर्गिकीति**। पूर्वजन्मकृतविद्याभ्यासोत्पन्नज्ञानजनितसंस्कारागता या बुद्धिः सा नैसर्गिकी प्रतिभा। बहु श्रुतं शब्दस्मृत्यभिधानकोशच्छन्दोविचितिचित्रकलाकामशास्त्रदण्डनीतिज्ञान-

रूपम् । निर्मलं सत्संप्रदायागतं श्रुतम् । अमन्दः अभियोगः काव्यज्ञशिक्षया सन्दर्भनिर्माणपदावापयोश्च विपुलः अभ्यासः । इति त्रयः समुदिताः कवित्वोत्पत्तौ मनस उल्लासे च हेतुः ॥ १०३ ॥

३. ईदृशकाव्यसम्पदो निमित्तमाह—नैसर्गिकीति । नैसर्गिकी स्वाभाविकी ; प्रतिभा ज्ञानम् । श्रुतं काव्यनाटकादिषु परिचयः । अभियोगः अभ्यासः ॥ १०३ ॥

न विद्यते यद्यपि पूर्ववासना-
श्रुतानुबन्धि प्रतिभानमद्भुतम् ।
श्रुतेन यत्नेन च वागुपासिता
ध्रुवं करोत्येव कमप्यनुग्रहम् ॥ १०४ ॥

१. श्रुतानुबन्धि प्रतिभानमद्भुतं श्रुतमनुबध्नाति यः प्रतिभागुणः स च यद्यपि नास्ति , तथाऽपि श्रुतेन शास्त्रश्रवणेन यत्नेन च विनयवैयात्यब्रह्मचरणादिना च वाक् वाणी भारती सरस्वती देवता सम्यगुपासिता भक्त्या आराधिता ध्रुवमवश्यं कमप्यनुग्रहं प्रसादं करोत्येव न न करोति । क्रियायाः पर एवकारोऽत्यन्तायोगं व्यवच्छिनत्ति ; यथा नीलं सरोजं भवत्येवेति ॥ १०४ ॥

२. नेति । जन्मान्तरवासनाजनितप्रतिभाभावेऽपि श्रुतेन शब्दस्मृत्यादिपरिज्ञानेन मन्त्रजपदेवतार्चनादिना च यत्नेन कवित्वं भवति ॥ १०४ ॥

३. पूर्वजन्मकृतपुण्यातिशयसंस्कारसञ्जातसमयज्ञानं यद्यपि न विद्यते , तथाऽपि यत्नेन श्रुतेन च उपासिता भगवती वाग्देवी ध्रुवं निरतिशयं अनुग्रहं करोतीत्यत्र न सन्देहः इत्याह—नेति ॥ १०४ ॥

तदस्ततन्द्रैरनिशं सरस्वती
श्रमादुपास्या खलु कीर्तिमिच्छुभिः ।
कृशे कवित्वेऽपि जनाः कृतश्रमा
विदग्धगोष्ठीषु विहर्तुमीशते ॥ १०५ ॥

इत्याचार्यदण्डिविरचिते काव्यादर्शे प्रथमः परिच्छेदः ।

---

१. यत एवं तस्मात् अस्ततन्द्रैः निरस्तालस्यैः अनिशमनवरतं सरस्वती क्रमादुपास्या, शनैः शास्त्राभ्यासो भक्तिपूर्वकः कर्तव्यः, खलु स्फुटं कीर्तिमिच्छुभिः । ननु यदि प्रतिभादयो न स्वाभाविकाः सन्ति गुणाः, ततः किं सरस्वत्युपासनेन वृथा हृद्रोगजननेनेत्यत आह—कृश इत्यादि । कवितागुणे कृशेऽपि कृतः श्रमः शास्त्राभ्यासो यैस्ते कृतश्रमाः पुरुषाः विदग्धानां शास्त्राभ्यासव्युत्पन्नबुद्धीनां कवीनां च गोष्ठीषु विहर्तुं क्रीडितुं वक्तुं च ईशते प्रभवो भवन्ति, विद्वन्मध्ये गण्यन्त इत्यर्थः ॥ १०५ ॥

**इति आचार्यदण्डिविरचितकाव्यादर्शटीकायां वादिजङ्घाल-देवविरचितायां मार्गविभावनापरिच्छेदः प्रथमः ॥**

---

२. तदिति । तत् सरस्वत्युपासनस्य अवन्ध्यत्वात्, अस्ततन्द्रैः मन्त्रजपादिना काव्यलक्षणादिपरिशीलनेन च अनिशमुपास्यमाना कीर्तिमीप्सुभिः सरस्वती कवित्वाभावेऽपि पण्डितगोष्ठीषु दोषगुणविवेचनवैदग्ध्यं ददाति ॥ १०५ ॥

**इति तरुणवाचस्पतिविरचितायां काव्यादर्शटीकायां प्रथमः परिच्छेदः ।**

---

३. तत् तस्मात् निरस्तालस्यैः कीर्तिकामैः पुरुषैः क्रमेण सरस्वती समाराध्या । कवित्वे कार्त्स्न्येन असत्यपि, प्रयत्नप्राबल्येन जना विद्वद्गोष्ठीषु विहर्तुम् ईशते, क्रीडितुं समर्था भवन्ति, इत्याह—तदिति । अस्ततन्द्रैः निरस्तालसभावैः । विदग्धगोष्ठीषु विद्वत्समाजेषु । शेषं सुबोधम् ॥ १०५॥

**इति दण्ड्यलङ्कारव्याख्याने हृदयङ्गमे वैदर्भगौडमार्गविभागो नाम प्रथमः परिच्छेदः ।**

---

## अथ द्वितीयः परिच्छेदः ।

१. तदेवं श्लेषप्रसादादिशब्दालङ्काररूपं मार्गभावा (विभाग)निरूपणद्वारेणाभिधाय साधारणमुभयमार्गव्यापकं (स्वभावाख्याना) दिभाविकपर्यन्तममुना द्वितीयपरिच्छेदेनोच्यते ।

**काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते ।**
**ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति ॥ १ ॥**

तत्रालङ्कारान् प्रचक्षते इत्यनेनास्य प्रकरणस्य शब्दभागरूपस्यालङ्काराभिधेयत्वप्रतिपा(दनान्निरभि)ध(धे)यत्वाशङ्कामपाकरोति । तथा काव्यशोभाकरान् धर्मानित्यनेनाभिधेयप्रयोजनप्रतिपादनात् काकदन्तपरीक्षावदप्रयोजनत्वा-(शङ्कामभिधे) यत्वं (स्य) निराकरोति ; यतश्शब्दार्थौ सहितौ काव्यम् । तत्र शब्दःकाव्यशरीरम् । तत् त्रिविधं चतुर्विधं चाख्यातम् । यदुक्तं 'तैः शरीरं च काव्यानामलङ्काराश्च दर्शिताः'इति । शब्दशरीराभिधानादेवार्थोऽप्यभिधेयः प्रदर्शित एव । इदानीं काव्यशरीरानन्तरं अलङ्कारानाह । काव्यशोभाकरान् धर्मानित्यादिनाऽलङ्कारसामान्यलक्षणमुक्तम् । अलङ्कारानिति लक्ष्यनिर्देशः । प्रचक्षते मेधाविरुद्रभामहादयः । तेचालङ्कारा अद्यापि नि (विकल्प्यं)ते । यद्यपि काव्यशोभाकराः धर्मा अलङ्कारा इत्युक्तम् ; तथाऽपि नैतावताऽलङ्कारसाधारणलक्षणमात्रकथनादेव ज्ञातुं पार्यन्ते । किं त्वद्यापि(उत्प्रेक्ष्य निरूप्यन्ते) लक्षणोदाहरणप्रदर्शनेन कतिचित् । यः तस्मात् (कस्तान्) (कार्त्स्न्येन) वक्ष्यति । तेषां (विकल्प्यमाना)नामा(नन्त्यात् कार्त्स्न्येन कथनमशक्यमिति) ॥ १ ॥

२. काव्यशरीरं मार्गभेदेन द्विधा विभक्तं दर्शितम् । इदानीं तद्धर्मान् अलङ्कारान् दर्शयितुं अलङ्कारसामान्यलक्षणमाह— काव्येति ।

काव्यशोभाकरा ये धर्माः ते अलङ्काराः। ते च अद्यापि विकल्प्यन्ते, तत्तदलङ्कारावान्तरभेदा बहवः कविभिः प्रयुज्यन्ते ; न पर्यवसिताः ॥ १ ॥

३. पूर्वस्मिन् परिच्छेदे वैदर्भगौडमार्गविभागार्थं काव्यशरीरप्रदर्शनार्थं च असाधारणधर्माः केचिदलङ्कारा उक्ताः; इदानीं शब्दरचनालक्षणतः प्रतिष्ठापितस्य काव्यशरीरस्य साधारणा ये अलङ्काराः ते अस्मिन् परिच्छेदे वक्ष्यन्ते; इत्यत्रानयोस्सम्बन्धः। वक्ष्यमाणस्य अलङ्कारस्य प्रथमं लक्षणप्रतिज्ञा क्रियते—काव्येति। अलङ्कारो नाम भूषणम्। यथा भूषणं अङ्गस्य शोभायै भवति, तथा काव्यशरीरस्य शोभां जनयतो धर्मान् अलङ्कारान् आमनन्ति। ते धर्माः अद्यापि विदुषां शेमुषीविशेषात् बहुधा विकल्प्यन्ते। अतः तान् साकल्येन अभिधातुं कः समर्थः ? न कोऽपि इति भावः। अपरे तु अलङ्कारलक्षणम् एवमाहुः—

'चतुर्णामपि पादानामादौ मध्येऽन्त एव वा।
स्थितिरेकपदस्यैव तदलङ्कारलक्षणम् ॥' इति ॥ १ ॥

१. तेषामतिबाहुल्याल्लक्षणप्रतिपादनम(शक्यं चेत् कथं भवतोऽत्र यत्नः ?) आह—

**किन्तु बीजं विकल्पानां पूर्वाचार्यैः प्रदर्शितम्।**
**तदेव परिसंस्कर्तुमयमस्मत्परिश्रमः ॥ २ ॥**

तदेव बीजं प्रतिसंस्कर्तुं विवरीतुमयमस्मत्परिश्रम इति। अनेनात्मनः स्वतन्त्रप्रतिषेधादनुपासितगुरुता(प्रयुक्तन्यूनतां परिह)रति ॥ २ ॥

२. सामस्त्येन वक्तुं न शक्यत इति कारणेन किं केचिदलङ्काराः परित्यज्यन्ते ? न इत्याह— किन्त्विति। सर्वावान्तरभेदगर्भं तत्तदलङ्कारलक्षणं पूर्वाचार्यैः प्रदर्शितम् ? तदेव तत्तद्विशेषवत्तया स्फुटीकर्तुम् अयमस्मदुपक्रमः ॥ २ ॥

३. किन्त्विति । कतिपयभेदा उदाह्रियन्ते ; तेऽपि न स्वबुद्धया । कथं पुनः आरम्भावकाश इति चेत्—तेषां भेदानां बीजं पूर्वाचार्यैः प्रदर्शितम् ; तदेव तदाधारतया व्याख्यातुम् अत्र अस्माकमुपक्रमः । बीजमिव बीजम् ; यथा बीजं अङ्कुरप्रसवादीनां कारणं, तद्वत् पूर्वाचार्यवचनमपि भेदानां कारणं भवितुमर्हतीति यावत् ॥ २ ॥

**काश्चिन्मार्गविभागार्थमुक्ताः प्रागप्यलंक्रियाः ।**
**साधारणमलङ्कारजातमद्य प्रदर्श्यते ॥ ३ ॥**

१. काश्चित् श्लेषप्रसादादयो वैदर्भगौडीयमार्गविभागार्थमुक्ताः । प्रागप्याद्यपरिच्छेदे । अलंक्रियाः अलङ्काराः । इदमन्यत् श्लेषादिभ्यः उभयमार्गसाधारणमलङ्कारजातं जात्यादि प्रदर्श्यते ॥ ३ ॥

२. काश्चिदिति । पूर्वं श्लेषादयो दश गुणा इत्युक्तम् । कथं ते अलङ्कारा उच्यन्त इति चेत्–शोभाकरत्वं हि अलङ्कारलक्षणम्, तल्लक्षणयोगात् तेऽपि अलङ्काराः । शोभाहेतवो गुणाः, शोभातिशयहेतवः अलङ्काराः, इति कैश्चिदुक्तम् । शोभातिशयहेतुत्वस्यैव विवक्षितत्वात् नायं भेदहेतुः, इति गुणा अलङ्कारा एव, इति आचार्याः । ततः श्लेषादयः गुणात्मकालङ्काराः पूर्वं मार्गप्रभेदप्रदर्शनाय उक्ताः । इदानीन्तु मार्गद्वयसाधारणा अलङ्कारा उच्यन्ते ॥ ३ ॥

३. काश्चिदिति । अस्मिन् परिच्छेदे वैदर्भगौडमार्गसाधारणम् अलङ्कारजातं प्रदर्श्यते इत्यर्थः ॥ ३ ॥

१. तत्र किंनामानोऽलङ्काराः, कियन्तः, किं च तेषां लक्षणम् । आह—

**स्वभावाख्यानमुपमा रूपकं दीपकावृती ।**
**आक्षेपोऽर्थान्तरन्यासो व्यतिरेको विभावना ॥ ४ ॥**

**समासातिशयोत्प्रेक्षा हेतुः सूक्ष्मो लवः क्रमः ।**
**प्रेयो रसवदूर्जस्वि पर्यायोक्तं समाहितम् ॥ ५ ॥**

**उदात्तापह्नुतिश्लेषविशेषास्तुल्ययोगिता ।**
**विरोधाप्रस्तुतस्तोत्रे व्याजस्तुतिनिदर्शने ॥ ६ ॥**

**सहोक्तिः परिवृत्त्याशीःसङ्कीर्णमथ भाविकम् ।**
**इति वाचामलङ्काराः स्मर्यन्ते पूर्वसूरिभिः ॥ ७ ॥**

स्वभावाख्यानादयो भाविकपर्यन्ताः इति वाचां शब्दानामलङ्कारा भूषणानि स्मर्यन्ते पूर्वसूरिभिः पूर्वाचार्यैः । स्मर्यन्त इति वचनात् तैरपि न क्रियन्ते । तेषां शब्दार्थसम्बन्धरूपेणानादित्वादित्युपदर्शयति ॥ ४-७ ॥

२. तानेव अलङ्कारान् उद्दिशति—**स्वभावाख्यानमिति** । दीपकावृत्ती इत्यत्र आवृतिशब्दः आवृत्तिवाचकः ; वृतु वर्तने इत्यस्मात् आङुपसृष्टात् इगुपधादिति इन्प्रत्ययः कित् । अर्थावृत्तिः पदावृत्तिः इत्यावृत्तिर्द्विविधा ॥ ४-७ ॥

३. तान् उद्दिशति—**स्वभावाख्यानमिति** । स्वभावाख्यानमित्यारभ्य स्मर्यन्ते पूर्वसूरिभिः इत्येतत्पर्यन्तं पञ्चत्रिंशदलङ्काराः प्रोक्ताः । पूर्वसूरिभिः काश्यपवररुचिप्रभृतिभिः ॥ ४-७ ॥

१. तत्र स्वभावोक्तेर्लक्षणम् ।

**नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती ।**
**स्वभावोक्तिश्च जातिश्चेत्याद्या साऽलंकृतिर्यथा ॥ ८ ॥**

नानावस्थं वि(वृण्व) किन्न(तीत्यन्तं) लक्षणम् । रूपं स्वभावमसाधारणं धर्मं पदार्थानां जातिक्रियागुणद्रव्याणां साक्षाद्वाचकेन शब्देन (अ)वक्रोक्तिरूपेण (विवृ)ण्वति(ती) स्वभावोक्तिश्चेति जातिश्चेति संज्ञाद्वयाङ्किता आद्यालंकृतिः प्रथमोऽलङ्कारः । यथेत्युदाहरणे ॥ ८ ॥

२. स्वभावाख्यानं लक्षयति—नानेति । पदार्थानां जातिक्रिया-गुणद्रव्याणां नानावस्थं नानाप्रकारं रूपं साक्षाद्विवृण्वती प्रत्यक्षमिव दर्शयन्ती आद्या अलंकृतिः, स्वभावोक्तिः जातिः इति च, संज्ञाद्वयाङ्किता उच्यते ॥ ८ ॥

३. उद्देशक्रमेण स्वभावाख्यानस्वरूपमाह—नानेति । पदार्थानां स्थावरजङ्गमानां जातिक्रियागुणद्रव्यवशेन अनेकधा स्थितं रूपं, साक्षात् अव्याजेन, विवृण्वती या उक्तिः, सा स्वभावोक्तिः स्वभावाख्यानम् । तस्यैव जातिरिति केषांचिदाचार्याणां संज्ञा । जातिक्रियागुणद्रव्येषु प्रथमं जातेरुदाहरणमनन्तरं क्रियादेः ॥ ८ ॥

**तुण्डैराताम्रकुटिलैः पक्षैर्हरितकोमलैः ।**
**त्रिवर्णराजिभिः कण्ठैरेते मञ्जुगिरः शुकाः ॥ ९ ॥**

**कलक्वणितगर्भेण कण्ठेनाघूर्णितेक्षणः ।**
**पारावतः परिभ्रम्य रिरंसुश्चुम्बति प्रियाम् ॥ १० ॥**

**बध्नन्नङ्गेषु रोमाञ्चं कुर्वन् मनसि निर्वृतिम् ।**
**नेत्रे चामीलयन्नेष प्रियास्पर्शः प्रवर्तते ॥ ११ ॥**

**कण्ठेकालः करस्थेन कपालेनेन्दुशेखरः ।**
**जटाभिः स्निग्धताम्राभिराविरासीद्वृषध्वजः ॥ १२ ॥**

१. (तुण्डैराताम्रकुटिलैः शुकाः) इति जातेरुदाहरणम् ॥ ९ ॥

कलक्वणितगर्भेण कण्ठेन पारावत इति क्रियायाः ॥ १० ॥

बध्नन्नङ्गेषु रोमाञ्चं प्रियाश्वासः प्रवर्तते इति गुणस्य ॥ ११ ॥

कण्ठे कालो वृषध्वजः इति द्रव्यस्य ॥ १२ ॥

२. शुकजातिस्वभावमाह–तुण्डैरिति । पारावतचुम्बनक्रियास्वरूपमाह–कलेति । प्रियास्पर्शगुणस्वरूपमाह–बध्नन्निति। ईश्वरद्रव्यस्वभावमाह

कण्ठेकाल इति । करस्थेन कपालेन , जटाभिः स्निग्धताम्राभिः , इत्यत्र इत्थंभूतलक्षणे तृतीया ॥ ९-१२ ॥

३. उदाहरणानि—तुण्डैरित्यादयः । तुण्डैः चञ्चुभिः ; इत्थंभूतलक्षणे तृतीया । मञ्जु मधुरम् ॥ ९-१२ ॥

१. स्वयं व्याचष्ट—

**जातिक्रियागुणद्रव्यस्वभावाख्यानमीदृशम् ।**
**शास्त्रेष्वस्यैव साम्राज्यं काव्येष्वप्येतदीप्सितम् ॥ १३ ॥**

एवंविधमन्यदपीति ईदृशशब्द(दे)सर्वनामा(म)दर्शयति । शास्त्रेष्वस्यैव स्वभावाख्यानस्यैवालङ्कारस्य साम्राज्यं प्रभावः(?)प्राचुर्यम् । क(त)था काव्येष्वप्येतदीप्सितम् । तथा च यदुक्तम् कैश्चित् 'गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय वायसाः । इत्येवमादिकं (किं) काव्यं वार्तामेनां प्रचक्षते' इति तन्निरस्तम् ॥ १३ ॥

२. जातीति । जातिः गोत्वाश्वत्वशुकत्वादिः ; क्रिया गमनवचनरमणादिः ; गुणः शब्दस्पर्शरूपादिः ; द्रव्यं आकाशविष्णुव्रजादि । शास्त्रेषु इदं स्वभावाख्यानमेव भाति ; तत् तत्तद्वस्तुतत्त्वकथनात् काव्येष्वपि हृद्यतमम् ॥ १३ ॥

३. जातीति । शास्त्रेषु धर्मागमादिशास्त्रेषु अनृतवचनाभावात् अस्यैव स्वभावालङ्कारस्य साम्राज्यं सम्पत्तिः भवति । काव्येषु वर्णनाप्राधान्यात् असत्यवचनं कल्पितमपि च अस्ति । तस्मात्तेषु स्वभावालङ्कारस्य नास्ति बहुलता , किञ्चिदीप्सितत्वं भवति ॥ १३ ॥

१. उपमालक्षणमाह—

**यथा कथंचित् सादृश्यं यत्रोद्भूतं प्रतीयते ।**
**उपमा नाम सा तस्याः प्रपञ्चोऽयं प्रदर्श्यते ॥ १४ ॥**

यथा कथञ्चित् येन केनचित् प्रकारेण सादृश्यं समानो धर्मो यत्र यत्रोद्भूतं प्रकटं प्रतीयते, उपमा नाम सा । तस्याः प्रपञ्चोऽयमलंकृतः प्रदर्श्यते ॥ १४ ॥

२. उपमां लक्षयति—यथेति । 'भूयोऽवयवसामान्ययोगो जात्यन्तरस्य तत्'—इति सादृश्यलक्षणम् अन्यैरुक्तम् । नेदं तल्लक्षणम् । किंतु गुणद्रव्यक्रियाजातिषु उभयोः एकतमयोगः सादृश्यम्; इति यथाकथञ्चित् इत्युच्यते । उद्भूतं शब्देन अभिहितं वा प्रतीयते वा यत्र तत्र उपमा । अत्र वा-शब्दः अध्याहार्यः । अभिधीयमानसादृश्या प्रतीयमानसादृश्या इति द्विविधा उपमा । अलङ्कारान्तराणामपि प्रपञ्चनिदर्शनार्थम् अस्या उपमायाः प्रपञ्चः प्रदर्श्यते ॥ १४ ॥

३. अतः परं उपमालङ्कारलक्षणमाह—यथेति । यत्र उद्भूतं सादृश्यं यथाकथञ्चित् प्रतीयते, उपमा नाम सा । तस्या उपमायाः अयं प्रपञ्चः अत्र प्रदर्श्यते । तन्त्रान्तरेष्वपि उपमालक्षणमुक्तम् । तद्यथा—

द्रव्यं द्रव्येण यच्चान्यत् साधर्म्यादुपमीयते ।
प्रायशः कृत्स्नशो वाऽपि तदौपम्यस्य लक्षणम् ॥

समानमधिकं हीनं विपरीतैकदेशिकम् ।
याहच्छिकमभूतं च सप्तौपम्यार्थसंग्रहः ॥

भवदत्तो हि मेधावी पितेवेति समोपमा ।
अतसीपुष्पसङ्काश इषुरित्यधिकोपमा ॥

आननं शशितुल्यं ते तन्त्रीस्वर इव स्वरः ।
पद्मपत्रनिभं नेत्रमिति हीनोपमा स्मृता ॥

यथा त्वं गुणवान् लोके तथा ते निर्गुणो रिपुः ।
इतीदमुपमानं तु विपरीतमिति स्मृतम् ॥

मद्ध्याह्ने सूर्यवद्भाति भवानित्येकदेशिकम् ।
यादृच्छिकमितो व्योम्नः पतत्युल्केव देवता ॥

भवतो रोषसम्पात्तिरौष्ण्यं चन्द्रमसो यथा ।
अभूतमप्रतर्क्यार्थमभूतोपममिष्यते ॥

इत्येवं सप्तविधानां उपमानानां प्रकारः धर्मोपमाद्युपमासु यथासम्भवं द्रष्टव्यः ।

**अम्भोरुहमिवाताम्रं मुग्धे करतलं तव ।**
**इति धर्मोपमा साक्षात् तुल्यधर्मप्रदर्शनात् ॥ १५ ॥**

१. इत्येषा धर्मोपमा । आताम्रमिति धर्मस्तस्य साक्षादाताम्रशब्देन तुल्यस्याम्भोरुहकरतलोभयधर्मिसाधारणस्य निदर्शनात् ॥ १५ ॥

२. अम्भोरुहमिति । आताम्रशब्देन समानधर्मस्याभिधीयमानत्वात् धर्मोपमा ॥ १५ ॥

३. अतः परम् उदाहरणानि । यानि दुर्बोधानि तान्येव व्याख्यायन्ते । अम्भोरुहमिति धर्मोपमामाह ; अत्र धर्म इति उच्यते ताम्रगुणः ॥ १५ ॥

**राजीवमिव ते वक्त्रं नेत्रे नीलोत्पले इव ।**
**इयं प्रतीयमानैकधर्मा वस्तूपमैव सा ॥ १६ ॥**

१. इत्येषा प्रतीयमानो गम्यमानोऽनुपात्त एको धर्मः राजीवमुखयोः कान्तिः नेत्रनीलोत्पलयोश्च दैर्घ्यं यस्याः सा प्रतीयमानैकधर्मा वस्तूपमैव । वस्तुशब्दोऽन्यत्र द्रव्यादिषु वर्तमानो (त्र धर्मिपरः । धर्मं विना राजीवनीलोत्पलाभ्या) मुपमीयेते मुखनेत्रे यतस्ततो वस्तूपमा धर्म्युपमेत्युच्यते ॥

२. राजीवमिति । प्रतीयमानैकसौरभ्यादिधर्मा वस्तूपमा । अतः परम् उपमाभेदलक्ष्यलक्षणानि प्रायेण सुगमानि इति न व्याख्यातानि ॥ १६

३. वस्तूपमामाह-राजीवमिति । एवम्, उक्ते(?)अनुक्तेऽपि धर्मे, वस्तुनि उक्ते सति, प्रतीयमानैकधर्मत्वात् वस्तूपमा मता ॥ १६ ॥

त्वदाननमिवोन्निद्रमरविन्दमभूदिति ।
सा प्रसिद्धिविपर्यासाद्विपर्यासोपमेष्यते ॥ १७ ॥

१. (प्रसिद्ध) रुपमानोपमेयभावस्य विपर्यासात् मुखारविन्दयोरुपमानोपमेयभावस्य प्रदर्शनाद्विपर्यासोपमानं(पमा) ॥ १७ ॥

३. त्वदाननमिति । अम्भोजादीनाम् उपमानत्वेन प्रसिद्धिः; वक्त्रादीनां उपमेयत्वेन प्रसिद्धिः । अत्र तु मुखम् उपमानत्वेन कमलं उपमेयत्वेन उक्तमिति, प्रसिद्धेः विपर्यासात्, असौ विपर्यासोपमा ज्ञातव्या ॥ १७ ॥

तवाननमिवाम्भोजमम्भोजमिव ते मुखम् ।
इत्यन्योन्योपमा सेयमन्योन्योत्कर्षशंसिनी ॥ १८ ॥

त्वन्मुखं कमलेनैव तुल्यं नान्येन केनचित् ।
इत्यन्यसाम्यव्यावृत्तेरियं सा नियमोपमा ॥ १९ ॥

पद्मं तावत् तवान्वेति मुखमन्यच्च तादृशम् ।
अस्तिचेदस्तु तत्कारीत्यसावनियमोपमा ॥ २० ॥

१. अत्र मुखेनाम्भोजमुपमीयते । अम्भोजेन मुखमित्यन्योन्योपमा अन्योन्योत्कर्षशंसिनीति हेतुः अन्योन्यातिशयशंसित्वादन्योन्योपमा ॥ १८ ॥

त्वन्मुखं कमलेनैव तुल्यं नान्येन चन्द्रादिना केनापि सदृशमित्यन्यसाम्यव्यावृत्तेरप(र)साधर्म्यनिषेधादियमित्थंभूता सा नियमोपमेत्युच्यते॥ १९॥

पद्मं तावत्तवान्वेति मुखं पद्मसदृशं तावत् त्वन्मुखम् । अन्यदपि वस्तु यदि पद्मसमं कान्तं किमप्यस्ति तदा तत्कारि तद्वस्तुनापि त्वन्मुखं सममस्त्विति नियमकरोऽ(स्या)करणादसावनियमोपमा ॥ २० ॥

३. पद्ममिति। तत्कारि सादृश्यकारि ॥ २० ॥

**समुच्चयोपमाऽप्यस्ति न कान्त्यैव मुखं तव।**
**ह्लादनाख्येन चान्वेति कर्मणेन्दुमितीदृशी ॥ २१ ॥**

१. समुच्चयोपमाऽप्यस्ति न कान्त्यैवैकया ह्लादनाख्येन चानन्द-जनकत्वेन च कर्मणा त्वन्मुखमिन्दुमन्वेतीतीदृशी ॥ २१ ॥

**त्वय्येव त्वन्मुखं दृष्टं दृश्यते दिवि चन्द्रमाः।**
**इयत्येव भिदा नान्येत्यसावतिशयोपमा ॥ २२ ॥**

१. त्वय्येव त्वन्मुखं दृष्टं न दिवि दृश्यते दिवि चन्द्रमाः न त्वयीति इयत्येव भिदा इयानेव भेदो मुखचन्द्र(यो)र्न कान्तिकृतोऽस्तीत्यातिशय-ख्यापनादतिशयोपमा ॥ २२ ॥

३. त्वयीति। भिदा भेदः ॥ २२ ॥

**मय्येवास्या मुखश्रीरित्यलमिन्दोर्विकत्थनैः।**
**पद्मेऽपि सा यदस्त्येवेत्यसावुत्प्रेक्षितोपमा ॥ २३ ॥**

१. मय्येवास्याः कान्तायाः मुखश्रीर्वदनशोभेत्यलं प्रतिषेधः (?)। इन्दोर्वि-कत्थनैः श्लाघनैः। कुतो विकत्थनैरलमित्याह--पद्मेऽपि सा यदस्त्येव। (न) केवलमस्य मुखश्रीश्चन्द्रे तथा पद्मेऽप्यस्तीत्यसावुत्प्रेक्षितोपमा। चन्द्रः किलैवं मन्यत इति कामुकेनोत्प्रेक्ष्यत इत्युत्प्रेक्षा। चन्द्रपद्मगतकान्तिसादृश्याच्च मुखस्येत्यु(स्यो)पमा ॥ २३ ॥

३. मयीति। अस्याः मुखश्रियं लब्ध्वा हि चन्द्रमाः आत्मानं बहु-मनुत इत्युत्प्रेक्षा। उत्प्रेक्षितार्थविशेषिता उपमा उत्प्रेक्षितोपमा। विकत्थनैः श्लाघादिभिः ॥ २३ ॥

१. अद्भुतोपमामाह—

**यदि किञ्चिद्भवेत्पद्मं सुभ्रु विभ्रान्तलोचनम्।**
**तत् ते मुखश्रियं धत्तामित्यसावद्भुतोपमा ॥ २४ ॥**

यदि किञ्चिद्भवेत् पद्मं भ्रूः (सुभ्रु) उन्नतभ्रूः (भ्रु) तथा विभ्रान्तलोचनं विभ्रान्ते लोचने यस्य तद्विभ्रान्तलोचनम् । तत्त तव मुखश्रियं धत्तां नान्यथाद्भुतमित्यद्भुतोपमा । अद्भुतत्वं च तथाभूतस्य पद्मस्याभा(वा)दिति ॥ २४ ॥

३. यदीति। (?) विभ्रान्तलोचनं भ्रूविलाससहितं परिभ्रान्तनेत्रम्॥ २४

१. मोहोपमामाह—

**शशीत्युत्प्रेक्ष्य तन्वङ्गि त्वन्मुखं त्वन्मुखाशया।**
**इन्दुमप्यनुधावामीत्येषा मोहोपमा स्मृता ॥ २५ ॥**

इति। यदेतत् त्वन्मुखं तदेव शशीति मत्वा त्वन्मुखाशया त्वदाननस्पृहया इन्दुमप्यनुधावामीत्येषा मोहोपमा । मोहश्च मुखचन्द्रमसोर्विवेकानवगतेः ॥२५॥

**किं पद्ममन्तर्भ्रान्तालि किं ते लोलेक्षणं मुखम् ।**
**मम दोलायते चित्तमितीयं संशयोपमा ॥ २६ ॥**

१. किं पद्ममन्तर्भ्रान्तालि अन्तर्भ्रान्तोऽलिः भ्रमरो यस्य तदन्तर्भ्रान्तालि । किं ते लोलेक्षणं मुखं लोले तरले ईक्षणे चक्षुषी यस्य तल्लोलेक्षणं किं वा त्वदीयं मुखमिदमिति मम डोलायते चित्तम् । अन्तर्भ्रान्तालिनः पद्मस्य लोले(क्षणस्य मुखस्य) च समानधर्मत्वात् 'समानानेकधर्मोपपत्तेश्च संशयः' इति संशय इति संशयोपमा ॥ २६ ॥

१. निर्णयोपमामाह—

**न पद्मस्येन्दुनिग्राह्यस्येन्दुलज्जाकरी द्युतिः ।**
**अतस्त्वन्मुखमेवेदमित्यसौ निर्णयोपमा ॥ २७ ॥**

इन्दुना सङ्कोचं नीयमानस्य पद्मस्य इन्दुलज्जाकरणशीला न कान्तिरस्ति । त्वन्मुखमेवेन्दुं स्वकान्त्या लज्जयति । अतस्त्वन्मुखमेवेदं न पद्ममिति निर्णयोपमा ॥ २७ ॥

३. नेति । निर्णयो निश्चयः ॥ २७ ॥

१. श्लेषोपमामाह--

**शिशिरांशुप्रतिद्वन्द्वि श्रीमत् सुरभिगन्धि च ।**
**अम्भोजमिव ते वक्त्रमिति श्लेषोपमा स्मृता ॥ २८ ॥**

पद्मं चन्द्रश्च द्वौ द्वौ च (चन्द्रप्रतिद्वन्द्वि ; अथवा चन्द्रविद्वेषि) लक्ष्मी-धाम सुरभिमकरन्दम् । मुखमपि शिशिरांशुप्रतिस्पर्धि (श्रीमत् शो) भावात् (वत्) सुरभिगन्धि सुरभिगन्धिनिश्वासमिति ॥ २८ ॥

२. शिशिरेति । अम्भोजपक्षे--शिशिरांशुः प्रतिद्वन्द्वी बाधकः यस्य इति शिशिरांशुप्रतिद्वन्द्वि ; श्रीमत् लक्ष्मीनिवासभूतम् । वक्त्रपक्षे-शिशिरांशोः प्रतिद्वन्द्वि चन्द्रसमानम् ; श्रीमत् कान्तिमत् । सुरभिगन्धि इति उभयत्र समानम् ॥ २८ ॥

१. सन्दानोपमामाह--

**सरूपशब्दवाच्यत्वात् सा समा(न्दा)नोपमा यथा ।**

समानं रूपं ये(षां ते सरूपाः) ते च ते शब्दाश्च तैर्वाच्यत्वात् । तस्या उदाहरणम्--

**बालेवोद्यानमालेयं सालकाननशोभिनी ॥ २९ ॥**

१. बाला तावत्, सहालकैर्वर्तत इति (सालकं ; तच्च)तदाननं च सालकाननं तेन शोभत इत्येवं शील(ला) । उद्यानमाला च सालाः सालद्रुमाः तेषां काननं तेन शोभत इति श्ले(षोपमाया) मर्थ(त): सारूप्यं, सन्दानोपमायां शब्दाम(ब्दतो ना)र्थत इत्युभयोर्भेदः ॥ २९ ॥

२. सरूपेति । सरूपशब्दवाच्यत्वात्--तादृशशब्दस्य अनेकद्रव्य-योगेन । सालकाननशोभिनी--उद्यानमाला सालानां काननेन शोभते ; बाला सालकेन आननेन शोभते ॥ २९ ॥

३. सरूपेति । सरूपः समानरूपः ; सरूपश्चासौ शब्दश्च सरूपशब्दः ; सरूपशब्दवाच्यत्वात् समानशब्दाभिधेयत्वात् । सालकानन-

शोभिनी–सालो नाम कश्चित् वृक्षविशेषः ; सालानां काननं सालकाननम्। अन्यत्र सालकाननम् अलकसहितं मुखम् ॥ २९ ॥

१. निन्दोपमामाह—

**पद्मं बहुरजश्चन्द्रः क्षयी ताभ्यां तवाननम् ।**
**समानमपि सोत्सेकमिति निन्दोपमा स्मृता ॥ ३० ॥**

रजः क्षयश्चेति दोषौ तद्वद् द्वाभ्यां (तद्वद्भ्यां)पद्मचन्द्राभ्यां समस्य त्वन्मु खस्योत्सेको न युक्त इति केनापि कामिना चन्द्रनिन्दाव्याजेन कान्तामुखं तत्सममाप(पा)द्यत इति निन्दोपमा ॥ ३० ॥

३. पद्ममिति । रजः मनसो दोषविशेषः परागश्च । रजःक्षयि-शब्दाभ्यां निन्दा प्रतीयते । त्वन्मुखस्य स दोषो नास्ति । अतः ताभ्यां समानमपि तव मुखं सोत्सेकं सगर्वं भवति । तस्मान्निन्दा ॥ ३० ॥

१. प्रशंसोपमामाह—

**ब्रह्मणोऽप्युद्भवः पद्मश्चन्द्रः शम्भुशिरोधृतः ।**
**तौ तुल्यौ त्वन्मुखेनेति सा प्रशंसोपमोच्यते ॥ ३१ ॥**

उद्भवत्यस्मादित्युद्भवः । पद्मः सकलभुवननिर्माणकारणस्य भगवतो ब्रह्मणोऽपि जन्मभूमिः । चन्द्रः शम्भुशिरोधृतः, धूर्जटिना जटाजूटे चूडामणीकृतश्चन्द्रः । तौ पद्मचन्द्रौ त्वन्मुखेन तुल्यौ इति सा प्रशंसोपमोच्यते ॥

**चन्द्रेण त्वन्मुखं तुल्यमित्याचिख्यासु मे मनः ।**
**स गुणो वास्तु दोषो वेत्याचिख्यासोपमां विदुः ॥ ३२ ॥**

१. स गुणो वाऽस्तु चन्द्रः शम्भुशिरोधृतः तेन तुल्यम् ; दोषो (वा) क्षयी चन्द्रः तेन समं त्वन्मुखमित्या(चि)ख्यासोपमा । आख्यातुमिच्छयोपमानत्वात् ॥ ३२ ॥

**शतपत्रं शरच्चन्द्रस्त्वदाननमिति त्रयम् ।**
**परस्परविरोधीति सा विरोधोपमा मता ॥ ३३ ॥**

१. परस्पराविरोधि परस्परस्पर्धीति सा विरोधोपमा मता । विरोध-शब्दे(न) सादृश्योपम(श्यरूपोपमाऽ) भिधानात् ॥ ३३ ॥

न जातु शक्तिरिन्दोस्ते मुखेन प्रतिगर्जितुम् ।
कलङ्किनो जडस्येति प्रतिषेधोपमैव सा ॥ ३४ ॥

१. न च कदाचित् सामर्थ्यं चन्द्रमसः त्वन्मुखेन सह प्रतिगर्जितुं स्पर्धां कर्तुम् । कथंभूतस्य कलङ्किनो जडस्य च । न त्वन्मुखं सकलङ्कं नापि जडत्व(जड) मित्यतो न समान वि(इति)प्रतिषेधोपमा ॥ ३४ ॥

१. चा(च)टूपमामाह—

मृगेक्षणाङ्कं ते वक्त्रं मृगेणैवाङ्कितः शशी ।
तथापि सम एवासौ नोत्कर्षीति चटूपमा ॥ ३५ ॥

मृगेक्षणाङ्कं ते वक्त्रं ; मृग्या ईक्षणे मृगस्ये(गे)क्षणे मृगेक्षणादिषु तत्पुरुषे पुंवद्भावात् । अथवा मृगस्येक्षणे मृगेक्षणे मृग इति मृगत्वजातिपरिग्रहात् शब्दे-नमृग मृगमृग्योर्ग्रहणम् । मृगेक्षणे इव (ईक्षणे) मृगेक्षणे ताभ्यामङ्क्यत इति मृगे-क्षणाङ्कम् । एकस्येक्षणशब्दस्य गम्यमानत्वान्निवृत्तिः मृगलोचनादिवत् मृग-लोचनसदृशनयनमित्यर्थः । मृगेणैवाङ्कितश्शशी । शशी पुनर्हरिणेनैवाङ्कितः । एणाङ्क इति तस्य (प्र)सिद्धत्वात् । मृग इति यद्यपि शशवराहादौ साम-स्त्येन रूढस्तथाप्यत्र मृगेक्षणाङ्कं ते वक्त्रमित्यादिसशब्द(सन्दर्भ)सामर्थ्या-देणसारङ्गयोर्वर्तते । ....(त)दीक्षणानामेव नयनोपमानत्वात् । तथापि सम एवासौ सकलमृगशरीराङ्कितोऽपि त्वन्मुखेन सम एव नोत्कर्षी नाधिक इति चाटूपमा कश्चित्कामुकः कान्ताचाटूनि कर्तुमभ्यधात् ॥ ३५ ॥

१. तत्त्वाख्यानोपमामाह—

न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे ।
इति विस्पष्टसादृश्यात् तत्त्वाख्यानोपमैव सा ॥ ३६ ॥

२. नेति । संशय्य प्रमाणेन निश्चितत्वात् तत्त्वाख्यानोपमा ॥ ३६ ॥

१. असाधारणोपमामाह—

चन्द्रारविन्दयोः कक्ष्यामतिक्रम्य मुखं तव ।
आत्मनैवाभवत्तुल्यमित्यसाधरणोपमा ॥ ३७ ॥

चन्द्रारविन्दयोः कक्ष्यां समतामतिक्रम्य मुखं तवात्मनैवाभवत् तुल्यं, न त्वपरस्य वस्तुनः, तत्समस्योपमानभूतस्याभावादित्यसाधारणोपमा ।

गगनं गगनाकारं सागरस्सागरोपमः ।

इत्यादि चासाधारणोपमाया उदाहरणं द्रष्टव्यम् ॥ ३७ ॥

२. चन्द्रेति । कक्ष्यां तुल्यताम् । आत्मना स्वयमेव तुल्यम् इत्यसाधारणोपमा इयम् ॥ ३७ ॥

१. अभूतोपमामाह—

सर्वपद्मप्रभासारः समाहृत इव क्वचित् ।
त्वदाननं विभातीति तामभूतोपमां विदुः ॥ ३८ ॥

सकलपद्मप्रभासारस्यैकत्र समाहरणासम्भवात्, अभूतेनार्थेनोपमीयत इत्यभूतोपमा ॥ ३८ ॥

२. सर्वेति । सकलकमलप्रभासारस्य आश्रयं विना समुचितस्य क्वचिदपि अभावात् अभूतोपमा ; अद्भुतोपमायां तु सिद्धस्य धर्मिणो धर्म्यन्तरावयवैर्योगः अद्भुतः ; इति भेदः ॥ ३८ ॥

चन्द्रबिम्बादिव विषं चन्दनादिव पावकः ।
परुषा वागितो वक्त्रादित्यसम्भावितोपमा ॥ ३९ ॥

१. न खलु कदाचित् सुधासूतिमण्डलात् विषसम्भवः चन्दनतरोरग्निसम्भवो न (वा ?) भवतीत्यसम्भावितोपमा । शेषं स्पष्टम् ॥ ३९ ॥

चन्दनोदकचन्द्रांशुचन्द्रकान्तादिशीतलः ।
स्पर्शस्तवेत्यतिशयं बोधयन्ती बहूपमा ॥ ४० ॥

१. चन्द्नोदकादि(भिः) बहुभिः शीतस्पर्शस्योपमीयमानत्वात् बहूपमोच्यते ॥ ४० ॥

२. चन्दनेति । बहुभिः उपमितत्वात् बहूपमा ॥ ४० ॥

**चन्द्रबिम्बादिवोत्कीर्णं पद्मगर्भादिवोद्धृतम् ।**
**तव तन्वङ्गि वदनमित्यसौ विक्रियोपमा ॥ ४१ ॥**

१. उत्किरणोद्धरणयोश्चन्द्रपद्मविकारत्वात्(?) विक्रियोपमोच्यते ॥४१॥

२. चन्द्रेति । उपमानस्य वस्तुनः विकारत्वेन उपमेयस्य वस्तुनः प्रकाशनं कृतम् ; अतो विक्रियोपमा ॥ ४१ ॥

१. मालोपमामाह—

**पूष्ण्यातप इवाह्नीव पूषा व्योम्नीव वासरः ।**
**विक्रमस्त्वय्यधाल्लक्ष्मीमिति मालोपमा मता ॥ ४२ ॥**

पूष्णि आदित्ये आतप इव, अह्नि दिवसे पूषेव आदित्य इव, व्योम्नि आकाशे वासरो दिवस इव, विक्रमस्त्वयि लक्ष्मीं शोभामधादिति मालोपमाक्रमः । एवंविधोऽन्यो मालालङ्कारो भवतीत्यर्थः ॥ ४२ ॥

२. पूष्णीति । पूष्णि यथा आतपः लक्ष्मीमधात् तद्वत् ॥ ४२ ॥

१. वाक्यार्थोपमामाह—

**वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते ।**
**एकानेकेवशब्दत्वात् सा वाक्यार्थोपमा द्विधा ॥ ४३ ॥**

'साख्यातं(तः?) साव्ययश्चैव सविशेषं(षः) सकारकम्(कः?) । अनेकपदसन्दोह(हो?) रूपमेकतिसाभिधेयमिति (वाक्यमित्यभिधीयते' इति?) वाक्यं परिगृह्यते । तस्यार्थो वाक्यार्थः । तेन वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते । एतदुक्तं भवति । वाक्यार्थ एव यद्युपमानं भवति तथा वाक्यार्थ एव चोपमेयः तदा सा वाक्यार्थोपमा । सा च द्विधा द्विप्रकारा । कथं पुनर्द्वैविध्यमित्याह एकानेकेवशब्दत्वात् । एकश्चानेकश्च एकानेकौ एकानेकाविवशब्दौ यस्यां सा एकानेकेवशब्दा तस्या भावः एकानेकेवशब्दत्वं तस्मात् ॥

१. वाक्यार्थोपमालक्षणमभिधायोदाहरणाभ्यां स्पष्टयितुमेकशब्दं तदुदाहरति—

> त्वदाननमधीराक्षमाविर्दशनदीधिति ।
> भ्रमद्भृङ्गमिवालक्ष्यकेसरं भाति पङ्कजम् ॥ ४४ ॥

'त्वदाननमधीराक्षमाविर्दशनदीधिति' इति वाक्यम् । तस्यार्थः । त्वदाननं त्वन्मुखं ; किं भूतम् । अधीरे चपले अक्षिणी यत्र तदधीराक्षम् । आविर्भवन्ती दशनदीधितिर्दन्तदीप्तिर्यस्य तदाविर्दशनदीधिति । अयमस्य वाक्य(स्य)ार्थः— 'भ्रमद्भृङ्गमिवालक्ष्यकेसरं भाति पङ्कजम्' इत्यनेन वाक्यार्थेनैवोपमीयते । भ्रमन्तौ भृङ्गौ भ्रमरौ यत्र तद्भ्रमद्भृङ्ग आलक्ष्याणि केसराणि यत्र तदालक्ष्यकेसरं भाति । भाति पङ्कजं भ्रमद्भृङ्गमिवेत्येक एवेवकार उपमाद्योतक इत्येकेवकारा वाक्यार्थोपमा व्याख्याता ॥ ४४ ॥

१. अनेकेवकारामुदाहरति—

> नलिन्या इव तन्वङ्ग्यास्तस्याः पद्ममिवाननम् ।
> मया मधुव्रतेनेव पायंपायमरम्यत ॥ ४५ ॥

नलिन्या इव तन्वङ्ग्यास्तस्याः पद्ममिवाननमिति वाक्यार्थः मया मधुव्रतेनेववायमरम्यतेतीत्यनेन वाक्यार्थेनोपमीयते (?)। नलिनीव या तन्वङ्गी तस्याः पद्ममिव यत्कान्तिमद्विकासि सुगन्धि चाननम् (तत्) मया मधुव्रतेनेव पायंपायं पीत्वा (पीत्वाऽ) रम्यत । यथा नलिन्याः भ्रमरः पद्मं पीत्वा पीत्वा रमते तथा मया कान्ताया मुखं पीत्वा (पीत्वाऽ) रम्यतेति नलिन्या इवेत्येक वस्तु(इ)वकारः पद्ममिवेति द्वितीयः इत्यनेकेवकारा वाक्यार्थोपमा ॥ ४५ ॥

२. वाक्येति । केनापि वाक्यार्थेन कोऽपि वाक्यार्थो यदि उपमीयते सा वाक्यार्थोपमा । सा उपमा, एकानेकेवशब्दत्वात् इवशब्दस्य एकत्वात् अनेकत्वाच्च, द्विधा द्विप्रकारा भवति । एकेन इवशब्देन उदाहरणम्—त्वदिति । अनेकेवशब्दोदाहरणम्—नलिन्या इति । पायंपायं पीत्वा पीत्वा ॥

१. प्रतिवस्तूपमालक्षणमाह—

वस्तु किञ्चिदुपन्यस्य न्यसनात्तत्सधर्मणः ।
साम्यप्रतीतिरस्तीति प्रतिवस्तूपमा यथा ॥ ४६ ॥

वस्तु किंचिदुपन्यस्य पूर्वं, ततस्तु (तत्स)धर्मणः तेन पूर्वोपन्यस्तेन वस्तुना समानो धर्मो यस्य धर्मिणः तस्य तत्सधर्मणो वस्तुनः यत् न्यसनं सा प्रतिवस्तूपमा नामालंकृतिः । कुतः । साम्यप्रतीतिरस्तीति । पूर्वापरयोरुपन्यस्तयोर्वस्तुनोः साम्यप्रतीतिस्सादृश्यबुद्धिरस्तीति हेतोः। इतिशब्दो हेत्वर्थे वर्तते । यथा हन्ती(ति) पलायते, वर्षतीति धावति । यथेत्युदाहरणे ॥ ४६ ॥

नैकोऽपि त्वादृशोऽद्यापि जायमानेषु राजसु ।
ननु द्वितीयो नास्त्येव पारिजातस्य पादपः ॥ ४७ ॥

१. नैकोऽपि त्वादृशोऽद्यापि जायमानेषु राजसु । आसतां तावत् बहवः एकोऽपि त्वादृशस्त्वत्समो राजा जायमानेषु राजसु । नेति प्रतिषेधे । अस्तीतिवाक्यशेषः । इति पूर्वमुपन्यस्तं वस्तु । तत्सधर्मणो वस्तुनो न्यसनम्—'ननु द्वितीयो नास्त्येव पारिजातस्य पादपः' । न(नु?) द्वितीयो नास्ति तथा त्वत्समोऽन्यो राजापि .... .... स्या (ना?)स्तीति पारिजातपादपेनोपमीयमानत्वात् प्रतिवस्तूपमालङ्कारः ॥ ४७ ॥

२. वस्त्विति । 'राजीवमिव ते वक्त्रम्' इति वस्तूपमा पदार्थोपमा । इयं तु प्रतिवस्तूपमा वाक्यार्थोपमा इति भेदः ॥ ४६-४७ ॥

३. वस्त्विति । तत्सधर्मणः उपन्यस्तवस्तुसधर्मणो वस्तुन इति यावत् । तस्य न्यसनेन साम्यप्रतीतिर्भवतीति सदृशवस्तुन्यासादुत्पन्ना सेयं प्रतिवस्तूपमा । असौ तु वक्ष्यमाणात् अर्थान्तरन्यासाभिधानात् अलङ्कारात् भिन्ना । प्रतिवस्तूपमायां समानधर्माणामेव न्यसनम् ; अर्थान्तरन्यासे तु प्रस्तुतार्थसाधनस्य सदृशस्य वा विसदृशस्य वा न्यसनम् ; इति भेदः । उदाहरणम्—नैकोऽपीति । ननुशब्दः प्रसिद्धौ ॥ ४६-४७ ॥

१. तुल्ययोगोपमालक्षणमाह—

**अधिकेन समीकृ(माहृ)त्य हीनमेकक्रियाविधौ ।**
**यद्ब्रुवन्ति स्मृता सेयं तुल्ययोगोपमा यथा ॥ ४८ ॥**

अधिकेन समीकृत्य अधिकेन वस्तुना सह समीकृत्य उद्दिश्य हीनमेकक्रियाविधौ एककार्यकरणं प्रति यद्ब्रुवन्त्याचार्याः स्मृता सेयं तुल्ययोगोपमा । यथेत्युदाहरणे ॥ ४८ ॥

**दिवो जागर्ति रक्षायै पुलोमारिर्भवान् भुवः ।**
**असुरास्तेन हन्यन्ते सावलेपास्त्वया नृपाः ॥ ४९ ॥**

१. दिवः स्वर्गस्य रक्षायै रक्षणार्थं पुलोमारिरिन्द्रः जागर्ति । भवानपि भुवः पृथिव्या रक्षायै जागर्ति । असुरा दानवाः तेन पुलोमारिणा हन्यन्ते । त्वयापि सावलेपाः सदर्पा नृपा वैरिणो हन्यन्ते । अधिकेन पुलोमारिणा सह समीकृत्य नृपतेस्साम्यमापद्यत इति (?) दिवोरक्षणभूरक्षणजागरणं प्रति तथा असुरहननं सदर्पनृपहननं एकक्रियाविधिं प्रति (?) नृपतेः पुलोमारिणा इन्द्रेण समतापादनात्तुल्ययोगोपमा ॥ ४९ ॥

३. अधिकेनेति । एकक्रियाविधौ—अत्र हननक्रियायां—हीनाधिकौ समाहृतौ । अतः तुल्ययोगोपमेयम् । उदाहरणम्—दिव इति । जागर्ति निद्राक्षयं करोति । पुलोमारिः इन्द्रः । सावलेपाः सगर्वाः ॥ ४९

**कान्त्या चन्द्रमसं धाम्ना सूर्यं धैर्येण चार्णवम् ।**
**राजन्ननुकरोषीति सैषा हेतूपमा मता ॥ ५० ॥**

१. "कान्त्या चन्द्रमसं धाम्ना सूर्यं धैर्येण चार्णवं, राजन्ननुकरोषीति सैषा हेतूपमा स्मृता" । कान्तिधामधैर्याणि चन्द्रसूर्यमनुष्याणां अनुकरणे राज्ञो हेतव इति हेतूपमा ॥ ५० ॥

३. कान्त्येति । कान्त्या धाम्ना धैर्येण इति औपम्यहेतुनिर्देशात् हेतूपमा ॥ ५० ॥

**न लिङ्गवचने भिन्ने न हीनाधिकतापि वा ।**
**उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥ ५१ ॥**

१. लिङ्गं स्त्री (पुं) नपुंसकं, वचनं एकद्विबहुत्वादि(वाचि?) लिङ्गं च वचनं च लिङ्गवचने भिन्ने विसदृशे उपमादूषणाय नालं, न समर्थे उपमां दूषयितुम् । तथा न न्यूनाधिकताऽपि वा उपमानोपमेययोः लिङ्गवचनभेदो न्यूनाधिकता च न दोष इत्यर्थः । किं सर्वत्र लिङ्गवचनभेदो न्यूनाधिकता च नोपमादूषणायालमित्याह—यत्रोद्वेगो न धीमताम् । यत्र लिङ्गवचनभेदे न्यूनाधिकतायां चोपमानोपमेययोर्धीमन्तो नोद्विजन्ते । तत्र (न) दोष इति । अर्थात् यतो धीमन्त उद्विजन्ते , तत्र लिङ्गवचनभेदो न्यूनाधिकता चोपमादूषणायालमिव(मेव?) ॥ ५१ ॥

२. उपमानोपमेययोः लिङ्गभेदो वचनभेदश्च न दोषाय इत्याह—नेति ॥ ५१ ॥

३. उपमानोपमेययोः लिङ्गवचनादिषु भिन्नेषु हीनाधिकतायां सत्यामपि तत् न दूषणाय भवतीत्याह—नेति । उपमादूषणाय लिङ्गभेदो वचनभेदश्च समर्थो न भवति । यस्मिन् लिङ्गभेदे वचनभेदे विदुषाम् उद्वेगो न स्यात् मनोव्यथा न स्यात् । तथा हीनत्वं अधिकत्वञ्च विदुषां यत्र उद्वेगाय न, तत् उपमादूषणाय न भवति । ननु 'अधिकेन समाहृत्य' इत्यादिना तुल्ययोगोपमालक्षणमुक्तम् । तस्याश्च हीनाधिकोपमायाश्च को विशेषः इति चेत्, उच्यते । तत्र तुल्ययोगितायां हीनम् अधिकेनैव योजयति । सा च योजना भिन्नार्थैः हीनाधिकैः यथा कथञ्चित् दृश्यमानोपमैः एकस्यां क्रियायामेव समाहृत्य उपयोगः, इति तुल्यक्रियायमेव उपयोगात् तुल्ययोगोपमा मता । अत्र तु अभिन्नार्थैः हीनाधिकैः साक्षाद्दर्शितोपमानशब्दैरुपमीयत इत्यदोषः । तुल्ययोगोपमायां प्रयोगोऽपि अस्ति— 'दुदोह गां स यज्ञाय सस्याय मघवा दिवम् । सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम्' ॥ ५१ ॥

१. तत्र धीमद्भिरभिमतं लिङ्गवचनभेदमुदाहरति—

**स्त्रीव गच्छति षण्डोऽयं वक्त्येषा स्त्री पुमानिव ।**
**प्राणा इव प्रियोऽयं मे विद्या धनमिवार्जिता(ः) ॥ ५२ ॥**

अभिमतन्यूनाधिकभावमुदाहरति—

**भवानिव महीपाल देवराजो विराजते ।**
**अलमंशुमतः कक्ष्यामारोढुं तेजसा नृपः ॥ ५३ ॥**

'स्त्रीव गच्छति .... .... पुमानिव' इति लिङ्गभेदः । 'प्राणा इव प्रियोऽयं मे' इति वचनभेदः । विद्या धनमिवार्जिताः विद्या आन्वीक्षिक्यादय इति उभयभेदः ॥ ५२ ॥

२. यत्र लिङ्गभेदवचनभेदयोः अदूषणत्वं तत् दर्शयति—स्त्रीति । षण्डः स्त्रीवत्, स्त्री पुमानिव, विद्या धनमिव, इति लिङ्गभेदः । प्राणा इव प्रियोऽयम् इति वचनभेदः । 'असवो जीवितं प्राणाः' इति प्राणशब्दस्य नित्यबहुवचनान्तत्वात्, स्त्र्यादीनां नियतलिङ्गत्वाच्च, विदुषां अनुद्वेगकराः प्रयोगाः । हीनाधिकतायाः अदूषणत्वं दर्शयति—भवानिति । महीपाल भवानिव देवराजो विराजते । राज्ञो मनुष्यस्यापि लोकपालत्वात् न हीनोपमात्वम् । अत एव हेतोः अंशुमतो देवत्वात् अधिकोपमात्वमपि न दोषाय ॥ ५२-५३ ॥

३. उदाहरणानि—स्त्रीति । षण्डः नपुंसकः ; भिन्नलिङ्गस्य उदाहरणमेतत् । प्राणा इव प्रियः इति भिन्नवचनस्योदाहरणमेतत् । विद्याः धनमिव अर्जिताः इति भिन्नवचनभिन्नलिङ्गयोः उदाहरणम् । तत्र विद्याः
श्रुतिस्मृतीतिहाससाङ्ख्ययोगन्यायवैशेषिकमीमांसागमनि
वेदपुराणज्यौतिषशब्दशास्त्रकृषिवार्ताशिल्पम् इति अष्टादश ।
धनमिव अर्जिताः इत्यर्थः ॥ ५२-५३ ॥

**इत्येवमादौ सौभाग्यं न जहात्येव जातु चित् ।**
**अस्ति च क्वचिदुद्वेगः प्रयोगे तद्विदां यथा ॥ ५४ ॥**

हंसीव धवळश्चन्द्रः सरांसीवामलं नभः ।
भर्तृभक्तो भटः श्वेव खद्योतो भाति भानुवत् ॥ ५५ ॥
ईदृशं वर्ज्यते सद्भिः कारणं तत्र चिन्त्यताम् ।
गुणदोषविचाराय स्वयमेव मनीषिभिः ॥ ५६ ॥

१. स्त्रीव गच्छति षण्डोयमित्यत आरभ्य तेजसा नृप इत्यन्तं न सौभाग्यं सौन्दर्यं जहाति त्यजति जातु कदाचित् । अस्ति च कश्चिदुद्वेगः प्रयोगः काव्यं वा विदां विदुषाम् । यथेत्युदाहरति । हंसीव धवळश्चन्द्रः इति लिङ्गभेदः । सरांसीवामलं नभः इति वचनभेदः । भर्तृभक्तो भटः श्वेव इति न्यूनता । खद्योतो भाति भानुवत् इत्यधिकता । ईदृशं हंसीव धवळश्चन्द्र इत्यादि वर्ज्यते परिह्रियते । सद्भिः कारणं त्वत्र चिन्त्यताम् । औचित्यानौचित्यलक्षणमूह्यताम् । शब्दराशेरनन्तत्वात् प्रत्येकं परिवर्जनकारणस्य कथयितुमशक्यत्वात् स्वयं सद्भिरूह्यताम् ॥ ५४-५६ ॥

२. इत्येवमादयो विदुषां अनुद्वेगकराः । उद्वेगकराः पुनः एते इत्याह— इतीति । तद्विदां काव्यगुणदोषविदाम् । हंसीति—हंसीवत् धवलः इति उपमायाःसमानलिङ्गस्य हंसशब्दस्य विद्यमानत्वात्; सरांसीव अमलं नभः इति उपमेयसमानवचनस्य सर इति शब्दस्य विद्यमानत्वाच्च, लिङ्गवचनभेदौ उद्वेगकरौ । भर्तृभक्तो भटः श्वेव इति हीनत्वात्, खद्योतो भाति भानुवत् इति अधिकत्वाच्च, वर्ज्यते । इति कारणम् ऊह्यम् ॥ ५५-५६ ॥

३. उदाहरति—हंसीति । हंसीव धवलः चन्द्रः इति भिन्नलिङ्गस्योदाहरणम् । सरांसीव अमलं नभः इति भिन्नवचनस्योदाहरणम् । भर्तृभक्तो भटः श्वेव इति अधिको भटो हीनेन शुना उपमीयत इति हीनोदाहरणम् । खद्योतो भाति भानुवत् इति हीनः खद्योतः अधिकेन भानुना उपमीयत इति अधिकोदाहरणम् । ईदृशमिति—ईदृशं विद्वद्भिः वर्ज्यते । तत्र कारणं चिन्त्यताम्— रसविदां स्वसंवेद्यमित्यर्थः ॥ ५५-५६ ॥

१. अथ कैः पुनःशब्दैः उपमा सूच्यत इत्याह—

इववद्वायथाशब्दाः समाननिभसन्निभाः ।
तुल्यसङ्काशनीकाशप्रकाशप्रतिरूपकाः ॥ ५७ ॥

प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिनः ।
सदृक्सदृशसंवादिसजातीयानुवादिनः ॥ ५८ ॥

प्रतिबिम्बप्रतिच्छन्दसरूपसमसम्मिताः ।
सलक्षणसदृक्षाभसपक्षोपमितोपमाः ॥ ५९ ॥

कल्पदेशीयदेश्यादि प्रख्यप्रतिनिधी अपि ।
सवर्णतुलितौ शब्दौ ये च तुल्यार्थवाचिनः ॥ ६० ॥

समासश्च बहुव्रीहिः शशाङ्कवदनादिषु ।
स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति ॥ ६१ ॥

आक्रोशत्यवजानाति कदर्थयति निन्दति ।
विडम्बयति संरुन्धे हसतीर्ष्यत्यसूयति ॥ ६२ ॥

तस्य मुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति ।
तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति ॥ ६३ ॥

तत्पदव्यां पदं धत्ते तस्य कक्ष्यां विगाहते ।
तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति ॥ ६४ ॥

तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः ।
उपमायामिमे प्रोक्ताः कवीनां बुद्धिसौख्यदाः ॥ ६५ ॥

इववत् वा यथा इत्येवमादयः शब्दाः सादृश्यसूचकाः ॥ ५७-६५ ॥

२. उपमाद्योतकान् उपन्यस्यति—इवेति । वत् इति इवशब्दपर्यायः ; अव्ययं वतिप्रत्ययश्च द्वयमपि गृह्यते; 'व्योम पश्चिमकलास्थितेन्दु वत्', 'खद्योतो भाति भानुवत्' इति च दर्शनात् । तुलां तेनाधिरोहति इति सहार्थे तृतीया ॥ ५७-६५ ॥

३. अतः परं यैः शब्दैः उपमा सूच्यते तान् सर्वान् सादृश्यपर्यायान् कथयति—इवेति। कल्पदेशीयदेश्यादि—'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इतिविहितप्रत्ययान्ताः ये शब्दाः। समासश्च बहुव्रीहिरिति 'सप्तम्युपमान—' इत्यादिना निष्पन्नो गृह्यते। स्पर्धते जयति इत्यादीनि क्रियापदानि सादृश्यसूचकानि ॥ ५७-६५ ॥

इत्युपमाचक्रम् ॥

---

**अथ रूपकचक्रम् ॥**

१. रूपकलक्षणमाह—

**उपमैव तिरोभूतभेदा रूपकमुच्यते।**
**यथा बाहुलता पाणिपद्मं चरणपल्लवम् ॥ ६६ ॥**

तिरोभूतो भेद उपमानोपमेययोर्यस्यां सा तिरोभूतभेदा। यथा—बाहुलता बाहुर्लतेवेत्युपमा। 'उपमितं व्याघ्रादिभिस्सामान्याप्रयोगे' इति समासः। इयमेव तिरोभूतभेदा सती रूपकं भवति। बाहुरेव लता बाहुलतेति रूपकम्। एवं सर्वत्र योज्यम् ॥ ६६ ॥

२. रूपकं लक्षयति–उपमैवेति। तिरोभूतभेदा—उपमेयस्य उपमानेन सादृश्यातिशयविवक्षया भेदद्योतकेवादिशब्दपरित्यागेन सामानाधिकरण्येन मुखचन्द्रः इति तदात्मत्वारोपणं रूपकम्। तद्दर्शयति—यथेति। बाहुः लतेव इति विगृह्य 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समासः ॥

३. अथ रूपकलक्षणमाह—उपमैवेति। अस्यार्थः—उपमानवाची शब्दः परित्यक्तस्वार्थः उपचारादुपमेयगतं विशेषणं ब्रुवाणः उपमानोपमेययोः अभेदरूपणात् रूपकशब्दवाच्यो भवतीति रूपकम्। साम्यप्रतीतौ उपमैव कथं रूपकम् इति चेत्, न केवलं साम्यप्रतीतिमान् रूपकालङ्कारः, किन्तु उपमानोपमेययोः भेदे या साम्यप्रतीतिः सा उपमा; अभेदे या साम्यप्रतीतिः सा रूपकम्। उदाहरति—यथेति। बाहुलता इत्यत्र लतेव बाहुः इति

उपमास्मितिः शिरोभूता। एवं पाणिपद्मं, चरणपल्लवम्, इत्यत्रापि। तत्र लक्षणमुक्तम्—'साकल्येनैकदेशेन किञ्चित्साधर्म्यतोऽपि वा। रूपकं त्रिविधं काव्ये कवयस्तत्प्रचक्षते॥ हर्षकान्तिः स्मितज्योत्स्नो दन्तांशुः पक्ष्मलक्षणः। तस्या हि मुखचन्द्रोऽयमिति साकल्यरूपकम्। तेजसार्कः शशी कान्त्या भवान् बुद्ध्या बृहस्पतिः। ऋद्ध्या वैश्रवणश्चेति कथयन्त्यैकदेशिकम्॥ व्यूढं पुरुषसिंहस्य विलोचनयुगं जगत्। ददाह भूयः कालाग्निरिति साधर्म्यरूपकम्'॥ ६६॥

**अङ्गुल्यः पल्लवान्यासन् कुसुमानि नखार्चिषः।**
**बाहू लते वसन्तश्रीस्त्वं नः प्रत्यक्षचारिणी॥ ६७॥**

१. 'अङ्गुल्यः पल्लवान्यासन्' इत्यादि व्यस्तरूपकम्। समासस्याभावात्। पूर्वं बाहुलतेत्यादि समस्तरूपकम्। शेषमृजु॥ ६७॥

२. अङ्गुल्य इति। ते अङ्गुल्यः पल्लवानि, नखार्चिषः कुसुमानि, बाहू लते, त्वं वसन्तश्रीः॥ ६७॥

३. बाहुलतेत्यादीनि समस्तरूपकोदाहरणानि। व्यस्तरूपकोदाहरणमाह— अङ्गुल्य इति॥ ६७॥

**इत्येतदसमस्ताख्यं समस्तं पूर्वरूपकम्।**
**स्मितं मुखेन्दोर्ज्योत्स्नेति समस्तव्यस्तरूपकम्॥ ६८॥**

१. स्मितं ज्योत्स्नेति व्यस्तम्। मुखेन्दोरिति समासकरणात् समस्तमिति समस्तव्यस्तरूपकम्।॥ ६८॥

२. इतीति। इत्येतद्वाक्यम् असमस्तरूपकम्। पूर्वं समस्तरूपकम्। स्मितमिति–मुखेन्दोः इति रूपणस्य समस्तत्वात्, स्मितं ज्योत्स्ना इति अस्य व्यस्तत्वाच्च, समस्तव्यस्तरूपकम्। रूपकविशेषलक्षणानि स्पष्टानि॥ ६८॥

**ताम्राङ्गुलिदलश्रेणि नखदीधितिकेसरम्।**
**ध्रियते मूर्ध्नि भूपालैर्भवच्चरणपङ्कजम्॥ ६९॥**

१. ताम्राङ्गुलय एव दलश्रेणी यत्र नखदीप्तय एव केसराणि यत्र तत्तथा ॥ ६९

अङ्गुल्यादौ दलादित्वं पादे चारोप्य पद्मताम् ।
तद्योग्यस्थानविन्यासादेतत् सकलरूपकम् ॥ ७० ॥

१. अङ्गुल्यादौ दलादित्वमारोप्य, पद्मतां पादपद्मं (पद्मत्वेन पादं) रूपयित्वा तद्योग्यस्थानविन्यासात् ध्रियते मूर्ध्नि भूपालैरित्यनेन तस्य पद्मस्य योग्यं स्थानं मूर्धैव यतः पुष्पं शिरस्येवाधीयत इति सकलरूपकमिदमुच्यते। समस्तपङ्कजधर्माणामभिधानात् ॥ ७० ॥

३. अङ्गुल्यादाविति । तद्योग्यस्थाने मूर्ध्नि विन्यासात् ॥ ७० ॥

अकस्मादेव ते चण्डि स्फुरिताधरपल्लवम् ।
मुखं मुक्तारुचो धत्ते घर्माम्भःकणमञ्जरीः ॥ ७१ ॥

मञ्जरीकृत्य घर्माम्भः पल्लवीकृत्य चाधरम् ।
नान्यथाकृतमत्रास्यमतोऽवयवरूपकम् ॥ ७२ ॥

१. स्फुरितः अधरपल्लवो यत्र तन्मुखं घर्माम्भसः कणाः त एव मञ्जर्यः तावत्त (ता धत्ते) किंभूताः मुक्तारुचः मुक्तानां मौक्तिकानामिव रुक् दीप्तिर्यासां ता मुक्तारुचः ॥ मञ्जरीकृत्य घर्माम्बु मञ्जरीत्वेन घर्माम्बु रूपिक-(त)म् । अधरश्च पल्लवत्वेन रूपितः। नान्यथाकृतमत्रास्यं मुखं तु न रूपित-मित्येवमवयवरूपकं नाम ॥ ७१-७२ ॥

३. मञ्जरीति । मुखावयवानि रूपितानि ; मुखम् अविकृतम् ; अतः अवयवरूपकमिदम् ॥ ७२ ॥

वल्गितभ्रु गलद्धर्मजलमालोहितेक्षणम् ।
विवृणोति मदावस्थामिदं वदनपङ्कजम् ॥ ७३ ॥

**अविकृत्य मुखाङ्गानि मुखमेवारविन्दताम् ।**
**आसीद्गमितमत्रेदमतोऽवयविरूपकम् ॥ ७४ ॥**

१. वलिगिते भ्रुवौ यत्र तद्वल्गितभ्रु । गलत् क्षरत् घर्मजलं स्वेदवारि यस्मात्तद्गलद्धर्मजलम् । आलोहिते ईक्षणे यत्र तदालोहितेक्षणं विवृणोति मदावस्थां ईदृशं सत् इदं वदनं(?)वदनपङ्कजम् । अविकृत्य (अ)रूपयित्वा मुखस्याङ्गानि मुखावयवान् भ्रूनेत्रादीन्, मुखमेवारविन्दतां नीतमाननमेवारविन्दत्वेन रूपितम् । अतोऽवयविरूपकम् । मुखस्यावयविनोऽरविन्दत्वेन रूपणात् ॥ ७४ ॥

**मदपाटलगण्डेन रक्तनेत्रोत्पलेन ते ।**
**मुखेन मुग्धः सोऽप्येष जनो रागमयः कृतः ॥ ७५ ॥**

१. मदेन पाटलौ यत्र (त)न्मदपाटलगण्डं तेन ॥ ७५ ॥

**एकाङ्गरूपकञ्चैतदेवं द्विप्रभृतीन्यपि ।**
**अङ्गानि रूपयन्त्यत्र योगायोगौ भिदाकरौ ॥ ७६ ॥**

१. **रक्तनेत्रोत्पलेने**ति । नेत्रे एवोत्पलत्वे(न रूपिते) नान्यदङ्ग(म् । अत) एकाङ्गरूपकमेतत् । एवमनेन प्रकारेण द्विप्रभृतीन्यप्ङ्गानि रूपयन्ति । अत्र रूपकालङ्कारे योगायोगौ युक्तत्वायुक्तत्वे भिदाकारौ भेदकारिणौ ॥ ७६ ॥

२. **एके**ति । नेत्रमेव उत्पलतया रूपितम् । अतः एकाङ्गरूपकम् एतत् । एवं द्विप्रभृतीन्यपि अङ्गानि रूपयन्ति । तत्रापि द्व्यङ्गरूपकम्, त्र्यङ्गरूपकम्, इति संज्ञा द्रष्टव्या । 'योगायोगौ भिदाकरौ' इति रूपकान्तरस्य लक्षणमुच्यते । अत्र रूपकप्रपञ्चे योगायोगौ कौचिद्विशेषौ भिदाकरौ । योगो नाम अविरुद्धेन द्रव्यान्तरेण योगः । विद्येते इत्यध्याहार्यम् ॥ ७६ ॥

१. योगायोगावुदाहरणैः स्वयं स्पष्टयति—

स्मितपुष्पोज्ज्वलं लोलनेत्रभृङ्गमिदं मुखम् ।
इति पुष्पद्विरेफाणां सङ्गत्या युक्तरूपकम् ॥ ७७ ॥

स्मितमेव पुष्पं स्मितपुष्पं तेन उज्ज्वलं स्मितपुष्पोज्ज्वलं लोले च नेत्रे एव भृङ्गौ यत्र तल्लोलनेत्रभृङ्गं इदं मुखमिति पुष्पाद्विरेफाणां सङ्गत्या युक्तरूपकं यत्र पुष्पं तत्र द्विरेफ इति पुष्पाद्विरेफयोर्योगात् युक्तरूपकमेतत् ॥

१. अयुक्तरूपकमाह—

इदमार्द्रस्मितज्योत्स्नं स्निग्धनेत्रोत्पलं मुखम् ।
इति ज्योत्स्नोत्पलायोगादयुक्तं नाम रूपकम् ॥ ७८ ॥

आर्द्रं स्मितमेव ज्योत्स्ना चन्द्रिका यत्र तत्तथा स्निग्धे नेत्रोत्पले यत्र तत् स्निग्धनेत्रोत्पलं इति ज्योत्स्नोत्पलायोगादयुक्तं नाम रूपकं ज्योत्स्नोत्पलयो (र) योगस्स (गात्स) म्बन्धाभावादयुक्तत्वम् । यथा पुष्पद्विरेफयोः सङ्गतिर्नैव (वं) ज्योत्स्नोत्पलयोर(तोऽ) युक्तमित्युच्यते ॥ ७८ ॥

रूपणादङ्गिनोऽङ्गानां रूपणारूपणाश्रयात् ।
रूपकं विषमं नाम ललितं जायते यथा ॥ ७९ ॥

मदरक्तकपोलेन मन्मथस्त्वन्मुखेन्दुना ।
नर्तितभ्रूलतेनालं मर्दितुं भुवनत्रयम् ॥ ८० ॥

१. रूपणादङ्गिनोऽवयविनः, अङ्गानामवयवानां रूपणं च केषांचिदरूपणं च केषांचिद्(दिति रू)पणरूपणाश्रयं (यात्?) रूपकं विषमं नाम त(?)ल्ललितं रम्यं जायते ॥ ७९ ॥

मदरक्तकपोलेनेति । कपोलौ न निरूपितौ(न रूपितौ) त्वन्मुखेन्दुनेति मुखमिन्दुत्वेन निरूपितम् । नर्तितभ्रूलतेनेति भ्रूर्लतात्वेन रूपितेति विषमरूपकम् ॥ ८० ॥

३. रूपणादिति । अङ्गिनो रूपणात् अङ्गानां रूपणारूपणाच्च विषमं नाम रूपकं भवति । मदेति—तत्र मुखम् अङ्गि चन्द्रतया रूपितम्;

भ्रूः तावत् लतारूपेण रूपिता ; कपोलो न रूपितः । अत एव विषमं रूपकम् ॥ ७९-८० ॥

हरिपादः शिरोलग्नजह्नुकन्याजलांशुकः ।
जयत्यसुरनिःशङ्कसुरानन्दोत्सवध्वजः ॥ ८१ ॥

विशेषणसमग्रस्य रूपं केतोर्यदीदृशम् ।
पादे तदर्पणादेतत् सविशेषणरूपकम् ॥ ८२ ॥

१. हरिपादो जयति किंभूतः शिरोलग्नजह्नुकन्याजलमेवांशुकं वस्त्रं यस्य स तथा असुरेभ्यो बलिप्रभृतिभ्यः निःशङ्कास्ते च ते सुराश्च इन्द्रादयस्तेषामानन्दः स एवोत्सवः तस्य तत्र वा ध्वजः ॥ ८१ ॥

एतच्च सविशेषणमुच्यते—विशेषणसमग्रस्य केतो रूपं यदीदृशम् । पादे तस्यार्पणात् । ध्वजदण्डां(ण्डे)शुकं च भवति उत्सवे च तस्योच्छ्रय इत्यत्रापि तदस्तीति ॥ ८२ ॥

२. सविशेषणरूपकमाह—हरीति । हरिपादः विशेषणविशिष्टः सुरानन्दोत्सवध्वज इव जयति । विशेषणेति—विशेषणसमग्रस्य केतोः यत् ईदृग्रूपम्, पादे तस्य अर्पणेन सविशेषणरूपकम् । अत्र जाह्नवीजलस्य अंशुकत्वेन रूपणात् रूपकसमुपेतेन विशेषणेन सहितध्वजस्वरूपं पादे अर्पितम् ॥ ८१-८२ ॥

न मीलयति पद्मानि न नभोऽप्यवगाहते ।
त्वन्मुखेन्दुर्ममासूनां हरणायैव कल्पते ॥ ८३ ॥

अक्रिया चन्द्रकार्याणामन्यकार्यस्य च क्रिया ।
अत्र सन्दिश्यते यस्माद्विरुद्धं नाम रूपकम् ॥ ८४ ॥

१. न मीलयति न सङ्कोचयति पद्मानि । न नभोऽप्यवगाहते नापि नभोमध्यमध्यास्ते त्वन्मुखेन्दुस्त्वदाननचन्द्रः ममासूनां हरणाय व्यवस्यति ॥ ८३ ॥

१. एतद्विरुद्धं नाम रूपकम् । कुतः । अक्रिया चन्द्रकार्याणां पद्मसङ्कोच(न)भोऽवगाहनाकरणात् । अन्यकार्यस्य च मरणस्य करणात् ॥ ८४ ॥

३. नि(?)मीलयतीति । विरुद्धरूपकमेतत् । अन्यकार्यस्य मृत्युकार्यस्य ॥ ८३-८४ ॥

**गाम्भीर्येण समुद्रोऽसि गौरवेणासि पर्वतः ।**
**कामदत्वाच्च लोकानामसि त्वं कल्पपादपः ॥ ८५ ॥**

**गाम्भीर्यप्रमुखैरत्र हेतुभिः सागरो गिरिः ।**
**कल्पद्रुमश्च क्रियते तदिदं हेतुरूपकम् ॥ ८६ ॥**

१. गाम्भीर्येण समुद्रोऽसीत्यादि हेतुरूपकम् । त(क)स्मात् ॥ गाम्भीर्यप्रमुखैरत्र हेतुभिः सागरो गिरिः कल्पद्रुमश्च क्रियते । गाम्भीर्यात् सागरो भवान् । गौरवात् पर्वतः । कामदत्वात् अभिलषितदानात् कल्पवृक्षः । (इति) समुद्रादिकरणे गाम्भीर्यादिकं हेतुत्वेनोपन्यस्तम् ॥ ८५-८६ ॥

**राजहंसोपभोगार्हं भ्रमरप्रार्थ्यसौरभम् ।**
**सखि वक्त्राम्बुजमिदं तवेति श्लिष्टरूपकम् ॥ ८७ ॥**

१. राजहंसोपभोगार्हं राजहंसाः श्वेतपक्षाः पक्षिणः । अन्यत्र राजहंसाः राजश्रेष्ठाः तदुपभोगार्हम् । भ्रमरप्रार्थ्यसौरभं वक्त्राम्बुजमिति श्लिष्टरूपकम् । पद्मधर्माणां मुखाम्बु-ति-(जे)पि समानत्वात् ॥ ८७ ॥

२. राजहंसेति । राजहंसाः राजश्रेष्ठाः हंसविशेषाश्च । भ्रमराः मधुकराः कामुकाश्च ॥ ८७ ॥

३. राजेति । राजहंसाः श्रेष्ठा राजानः तथा हंसविशेषाश्च । भ्रमरः भृङ्गः धूर्तश्च ॥ ८७ ॥

**इष्टं साधर्म्यवैधर्म्यदर्शनाद्गौणमुख्ययोः ।**
**उपमाव्यतिरेकाख्यं रूपकद्वितयं यथा ॥ ८८ ॥**

१. गौणस्य साधर्म्यदर्शनादुपमारूपकम् मुख्यस्य (?) वैधर्म्यदर्शनात् व्यतिरेकरूपकत्वम् ॥ ८८ ॥

१. तदुभयमुदाहरति—

**अयमालोहितच्छायो मदेन मुखचन्द्रमाः।**
**सन्नद्धोदयरागस्य चन्द्रस्य प्रतिगर्जति ॥ ॥ ८९ ॥**

**चन्द्रमाः पीयते देवैर्मया त्वन्मुखचन्द्रमाः।**
**असमग्रोऽप्यसौ शश्वदयमापूर्णमण्डलः ॥ ९० ॥**

मुखचन्द्रमा इति गौणः । तस्य लोहितच्छायत्वं सन्नद्धोदयरागत्वं चेति (रागेण) मुख्येन चन्द्रमसा साधर्म्यम् । प्रतिगर्जति सन्नद्धोदयरागस्येत्युपमाद्योतक इत्युपमारूपकमुच्यते ॥ ८९ ॥

अयमसौ (असमग्रो) मुख्यचन्द्रमाः अयं मुखचन्द्रः शश्वदापूर्णमण्डलः इति मुख्येन चन्द्रमसा सह मुखचन्द्रस्य गौणस्य वैधर्म्यदर्शनात् व्यतिरेकरूपकम् ॥ ९० ॥

३. उपमाव्यतिरेकरूपकयोः स्वरूपमाह—**इष्टमिति** । (गौण) मुख्ययोः पदार्थयोः साधर्म्येण रूपकं यत् दृश्यते तत् उपमारूपकं भवति । उभयोः यत्र वैधर्म्येण रूपकं दृश्यते तत् व्यतिरेकरूपकम् । इति रूपकद्वितयं इह लक्षितम् ॥ ८८- ९० ॥

**मुखचन्द्रस्य चन्द्रत्वमित्थमन्योपतापिनः।**
**न ते सुन्दरि संवादीत्येतदाक्षेपरूपकम् ॥ ९१ ॥**

१. अन्योपतापिनः तव मुखेन्दोश्चन्द्रत्वं न संवादि ॥ ९१ ॥

**मुखेन्दुरपि ते चण्डि मां निर्दहति निर्दयम्।**
**भाग्यदोषान्ममैवेति तत् समाधानरूपकम् ॥ ९२ ॥**

**मुखपङ्कजरङ्गेऽस्मिन् भ्रूलतानर्तकी तव।**
**लीलानृत्यं करोतीति रम्यं रूपकरूपकम् ॥ ९३ ॥**

३. रूपकरूपकमाह—मुखपङ्कजेति । मुखं पङ्कजत्वेन रूपितम्; तत् रङ्गत्वेन रूपितम्; भ्रूः लतारूपेण रूपिता; सा नर्तकीरूपेण रूपिता । एतत् रूपकरूपकम् ॥ ९१-९३ ॥

नैतन्मुखमिदं पद्मं न नेत्रे भ्रमराविमौ ।
एतानि केसराण्येव नैता दन्तार्चिषस्तव ॥ ९४ ॥

मुखादित्वं निवर्त्यैव पद्मादित्वेन रूपणात् ।
उद्भावितगुणोत्कर्षं तत्त्वापह्नवरूपकम् ॥ ९५ ॥

न पर्यन्तो विकल्पानां रूपकोपमयोरतः ।
दिङ्मात्रं दर्शितं धीरैरनुक्तमनुमीयताम् ॥ ९६ ॥

३. न पर्यन्त इति । अनुक्ता अपि भेदाः रूपकोपमयोः अनया दिशा प्राज्ञैः अनुमीयताम् ॥ ९४-९६ ॥

इति रूपकचक्रम् ।

---

जातिक्रियागुणद्रव्यवाचिनैकत्रवर्तिना ।
सर्ववाक्योपकारश्चेत् तदाहुर्दीपकं यथा ॥ ९७ ॥

२. दीपकं लक्षयति—जातीति । अनेकवाक्याश्रयं दीपकम् । एकवाक्यगतेन जातिक्रियागुणद्रव्यवाचिना सर्ववाक्यसम्बन्धश्चेत् तत् दीपकम् । दीपवत् दीपकम् । एकत्रावस्थितो यथा दीपः प्रकाशयति दूरं, एवं एकवाक्यस्थितमपि पदं वाक्यान्तराण्यपि प्रकाशयति ॥ ९७ ॥

३. अथ प्रसिद्धं दीपकं लक्षयति—जातीति । एकत्र वाक्ये वर्तिना जातिवाचिना क्रियावाचिना गुणवाचिना द्रव्यवाचिना वा पदेन सर्ववाक्योपकारश्चेत् तत् दीपकं आहुः । उपकारो वाक्यस्य नैरपेक्ष्यसम्पादनम् । दीपकस्य श्लोकादिमध्यान्ताः स्थानानि । तत्र ग्रन्थान्तरेष्वपि एवमेव उक्तम्—'पदेनैकेन सिद्ध्यन्ति वाक्यार्था बहवो यदि । पद्यादिमध्यपर्यन्तेष्वेतद्दीपकलक्षणम् ॥ ९७ ॥'

पवनो दक्षिणः पर्णं जीर्णं हरति वीरुधाम् ।
स एवावनताङ्गीनां मानभङ्गाय कल्पते ॥ ९८ ॥

चरन्ति चतुरम्भोधिवेलोद्यानेषु दन्तिनः ।
चक्रवालाद्रिकुञ्जेषु कुन्दभासो गुणाश्च ते ॥ ९९ ॥

श्यामलाः प्रावृषेण्याभिर्दिशो जीमूतपंक्तिभिः ।
भुवश्च सुकुमाराभिर्नवशाद्वलराजिभिः ॥ १०० ॥

विष्णुना विक्रमस्थेन दानवानां विभूतयः ।
क्वापि नीताः कुतोऽप्यासन्नानीता दैवतर्द्धयः ॥ १०१ ॥

२. जातिदीपकं दर्शयति—पवन इति । स एव इति तच्छब्द-प्रयोगः पवनशब्दस्य जातिवाचिताद्योतनार्थः । कश्चित् जीर्णं पर्णं हरति, स एव तज्जातीयो मानभङ्गं करोति, इति स एव इति प्रयोगः वाक्यार्थ-द्वयस्य एककर्तृकताद्योतकः आदौ प्रयुक्तः । क्रियादीपकम्—चरन्तीति । गुणदीपकम्—श्यामला इति । द्रव्यदीपकम्- विष्णुनेति ॥ ९८-१०१ ॥

३. क्रमेण एषां उदाहरणानि—पवन इति । पवन इति जाति-शब्दः सर्वत्र अनुषक्तो द्रष्टव्यः । चरन्तीति—चरन्ति इति क्रियापदं सर्व-त्रानुषक्तं द्रष्टव्यम् । श्यामला इति गुणोदाहरणम् ; श्यामगुणाः उभयत्र अनुषक्ताः । विष्णुनेति द्रव्योदाहरणम् ; परवस्तुवाची विष्णुशब्दः अनुषक्तः । कुतोऽपि आनीता आसन् इति सम्बन्धः ॥ ९८-१०१ ॥

इत्यादिदीपकान्युक्तान्येवं मध्यान्तयोरपि ।
वाक्ययोर्दर्शयिष्यामः कानिचित्तानि तद्यथा ॥ १०२ ॥

२. इतीति । इति आदिदीपकानि जातिक्रियागुणद्रव्यवाचीनि चत्वारि दर्शितानि । मध्यदीपकत्वेन अन्तदीपकत्वेन च द्वे द्वे दर्शयिष्येते विस्त-रभयात् ॥ १०२ ॥

नृत्यन्ति निचुलोत्सङ्गे गायन्ति च कलापिनः ।
बध्नन्ति च पयोदेषु दृशो हर्षाश्रुगर्भिणीः ॥ १०३ ॥

२. नृत्यन्तीति । अत्र मध्यमवाक्ये कलापिनः इति जातिदीपकम् ॥

३. जातिवाचिशब्दस्य मध्यगतस्य उदाहरणमाह—नृत्यन्तीति । जातिवाची कलापिशब्दः सर्वत्र अनुषक्तः । एवं गुणद्रव्यवाचिनावपि मध्यदीपकौ द्रष्टव्यौ ॥ १०३ ॥

मन्दो गन्धवहः क्षारो वह्निरिन्दुश्च जायते ।
चर्चाचन्दनपातश्च शस्त्रपातः प्रवासिनाम् ॥ १०४ ॥

१. (मन्दो गन्धवहः क्षारो) जायते । इन्दुश्च वह्निः जायते । चर्चाचन्दनपातश्च शस्त्रपातो जायते प्रवासिनाम् । 'जायते' इत्यनेन मध्यवर्तिना क्रियावाचिना शब्देन सर्वं(म)त्र संबद्ध्यते ॥ १०४ ॥

२. मन्द इति । अत्र मध्यवाक्ये जायते इति क्रियादीपकम् ॥ १०४ ॥

जलं जलधरोद्गीर्णं कुलं गृहशिखण्डिनाम् ।
चलं च तटितां दाम बलं कुसुमधन्वनः ॥ १०५ ॥

१. जलं जलधरोद्गीर्णं कुसुमधन्वनो बलम् । गृहशिखण्डिना(नां कुलं) यत्तदेव (द्)बलम् । चलं च तटितां दाम यत्तद्बलम् । च(ब)लमित्यनेन मध्य(अन्त)वर्तिना द्रव्यवाचिना सर्ववाक्योपकारः ॥ १०५ ॥

२. जलमिति । अत्र कुसुमधन्वनः इति द्रव्यवाचकमन्तदीपकम् ॥

३. अन्तदीपकस्य उदाहरणं दर्शयन् गुणवाचिना(?)उदाहरणमाह जलमिति । जलं कुलं दाम च कुसुमधन्वनो बलम् इत्युक्ते सिंहावलोकनन्यायेन उपकृतं द्रष्टव्यम् । द्रव्यवाचि(?)श्लोकान्तवर्ति पदं वाक्यान्तरस्य उपकारकमिति अन्तदीपकम् ॥ १०५ ॥

त्वया नीलोत्पलं कर्णे स्मरेणास्त्रं शरासने ।
मयाऽपि मरणे चेतस्त्रयमेतत् समं कृतम् ॥ १०६ ॥

१. त्वया नीलोत्पलं कर्णे कृतं स्मरेणास्त्रं शरासने कृतं मयाऽपि मरणे

चेतः कृतम् । कृतमित्यनेन क्रियावाचिनान्त्य(न्त)वर्तिना सर्ववाक्योपकारक(रः । कृतं) इत्यन्तं (न्ते) क्रियापदम् ॥ १०६ ॥

२. त्वयेति । अत्र कृतं इति अन्ते क्रियादीपकम् । त्वयमेतत् समं समकालं कृतं इति चित्रहेत्वलङ्कारो द्रष्टव्यः (?) ॥ १०६ ॥

३. त्वयेति । एतत् कृतम् इति श्लोकान्तवर्ति क्रियावाचिपदं वाक्यान्तरेण सम्बद्धं सत् तत्तदर्थं द्योतयतीति अन्तदीपकम् । इदं सिद्धक्रियादीपकम्; पूर्वं तु साध्यक्रियादीपकम् ॥ १०६ ॥

**शुक्लः श्वेतार्चिषो वृद्ध्यै पक्षः पञ्चशरस्य सः।**
**स च रागस्य रागोऽपि यूनां रत्युत्सवश्रियः ॥ १०७ ॥**

**इत्यादिदीपकत्वेऽपि पूर्वपूर्वव्यपेक्षिणी।**
**वाक्यमाला प्रयुक्तेति तन्मालादीपकं मतम् ॥ १०८ ॥**

१. शुक्लः श्वेतार्चिषो वृद्ध्यै पक्षः शुक्लः पक्षः श्वेतार्चिषश्चन्द्रः(स्य वृद्ध्यै)। स च शुक्लार्चिः पञ्चशरस्य वृद्ध्यै । स च रागस्य पञ्चशरो रागस्य वृद्ध्यै । रागोऽपि यूनां रत्युत्सवश्रियः । इदं तावदादिदीपकम् । आदौ पादे व्यवस्थितेन वृद्धिशब्देन क्रियावाचिना सर्वत्राभिसम्बन्धात् तथाऽपि आदिदीपकत्वेऽपि पूर्वपूर्वव्यपेक्षिणी पूर्वपूर्वं व्यपेक्षत इत्येवंशीला वाक्यमाला प्रयुक्ता यूनां रत्युत्सवश्री रागमपेक्षते । रागोऽपि पञ्चशरम् । सोऽपि चन्द्रमसम्। स तं (च) शुक्लं पक्षमिति हेतोर्मालादीपकमुच्यते ॥ १०७-१०८ ॥

२. शुक्ल इति । अत्र वृद्ध्यै इति पदं क्रियावाचि । मालादीपकम् ॥ १०७-१०८ ॥

३. मालादीपकमाह–शुक्लः इति । शुक्लः पक्षः चन्द्रस्य वृद्ध्यै भवति । स चन्द्रः पञ्चशरस्य वृद्ध्यै भवति । स पञ्चशरः रागस्य वृद्ध्यै । स रागः रत्युत्सवश्रियः वृद्ध्यै । इतीति—इति उक्तप्रकारेण श्लोकस्य आद्यंशगतेन वृद्ध्यै-शब्देन वाक्यमाला पूर्वपूर्वापेक्षया प्रयुक्तेति मालादीपकम् ॥ १०८ ॥

अवलेपमनङ्गस्य वर्धयन्ति वलाहकाः ।
कर्शं(कश)यन्ति च घर्मस्य मारुतोद्धूतशीकराः ॥ १०९ ॥

अवलेपपदेनात्र वलाहकपदेन च ।
क्रिये विरुद्धे संयुक्ते तद्विरुद्धार्थदीपकम् ॥ ११० ॥

१. अवलेपं दर्पमनङ्गस्य वर्धयन्ति वलाहकाः मेघाः कथ(कश)यन्ति दर्पमदस्य (घर्मस्य) ग्रीष्मस्य स्वेदस्य वावलेपं मारुतेनोद्धूता शिरो(ः शीकरा)येषां ते तथाविधाः वलाहकाः ॥ स्वयमेतद्व्याचष्टे । अवलेपपदेनात्र वलाहकपदेन (च)क्रिया(ये)विरुद्धे संयुक्ते। अवलेपपदेनादौ व्यवस्थितेन यद्यप्यखिलवाक्योपकारः वलाहकपदेन च मध्ये व्यवस्थितेन सर्वं वाक्यमुपकृतम्। तथाऽपि क्रिये विरुद्धे विरुद्धार्थाभिधायके संयुक्ते वर्धनकर्शनलक्षणे । ततो विरुद्धार्थदीपनात् विरुद्धार्थदीपकम् ॥ १०९-११० ॥

२. अवलेपमिति । वलाहकशब्दो जातिवाची । अवलेपशब्दो गुणवाची । एते द्वे पदे आदिवाक्यगते वर्धयन्ति कर्शयन्ति इति विरुद्धक्रियासम्बद्धे इति विरुद्धार्थदीपकम् ॥ १०९-११० ॥

हरत्याभोगमाशानां गृह्णाति ज्योतिषां गणम् ।
आदत्ते चाद्य मे प्राणानसौ जलधरावली ॥ १११ ॥

अनेकशब्दोपादानात् क्रियैकैवात्र दीप्यते ।
यतो जलधरावल्या तस्मादेकार्थदीपकम् ॥ ११२ ॥

१. इदं हरति निरस्यत्याभोगं विस्तारमाशानाम् । गृह्णाति ज्योतिषां नक्षत्रतारकादित्यचन्द्र(द्रा?)वकीर्णकानां गणमाच्छादयति । आदत्ते चाद्य मे मम प्राणानाक्षिपत्यसौ जलधरावली । स्वयं व्याचष्टे । अनेकशब्दोपादानात् क्रियैकैवात्र दीप्यते । हरति गृह्णात्यादत्ते इत्यनेकशब्दोपादानं तस्मादेकैव क्रियाऽभिन्नार्था जलधरावल्या अन्तस्थितया दीप्यते यतस्तस्मादेकार्थदीपकमेतत् ॥ १११-११२ ॥

२. हरतीति । हरत्याद्यनेकक्रियापदोपात्ता एकक्रिया जलधरावल्या अन्तवाक्यगतया दीप्यते यत् तस्मादेकार्थदीपकम् ॥ १११-११२ ॥

३. अनेकेति । अत्र अस्मिन्नुदाहरणे जलधरावल्या हरति गृह्णाति आदत्ते इति त्रिभिः पदैः एकैव अदर्शनक्रिया दीपिता भवति । तस्मात् एकार्थदीपकम् ॥ १११-११२ ॥

**हृद्यगन्धवहास्तुङ्गास्तमालश्यामलत्विषः ।**
**दिवि भ्रमन्ति जीमूता भुवि चैते मतङ्गजाः ॥ ११३ ॥**

**अत्र धर्मैरभिन्नानामभ्राणां दन्तिनां तथा ।**
**भ्रमणेनैव सम्बन्ध इति श्लिष्टार्थदीपकम् ॥ ११४ ॥**

१. हृद्यो गन्धवहो वायुर्येषां ते हृद्यगन्धवहाः जीमूता मेघाः तथा तमालश्यामलत्विषः तमालतरुदलवत् कालाः दिवि व्योम्नि भ्रमन्ति भुवि चैते मतङ्गजाः किंभूता हृद्यं गन्धं वहन्तीति हृद्यगन्धवहाः सुगन्धिदानप्रवहाः तुङ्गाः महान्तः कृष्णाः गजाः भ्रमन्तीति मध्यवर्तिक्रियया यद्यपि सकलवाक्योपकारस्तथाऽपि धर्मैर्हृद्यगन्धवहा (हत्वा) दिति (भिर) भिन्नानां सदृशानामभ्राणां घनानां हस्तिनां च भ्रमणेनैव सम्बन्ध इति हेतोः श्लिष्टार्थदीपकम् ॥ ११३-११४ ॥

२. हृद्येति । हृद्यगन्धवहत्वं तुङ्गत्वं तमालश्यामलकान्तित्वं च श्लेषानुबद्धम् । भ्रमन्तीति क्रियापदमादिवाक्यगतं वाक्यान्तरमपि दीपयति । इति श्लिष्टार्थदीपकम् ॥ ११३-११४ ॥

३. हृद्येति । हृद्यगन्धवहाः इत्यादि उभयत्र तुल्यम् । एते जीमूताः दिवि भ्रमन्ति । तस्मात्(?) मतङ्गजाश्च भुवि भ्रमन्ति । उभयश्लेषयुक्तत्वात् श्लिष्टार्थदीपकम् ॥ ११३-११४ ॥

**अनेनैव प्रकारेण शेषाणामपि दीपके ।**
**विकल्पानामव(नु)गतिर्विधातव्या विचक्षणैः ॥ ११५ ॥**

१. अनेनैव विधानेन श्ले(शे)षाणामनुक्तानामपि दीपकेऽलङ्कारे विकल्पानामनुगतिर्विधातव्या विचक्षणैः ॥ ११५ ॥

२. अनेनेति । जातिक्रिययोः दीपकत्वं गुणद्रव्ययोः दीपकत्वं इत्यादयो दीपकभेदाः द्रष्टव्याः ॥ ११५ ॥

३. अनेनेति । अनुक्तानामपि दीपकप्रकाराणां अनुगतिः अव(?)गमः अनेनैव प्रकारेण प्राज्ञैः कर्तव्या । एवेति अवधारणस्य प्रकारान्तरमुपायभूतं नास्ति इत्यर्थः ॥ ११५ ॥

इति दीपकचक्रम् ॥

**अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरेव च ।**
**दीपकस्थान एवेष्टमलङ्कारत्रयं यथा ॥ ११६ ॥**

१. आवृत्तिलक्षणमाह— अर्थोऽभिधेयः सः आवर्त्यते यया स आ(मा ऽर्था)वृत्तिः । (यद्वा) अर्थस्यावर्तनमर्थावृत्तिः । पदं सुबन्तं तिङन्तं च तस्यावृत्तिः। पदावृत्तिः । उभयस्यार्थस्य पदस्य चावृत्तिरुभयावृत्तिरिति त्रिधात्मा (त्वा) वृत्तिः दीपकस्थानमे (न ए) वेष्टमलङ्कारत्रयं दीपकस्थानीयमेव । यथेत्युदाहरति ॥ ११६ ॥

२. आवृत्तिं लक्षयति—**अर्थेति** । आवर्त्यते इति आवृत्तिः इति निरुक्तिरेव लक्षणम् । दीपकस्थाने अनेकवाक्यविषये इत्यर्थः । सा अर्थावृत्तिः, पदावृत्तिः, उभयावृत्तिः इति त्रिविधा ॥ ११६ ॥

३. आवृत्त्यलङ्कारं लक्षयति—**अर्थेति** । एकस्यैव अर्थस्य भिन्नरूपैः शब्दैः आवृत्तिः अर्थावृत्तिः । समानरूपस्य पदस्य पुनरुक्तिः पदावृत्तिः । अर्थस्य च पदस्य च अविशेषेण पुनरुक्तिः उभयावृत्तिः । दीपकस्थान एवेति श्लोकादिमध्यान्तस्थानेषु इत्यर्थः ॥ ११६ ॥

**विकसन्ति कदम्बानि स्फुटन्ति कुटजद्रुमाः ।**
**उन्मीलन्ति च कन्दल्यो दलन्ति ककुभानि च ॥ ११७ ॥**

१. पदावृत्तिमाह—

उत्कण्ठयति मेघानां माला वृन्दं कलापिनाम् ।
यूनां चोत्कण्ठयत्येष मानसं मकरध्वजः ॥ ११८ ॥

१. उभयावृत्तिमाह—

जित्वा विश्वं भवानत्र विहरत्यवरोधनैः ।
विहरत्यप्सरोभिस्ते रिपुवर्गो दिवं गतः ॥ ११९ ॥

अत्र प्रावृषि विकसन्ति कदम्बानि कदम्बपुष्पाणि । स्फुटन्ति स्फुट विकसने । विकसन्ति कुटजानामुद्गमाः कुटजकुसुमानि । उन्मीलन्ति च कन्दल्यः । मील निमीलने । उन्मीलनं च विकसनमेव । दलन्ति ककुभानि च । दल इत्ययं धातुर्विस (श ?) रणे पठ्यते । विसरं (रणं) च विकसनमेव । तेन सर्वैरेतैर्विका (?) सनमेवाभिधीयत इत्यर्थावृत्तिः । विकसन्ति-स्फुटन्ति-उन्मीलन्ति-दलन्ति-पदभेदेऽप्यर्थाभेदात् ॥ ११७ ॥

उत्कण्ठयति ऊर्ध्वकण्ठं करोति मेघः मालावर्गं कलापिनाम् । यूनां चोत्कण्ठयति उत्सुकयत्य (येष) मानसं मकरध्वजः यद्यप्युत्कण्ठयतीति पदं द्विरावर्तितं तथाऽप्यर्थो भिन्नः एकत्रोद्ग्रीवयत्यपरत्रोत्कण्ठयति उत्सुकयतीति ॥ ११८ ॥

विश्वं महीतलं जित्वा भवान् विहरति क्रीडति अवरोधनैः अन्तःपुरस्त्रीभिः त्वया सह संग्रामेऽभिमुखो भूत्वा मृतो यः शत्रुसमूहः स स्वर्गं गतः सन्नप्सरोभिः सह विहरतीति न शब्दो भिन्नः नाप्यर्थ इत्युभयस्य शब्दस्यार्थस्य चावर्तनात् उभयावृत्तिः ॥ ११९ ॥

२. विकसन्तीति अर्थावृत्तिः । उत्कण्ठयतीति पदावृत्तिः । जित्वेति उभयावृत्तिः ॥ ११७-११९ ॥

३. क्रमेण उदाहरणमाह—विकसन्तीति । विकसन्तीत्यादिभिः क्रियापदैः कदम्बादीनां विकास एव केवलमुक्तः । अतः अर्थावृत्तेः

उदाहरणमेतत् । पदावृत्तिमाह—उत्कण्ठयतीति । अत्र उत्कण्ठयतीति पदं आवृत्तम् । उत्कण्ठयति उद्ग्रीवं करोति । उत्तरत्र उत्कण्ठयति उत्कलिकोत्तरं करोति । उभयावृत्त्युदाहरणमाह—जित्वेति । जित्वा विश्वं भवानद्य विहरत्यवरोधनैः इत्यनेन वर्णनीयस्य जेतव्यशेषरहितः विश्वजयो नाम अर्थः उक्तो भवति । समरनिहतानामेव वैरिणां स्वर्गगमनमप्सरोभिः सह क्रीडा चेति, विहरत्यप्सरोभिस्ते रिपुवर्गो दिवं गतः इत्यनेनापि प्रागुक्त एवार्थः अभिहितः ; इत्यर्थावृत्तिः । विहरति विहरति इत्युक्तत्वात् पदावृत्तिश्च ॥ ॥ ११७-११९ ॥

इत्यावृत्तिचक्रम् ॥

१. आक्षेपलक्षणमाह—

**प्रतिषेधोक्तिराक्षेपस्त्रैकाल्यापेक्षया त्रिधा ।**
**अथास्य पुनराक्षेप्यभेदानन्त्यादनन्तता ॥ १२० ॥**

'निषेधवचनमाक्षेपम्(प') इत्याक्षेपालङ्कारस्य सामान्यलक्षणम् । स एव आक्षेपालङ्कारः त्रैकाल्यापेक्षयाऽतीतानागतवर्तमानापेक्षया त्रिधा त्रिविधः । अतीताक्षेपो वर्तमानाक्षेपो भविष्यदाक्षेपः (इति ।) तथास्याक्षेपालङ्कारस्य आक्षेप्यभेदानन्त्यादनन्तता । आक्षिप्यन्त इत्याक्षेप्याः धर्मधर्म्यादयः । तेषामानन्त्यं तस्मादनन्तता अपर्यन्तता ॥ १२० ॥

२. आक्षेपं लक्षयति—प्रतिषेधेति । आक्षेप्यभेदानन्त्यात् अनन्तता । उपलक्षणमेतत् आक्षेपहेतुभेदाच्च इति ॥ १२० ॥

३. आक्षेपालङ्कारमाह—प्रतिषेधेति । पूर्वं वस्तुविशेषमभिधाय पुनस्तस्यैव विषयवशेन वा हेतुवशेन वा नैवम् इत्यादिप्रतिषेधवचनैः अपाकरणमाक्षेपः । तस्य भूतभविष्यद्वर्तमानकालवशेन त्रैविध्यं भवति । त्रिविधस्यापि अस्य पुनः आक्षेप्यविशेषाणां आनन्त्यात् आनन्त्यम् अस्तीति आह—अथेति ॥ १२० ॥

अनङ्गः पञ्चभिः पौष्पैर्विश्वं व्यजयतेषुभिः।
इत्यसम्भाव्यमथ वा विचित्रा वस्तुशक्तयः॥ १२१॥

इत्यनङ्गजयायोगबुद्धिर्हेतुबलादिह।
प्रवृत्तैव यदाक्षिप्ता वृत्ताक्षेपः स ईदृशः॥ १२२॥

१. अनङ्गः पञ्चभिः पौष्पैरिषुभिः विश्वं जगद्व्यजयत जितवानिति इदमसम्भाव्यम्। न हि पञ्चभिर्बाणैः एकस्य पुंसः सकलजगत्पराजयः सम्भवतीत्यनङ्गजयायोगबुद्धिः प्रकृता केन चिदाक्षिप्यते। विचित्रा वस्तुशक्तय इत्येनेन हेतुना वस्तुशक्तीनां वैचित्र्यात् अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः इत्येनेन हेतुनाऽनङ्गविजयायोगस्य प्रतिषेधात् प्रकृता (वृत्ता) क्षेपः॥ १२१॥

२. अनङ्ग इति अङ्गराहितत्वं पञ्चेषुत्वं विश्वस्य जेतव्यत्वं च इति हेतुभिः अनङ्गजयायोगबुद्धिः जाता। प्रतिबद्ध्यते च सा अथ वा विचित्रा वस्तुशक्तयः इति॥ १२१-१२२॥

३. उदाहरणानि—अनङ्ग इति। पौष्पैः इत्युक्ते जयस्य असम्भावना। अथ वा विचित्रा वस्तुशक्तय इति समाधानहेतूपन्यासात् असम्भावनाऽपि वारिता। इत्यनङ्ग इति सुबोधमेतत्। उत्तरत्रापि दुर्बोधान्येव व्याख्यायन्ते। ॥ १२१-१२२॥

कुतः कुवलयं कर्णे करोषि कलभाषिणि।
किमपाङ्गमपर्याप्तमस्मिन् कर्मणि मन्यसे॥ १२३॥

स वर्तमानाक्षेपो यत् कुर्वत्येवासितोत्पलम्।
कर्णे काचित् प्रियेणैवं चाटुकारेण रुद्ध्यते॥ १२४॥

१. कुतः कुवलयं कर्णे करोषि कलभाषिणि किमपाङ्गपर्याप्तम्। अपाङ्गमेव कर्णावतंसोत्पलकार्यकरणा(ण)समर्थम्। ततः किं कुवलयावतंसेनेति काचित् कर्णकुवलयं कुर्वत्येव प्रियेण भर्त्रा चाटुकारेण निरुद्ध्यते कर्णे कुवलयं माकार्षीः त्वमिति वर्तमानाक्षेपः॥ १२३-१२४॥

सत्यं ब्रवीमि न त्वं मां द्रष्टुं वल्लभ लप्स्यसे।

१. केन किंविशिष्टेन।

अन्याचुम्बनसङ्क्रान्तलाक्षारक्तेन चक्षुषा ॥ १२५ ॥

परस्त्रीचुम्बनेन सङ्क्रान्तो यो लाक्षारसः तेन यद्रक्तं चक्षुस्तेन ॥ १२५ ॥

सोऽयं भविष्यदाक्षेपः प्रागेवातिमनस्विनी।
कदाचिदपराधोऽस्य भावीत्येवमरुन्ध यत् ॥ १२६ ॥

१. अयं भविष्यदाक्षेपः प्रागेव पूर्वम(मेव) परस्त्रीसङ्गमादतिमनस्विनी काचित् कान्ता प्रियं यस्मादरुणा(ण)त् रुरोधका(कदा)चिदपरोधे (धोऽस्य) प्रियतमस्य। भविष्यसी(ती)ति भावी। 'भविष्यति गम्यादय' इति भवतेरिन्णिच। इ (अ) नागतापरा(ध)प्रतिविधानकरणादयं भविष्यदाक्षेप उच्यते ॥ १२६ ॥

तव तन्वङ्गि मिथ्यैव रूढमङ्गेषु मार्दवम्।

१. कुतो मिथ्यैतत्। अत आह—

यदि सत्यं मृदून्येव

तवाङ्गानि

किमकाण्डेभ(रु)जन्ति माम् ॥ १२७ ॥

धर्माक्षेपोऽयमाक्षिप्तमङ्गनागात्रमार्दवम्।
कामुकेन यदत्रैवं कर्मणा तद्विरोधिना ॥ १२८ ॥

१. अयं धर्माक्षेपः। मार्दवं नाम यो धर्मः स तद्विरोधिना कर्मणा यतोऽमुना कामुकेनाक्षिप्त इति ॥ १२८ ॥

२. तवेति। तवेत्यादीनि कालत्रयोदाहरणानि। धर्माक्षेपः मृदुगुणविरोधिन्या रुजाक्रियया मार्दवधर्मः आक्षिप्यत इति ॥ १२७-१२८ ॥

सुन्दरी सा न वेत्येष विवेकः केन जायते।
प्रभामात्रं हि तरलं दृश्यते न तदाश्रयः ॥ १२९ ॥

धर्म्याक्षेपोऽयमाक्षिप्तो धर्मी धर्मं प्रभाह्वयम्।
अनुज्ञायैव यद्रूपमत्याश्चर्यं विवक्षता ॥ १३० ॥

१. सुन्दरीशोभिना (सुन्दरी सा न वा) सुन्दरीत्येष विवेकः केन जायते यतः प्रभामात्रं हि तरळं दृश्यते। तेनात्र संशयः। सौन्दर्यासौन्दर्ययोराधारः शरीरम्। तच्च प्रभया व्याप्तम्। अतः प्रभैव केवला दृश्यते। न च प्रभाश्रयः शरीरमित्ययं धर्म्याक्षेपः। धर्मिणः शरीरस्याक्षेपात् निषेधादिति ॥ १२९-१३० ॥

२. सुन्दरीति। विलक्षणसंस्थानावयववती सुन्दरी। सा सुन्दरी वा न वा इति विवेक्तुं न शक्या, यतो विद्युत्प्रभासदृशं तरलम् उज्ज्वलं प्रभामात्रं दृश्यते। तत्र प्रभायां प्रभाश्रयोऽङ्गं न दृश्यते। आक्षेपविशेषलक्ष्यलक्षणानि स्पष्टानि ॥ १२९-१३० ॥

३. धर्म्याक्षेप इति। विवक्षता वक्तुम् इच्छता। अत्र धर्मशब्देन वर्णनीया उच्यते। अत्यद्भुतं वर्णनीयरूपं वक्तुकामः—प्रभामात्रं पश्यामः, प्रभायास्त्वाश्रयो न दृश्यते—इत्याह ॥ १३० ॥

चक्षुषी तव रज्येते स्फुरत्यधरपल्लवः।
भ्रुवौ च भुग्ने न तथाऽप्यदुष्टस्यास्ति मे भयम् ॥ १३१ ॥

स एष कारणाक्षेपः प्रधानं कारणं भियः।
स्वापराधो निषिद्धोऽत्र यत् प्रियेण पटीयसा ॥ १३२ ॥

१. चक्षुषी तव रज्येते इत्यादि (यत्) स एष कारणाक्षेपः यतो हि भयं नामत(य)त्कार्यं तत्कारणमपराधः स च मे नास्त्येते(व)। न.... (त)थाऽप्यदुष्टस्यास्ति मे भयम्। 'त्यजति भयमकृतपाप'मिति ॥ १३१-१३२ ॥

२. स इति। पटीयसा प्रगल्भेन ॥ १३२ ॥

दूरे प्रियतमः सोऽयमागतो जलदागमः।
दृष्टाश्च फुल्ला निचुला न मृता चास्मि किन्न्विदम् ॥ १३३ ॥

कार्याक्षेपः स कार्यस्य मरणस्य निवर्तनात् ।
तत्कारणमुपन्यस्य दारुणं जलदागमम् ॥ १३४ ॥

१. अयं संस्का(का)र्याक्षेपः मरणं नाम यत्कार्यं तदाक्षेप(:) प्रतिषेधः मरणकारणस्य विरहिणा(णां) जलदागमनस्य सद्भावात् ॥ १३३-४॥

३. दूर इति । वर्षासु प्रियतमेषु अनागतेषु कामिन्यः कथाशेषा भवन्ति इति कविसमयः। अहं प्रोषितदयिता प्राप्तेऽपि घनसमये प्राणिमि, इति कारणे सत्यपि कार्यं न दृश्यते, इति कार्याक्षेपः ॥ १३३-१३४ ॥

न चिरं मम तापाय तव यात्रा भविष्यति ।
यदि यास्यसि यातव्यमलमाशङ्कयाऽत्र ते ॥ १३५ ॥

इत्यनुज्ञामुखेनैव कान्तस्याक्षिप्यते गतिः ।
मरणं सूचयन्त्यैव सोऽनुज्ञाक्षेप उच्यते ॥ १३६ ॥

१. यदि यास्यस्यवश्यं तर्हि यातव्यमित्यनुज्ञाक्षेपः । त्वयि गते क्षणमपि (न) जीविष्यामि ततस्तापो मे न भविष्यतीत्यात्मनो मरणं सूचयन्त्या प्रियया यात्रा निषिद्धा यतः ॥ १३५-१३६ ॥

३. नेति। तव यात्रा न मे चिरं तापाय भवति ; नात्र शङ्का कर्तव्या; यास्यसि चेत् याहि इत्यनुज्ञा । एवम् अनुजानत्याः तव यात्रा न मे चिरं तापाय इति वचनं मरणसूचनं(कं) यात्रां निवर्तयति। इत्यनुज्ञामुखेन गमनस्य आक्षेपात् अयम् अनुज्ञाक्षेपः ॥ १३५-१३६ ॥

धनं च बहु लभ्यं ते सुखं क्षेमं च वर्त्मनि।
न च मे प्राणसन्देहस्तथाऽपि प्रिय मा स्म गाः ॥ १३७ ॥

प्रत्याचक्षाणया हेतून् प्रिययात्रानुबन्धिनः ।
प्रभुत्वेनैव रुद्धत्वात् प्रभुत्वाक्षेप उच्यते ॥ १३८ ॥

१. धनं च बहु लभ्यन्त इत्यादिकः प्रभुत्वाक्षेपः । कुतः प्रत्याचक्षणया निषेधन्त्या हेतून् कारणानि प्रिययात्राविबन्धिनः यैर्हेतुभिः प्रियप्रस्थानं निषि-

ध्वयेत स एकोऽपि नास्ति । तथाऽपि प्रिय मा स्म गा इति स्वप्रभुत्वेनैव प्रिययात्रा निषिद्धा यतः ॥ १३७-१३८ ॥

३. धनमिति । गमनविरोधिनो हेतवो न विद्यन्ते, तथाऽपि मा गाः इति वचनं प्रभुत्वेन विना न घटते ; इति प्रभुत्वेन गमनस्य आक्षिप्तत्वात् असौ प्रभुत्वाक्षेपः ॥ १३७-१३८ ॥

जीविताशा बलवती धनाशा दुर्बला मम ।
गच्छ वा तिष्ठ वा कान्त स्वावस्था तु निवेदिता ॥ १३९ ॥

असावनादराक्षेपो यदनादरवद्वचः ।
प्रियप्रयाणं रुन्धत्या प्रयुक्तमिह रक्तया ॥ १४० ॥

१. जीविताशा बलवतीत्यादिकः अनादराक्षेपः यतो गच्छ वा तिष्ठ वा कान्तेत्यनादरवद्वचःप्रयुक्तं रक्तया प्रियप्रयाणं रुन्धत्या निराकुर्वत्या ॥ १३९-१४० ॥

३. जीवितेति । गच्छ वा तिष्ठ वा इत्यनादरसहितं वचनं प्रियगमनं निरुणद्धि इत्यसौ अनादराक्षेपः ॥ १३९-१४० ॥

गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥ १४१ ॥

इत्याशीर्वचनाक्षेपो यदाशीर्वादवर्त्मना ।
स्वावस्थां सूचयन्त्यैव कान्तयात्रा निषिद्ध्यते ॥ १४२ ॥

१. गच्छेत्यादिकः आशीर्वचनाक्षेपः यस्मादाशीर्वादवर्त्मना आशीर्वाद-व्याजेन कान्तया यात्रा निषिद्ध्यते ममापि जन्म तत्रैव देशे भूयाद्यत्र गतो भवान्। त्वयि गते क्षणमपि न जीवामीति स्वस्य मरणसूचनात् ॥ १४१-२

३. गच्छेति । ममापि जन्म तत्रैव भूयात् इति मरणं सूचयन्त्या आशिषा कान्तयात्रानिरोधात् अयम् आशीर्वचनाक्षेपः ॥ १४१-१४२ ॥

यदि सत्यैव ते यात्रा काऽप्यन्या मृग्यतां त्वया ।
अहमद्यैव रुद्धाऽस्मि रन्ध्रापेक्षेण मृत्युना ॥ १४३ ॥

इत्येष परुषाक्षेपः परुषाक्षरपूर्वकम् ।
कान्तस्याक्षिप्यते यस्मात् प्रस्थानं प्रेमनिघ्नया ॥ १४४ ॥

१. यदि सत्यैव यात्रा ते काऽप्यन्या पत्नी गृह्यतां ततो (त्वया अ)हं पुनरद्यैव रुद्धा स्वीकृताऽस्मि रन्ध्रापेक्षेण छिद्रान्वेषिणा मृत्युना । भवता सहेपि बामे (भवतो गृहान्निर्गमे) मम मरणं पश्यामीति परुषाक्षरं कुर्वन् किं (परुषाक्षरपूर्वकं)स(स्व)मरणमावेदन्त्या यतः कान्तयात्रा निषिद्ध्यते ततोऽयं परुषाक्षेप उच्यते ॥ १४३-१४४ ॥

गन्ता चेद्गच्छ तूर्णं ते कर्णौ यान्ति पुरा रवाः ।
आर्तबन्धुमुखोद्गीर्णाः प्रयाणपरिपन्थिनः ॥ १४५ ॥

साचिव्याक्षेप एवैष यदत्र प्रतिषिद्ध्यते ।
प्रियप्रयाणं साचिव्यं कुर्वत्येवानुरक्तया ॥ १४६ ॥

१. गन्ता चेद्गच्छ हे प्रिय यद्यवश्यं गन्ता भवान् तर्हि गच्छ त्वम् । गते हि (गन्तेति) भविष्यति लुटः प्रथमस्यैकवचने 'लुटः प्रथमस्य डा रौ रसः' इति डिति टिलोपे । तूर्णं शीघ्रं ते नच(तव) कर्णं यास्यन्ति(यान्ति) पुरा रवाः शब्दाः । पुरा यान्तीति भविष्यति काले पुरायोगे 'यावत् पुरा निपातयोर्लट्' । आर्तबन्धुमुखोद्गीर्णाः दुःखितबन्धुजनाननोदीरिताः प्रयाणप्रतिबन्धिनः प्रयाणं प्रतिबध्नाति शीलाः एवंशीलाः (बध्नन्तीत्येवंशीलाः) । मयि मृतायां भवद्बन्धुषु रुदत्सु कथं भवान् यास्यसीति एष साचिव्याक्षेपः । सचिवोऽमात्यस्तस्य भावः साचिव्यं तेन प्रियप्रयाणप्रतिषेधात् ॥ १४५-६ ॥

३. गन्तेति । साचिव्यं साहाय्यम् । साचिव्यानुज्ञाक्षेपयोः अयं भेदः—साचिव्याक्षेपे नियोगपूर्वः स्यात् अभ्युपगमः, अनुज्ञाक्षेपे तु अभ्युपगममात्रम्, इति ॥ १४५-१४६ ॥

गच्छेति वक्तुमिच्छामि त्वत्प्रियं मत्प्रियैषिणी।
निर्गच्छति मुखाद्वाणी मा गा इति करोमि किम् ॥ १४७ ॥

यत्नाक्षेपः स यत्नस्य कृतस्यानिष्टवस्तुनि।
विपरीतफलोत्पत्तेरानर्थक्योपदर्शनात् ॥ १४८ ॥

१. गच्छेति वक्तुमिच्छामि मा गा इति तु वाणी निर्गच्छति त(म)न्मुखादिह किं करोमि। स एष यत्नाक्षेप उच्यते। अनिष्टवस्तुनि कृतस्य यत्नस्यानर्थक्यं च विपरीतफलोत्पत्तेः गच्छेत्येतस्य विपरीतफलमाह इति। प्रस्थितस्य 'मा गाः प्रियतम' 'क्व यास्यती'त्यमङ्गलमेतद्यतः ॥ १४७-१४८ ॥

२. यत्नाक्षेप इति। यत्नाक्षेपः यत्ननिषेधः। अनभिमते कान्तगमनाभ्युपगमे कृतस्य यत्नस्य, मा गाः इति अनभ्युपगमकथनात् निषेधो जायते इत्ययं यत्नाक्षेपः। विपरीतफलोत्पत्तिः मा गाः इति वचनम्। यत्नस्य आनर्थक्यं वैयर्थ्यं निषेधः इति यावत् ॥ १४८ ॥

क्षणदर्शनविघ्नाय पक्ष्मस्पन्दाय कुप्यतः।
प्रेम्णः प्रयाणं ते ब्रूहि मया तस्येष्टमिष्यते ॥ १४९ ॥

अयं परवशाक्षेपो यत् प्रेमपरतन्त्रया।
तया निषिध्यते यात्राऽन्यस्यार्थस्योपसूचनात् ॥ १५० ॥

१. ते तव प्रयाण.... .... लभ्यस्य (?) यत् (कु)प्यति प्रेम तत् किं विरहव्यथां सहिष्यते न च (तवे)ति स एष पारवश्याक्षेपः यत् यस्मात् प्रेमपरतन्त्रया प्रेमपराधीनया तया कान्तया निषिद्ध्यते यात्राप्रियमस्यान्यस्यार्थस्य मरणस्योपसूचनात् ॥ १४९-१५० ॥

२. क्षणमिति। त्वद्दर्शने क्षणमात्रं विघ्नभूतं पक्ष्मस्पन्दमपि न सहते यत्, यस्य अहं अधीना प्रेम्णः, तस्य यदिष्टं, मया तदिष्यते; तस्य ते प्रयाणं ब्रूहि—इति वदन्त्या प्रेमपारतन्त्र्यं च आत्मनः, प्रेम्णः *स्वभावश्च

* एतत्पर्यालोचने 'तत्स्वरूपोपसूचनात्' 'तत्स्वभावोपसूचनात्' इति केनचित्पाठेन भाव्यमिति भाति।

यात्राप्रतिबन्धी , सूचितः ; इति पारवश्यद्वारेण आक्षिप्तत्वात् अयं पर-वशाक्षेपः ॥ १४९-१५० ॥

सहिष्ये विरहं नाथ देह्यदृश्याञ्जनं मम ।
यदक्तनेत्रां कन्दर्पः प्रहर्ता मां न पश्यति ॥ १५१ ॥

दुष्करं जीवनोपायमुपन्यस्योपरुध्यते ।
पत्युः प्रस्थानमित्याहुरुपायाक्षेपमीदृशम् ॥ १५२ ॥

१. सहिष्ये चिरमित्यादिरुपायाक्षेपः यतो (जीवनस्य यो दृश्याञ्जनं) नाम उपायः स दुष्करः तमुपन्यस्य पत्युः प्रस्थानं रुध्यते । ज्वरहरतक्षकचूडालङ्कार(मण्याहरणवद)शक्यानुष्ठानत्वात् ॥ १५१-१५२ ॥

[मुग्धा कान्तस्य यात्रोक्तिश्रवणादेव मूर्छिता ।
बुध्वा वक्ति प्रियं दृष्ट्वा किं चिरेणागतो भवान् ॥ १५३ ॥

इति तत्कालसम्भूतमूर्छयाऽऽक्षिप्यते गतिः ।
कान्तस्य कातराक्ष्या यन्मूर्छाक्षेपः स ईदृशः ॥ १५४ ॥]

प्रवृत्तैव प्रयामीति वाणी वल्लभ ते मुखात् ।
अयाताऽपि त्वयेदानीं मन्दप्रेम्णा ममास्ति किम् ॥ १५५ ॥

रोषाक्षेपोऽयमुद्रिक्तस्नेहनिर्यन्त्रितात्मना ।
संरब्धया प्रियारब्धं प्रयाणं यन्निषिध्यते ॥ १५६ ॥

१. प्रवृत्तैव तव मुखाद्वाणी प्रयामि गमिष्यामीति 'वर्तमानसामीप्ये वर्तमानवद्वा' इति वृद्धय (भविष्यद)र्थे लड्विधानम् । इदानीं हे वल्लभ ! अयाताऽपि अगमिष्यताऽपि त्वया मयि मन्दप्रेम्णा विगतस्नेहेन स्थितेनाऽपि किम् । रोषाक्षेपोयं नाम उद्रिक्तस्नेहनिर्यन्त्रणान्मा(न्त्रितात्मना) समधिक-स्नेहनिबन्धान्मा (द्धात्मना)सा(सं)रब्धया कुपितया प्रियारब्धं प्रयाणं त-(य)न्निषिद्ध्यते ॥ १५५-१५६ ॥

३. प्रवृत्तैवेति । अगच्छताऽपि मन्दप्रियेण त्वया मम किम् इति सम्बन्धः ॥ १५५ ॥

नाघ्रातं न कृतं कर्णे स्त्रीभिर्मधुनि नार्पितम् ।
त्वद्विषां दीर्घिकास्वेव विशीर्णं नीलमुत्पलम् ॥ १५७ ॥

असावनुक्रोशाक्षेपः सानुक्रोशमि(श इ)वोत्पले ।
व्यावर्त्य कर्म तद्योग्यं शोच्यावस्थोपवर्णनात् ॥ १५८ ॥

१. तद्यच्च(मद्य च)षकेऽपि नु(न)क्षिप्तं नोच्छिछ्वितं(?) त्वद्विषां दीर्घिकास्वेव विस्ती(शी)र्णं जीर्णमुत्पलम् । असावनुक्रोशाक्षेपः सानुक्रोश इवाशोच्ये इव (?) उत्पले तद्योग्यमुत्पलयोग्यं यत् कर्णघ्राणावतंसकरणादि तद्व्यावर्त्याभावं प्रदर्श्य शोच्यावस्थोपदर्शनात ॥ १५७-१५८ ॥

३. नाघ्रातमिति । अनुक्रोशो नाम परदुरवस्थादर्शनादिजनितदाक्षिण्यम् । अनुक्रोशसहितम् आक्षेपवचनम् अनुक्रोशाक्षेपः । अत्र सानुक्रोशम् उत्पलस्य शोच्यावस्थां दर्शयन् तद्योग्यं कर्म व्यावर्तयतीति अनुक्रोशाक्षेपः ॥ १५७-१६८ ॥

अमृतात्मनि पद्मानां द्वेष्टरि स्निग्धतारके ।
मुखेन्दौ तव सत्यस्मिन्नपरेण किमिन्दुना ॥ १५९ ॥

इति मुख्येन्दुराक्षिप्तो गुणान् गौणेन्दुवर्तिनः ।
तत्समान् दर्शयित्वेह श्लिष्टाक्षेपस्तथाविधः ॥ १६० ॥

१. अमृतात्मनि अमृतस्वभावे पद्मानां द्वेष्टरि पद्मप्रतिस्पर्धिनि स्निग्धे तारके अक्षिगते यत्र सः स्निग्धतारकस्तत्र मुखेन्दौ एतस्मिन् सति इतरेण मुख्येन किमिन्दुना इति मुख्येन्दुराक्षिप्तः प्रतिषिद्ध इतरेण किमिन्दुनेत्यनेन गुणानमृतात्मकादीन् गौणचन्द्रवर्तिनः तत्समां(मान्) मुखचन्द्रसमां दर्शइ.... त्वे (मुख्यचन्द्रमःसदृशान् दर्शयित्वेति) श्लिष्टाक्षेपः तथाविधः ॥१५९-६०

३. अमृतात्मनीति । मुख्ये पक्षे—अमृतात्मनि सुधामये, पद्मानां द्वेष्टरि पद्मानां सङ्कोचयितरि, स्निग्धतारके अनुरक्तदाक्षायणीके। गौणपक्षे—आनन्दजनने पद्मसन्निभे स्निग्धकनीनिके। एवं चन्द्रसमे तव मुखे सति, न चन्द्रमसा कार्यम्; इति श्लेषकथनेन आक्षेपात् श्लिष्टाक्षेपः ॥१५९-१६०॥

अर्थो न संभृतः कश्चिन्न विद्या काचिदर्जिता ।
न तपः सञ्चितं किञ्चिद् गतं च सकलं वयः ॥ १६१ ॥

असावनुशयाक्षेपो यस्मादनुशयोत्तरम् ।
अर्थार्जनादेर्व्यावृत्तिर्दर्शितेह गतायुषा ॥ १६२ ॥

१. अर्थो न संभृतः कश्चिदित्यादि । सयदन(अयमनु)शयाक्षेपः पश्चात्तापाक्षेपः यस्माद(नुश)य उत्तरः समधिकं यथा भवत्येवमर्थार्जनादेर्व्यावृत्तिर्दर्शितेह गतायुषा वृद्धेन कोऽपि (केनापि) ॥ १६१-१६२ ॥

२. अर्थो नेति । अनुशयः पश्चात्तापः। अभ्यधिकानुशयम् अर्थार्जनादेर्निषेधः क्षीणायुषा केनापि दर्शितः इति अयम् अनुशयाक्षेपः ॥१६१-२॥

किमयं शरदम्भोदः किं वा हंसकदम्बकम् ।
रुतं नूपुरसंवादि श्रूयते तन्न तोयदः ॥ १६३ ॥

इत्ययं संशयाक्षेपः संशयो यन्निवार्यते ।
धर्मेण हंससुलभेनास्पृष्टघनजातिना ॥ १६४ ॥

१. शरदम्भोदहंसकदम्बकयोर्धवलिम्ना सादृश्येन विभ्रान्तचित्तस्य संशय उपजायते । तस्याक्षेपो निषेधः कुतः कूजितं नूपुररवानुकारि श्रूयते । तन्न तोयदः न शरदम्भोदः किं तु हंसकदम्बकमेव केन (इति रुतेन) नूपुर(रवानु)कारिणा संशयस्याक्षिप्तत्वात् संशयाक्षेपः ॥ १६३-१६४ ॥

२. इतीति । संशयस्य आक्षेपः संशयाक्षेपः ॥ १६४ ॥

चित्रमाक्रान्तविश्वोऽपि विक्रमस्ते न तृप्यति ।
कदा वा दृश्यते तृप्तिरुदीर्णस्य हविर्भुजः ॥ १६५ ॥

अयमर्थान्तराक्षेपः प्रक्रान्तो यन्निवार्यते ।
विस्मयोऽर्थान्तरस्येह दर्शनात् तत्सधर्मणः ॥ १६६ ॥

१. अयमर्थान्तराक्षेप उच्यते। यतः आक्रान्तसकलमहीतलोऽपि विक्रम-

स्तव दशात्य(न तृप्य) तीत्यनेन प्रवृत्तो विस्मयो येन (?) निवर्त्यते निषिद्धयते । अर्थान्तरस्य अग्नेः प्रद(र्शनात्) तत्सधर्मणो विक्रमसमानस्य ॥ १६५-६ ॥

३. अयमिति । अर्थान्तरमुपन्यस्य प्रस्तुतसम्बन्धिनो विस्मयस्य आक्षेपात् अयम् अर्थान्तराक्षेपः ॥ १६६ ॥

न स्तूयसे नरेन्द्र त्वं ददासीति कदाचन ।
स्वमेव मत्वा गृह्णन्ति यतस्त्वद्धनमर्थिनः ॥ १६७ ॥

इत्येवमादिराक्षेपो हेत्वाक्षेप इति स्मृतः ।
अनयैव दिशाऽन्येऽपि विकल्पाः शक्यमूहितुम् ॥ १६८ ॥

१. (अ)दास्त्वमसीति न स्तोतुमर्हसि स्वमेव ग(म)त्वा गृह्णन्ति यतस्त्वद्धनमर्थिनः। स्तवस्य त्यागो हेतुः । स च त्यागलक्षणो हेतुराक्षिप्तः यतो भवदीयं यद्वित्तं तत् स्वकीयमिति मत्वा स्वयमर्थिभिर्गृह्यते परकीयमर्थमादित्सुर्जनो धनिनं स्तौति न स्वकीयमिति हेत्वाक्षेपोऽयम् ॥

इत्यल्पमिदमुक्तमस्माभिः । एवंविधा विकल्पा अपरेऽप्यभिहि(धा)तव्या अनयैव दिशा अनयै(नै)व न्यायेन शक्यमूहितुम् । किं तदिति बुभुत्सायां विकल्पा इत्यभिधीयते । अन्यथा विकल्पाः शक्या ऊहितुमिति स्यात् । तदुक्तं भाष्यकारेण—'न शक्यं क्षुदपहर्तुम् (?) १६७-१६८ ॥

३. नेति । वर्णनीयस्य त्यागविषया स्तुतिः हेतुमुखेन आक्षिप्ता इति हेत्वाक्षेपः । आदिशब्देन ईदृशाः अन्येऽपि हेत्वाक्षेपतया गृह्यन्ते । आक्षेपविकल्पा अन्येऽपि दर्शितेन मार्गेण ज्ञातव्या इत्याह—अनयैवेति ॥

इति आक्षेपचक्रम् ।

---

१. अन्य(अ)र्थान्तरन्यासस्य लक्षणमाह—

**ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किञ्चन।**
**तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः॥ १६९॥**

वस्तु किञ्चित् प्रस्तुत्य तस्य प्रस्तुतस्य वस्तुनो यत्साधनं तस्य समर्थं यदन्यत् वस्तु तस्य न्यास उपन्यासः स्थापनं सोऽर्थान्तरन्यासः प्रकृताद्-र्थादन्योऽर्थोऽर्थान्तरं तस्या (स्य न्यासो)ऽर्थान्तरन्यासः॥ १६९॥

२. अर्थान्तरन्यासं लक्षयति—ज्ञेय इति। विवक्षितं कञ्चिदर्थं उपन्यस्य तत्साधनक्षमस्य वस्त्वन्तरस्य न्यासः अर्थान्तरन्यासः॥ १६९॥

३. अर्थान्तरन्यासालङ्कारमाह—ज्ञेय इति। पूर्वं एकं साधयितुं इष्टं उक्त्वा तत्साधनार्थं वस्त्वन्तरकथनं अर्थान्तरन्यासलक्षणम्॥ १६९॥

१. तमष्टधा उद्दिशन्ति(ति)

**विश्वव्यापी विशेषस्थः श्लेषाविद्धो विरोधवान्।**
**अयुक्तकारी युक्तात्मा युक्तायुक्तो विपर्ययः॥ १७०॥**

**इत्येवमादयो भेदाः प्रयोगेष्वस्य लक्षिताः।**
**उदाहरणमालैषां रूपव्यक्तौ (क्त्यै)निगद्यते॥ १७१॥**

विश्वं कृत्स्नं व्याप्नोतीत्येवंशीलः तद्धर्मा तत्साधव (तत्साधुकारी वा) विश्वव्यापी। विशेषे कस्मिंश्चिद्विवक्षिते तिष्ठतीति विशेषस्थः। श्लेषेणानेकार्थ-वाचिना विद्धः। विरोधो विप्रतिषेधः सहानवस्थानलक्षणः परस्परपरिहास-(रेण)स्थितिर्वासोऽस्यास्तीति विरोधवान्। अयुक्तमसम्बद्धं करोतीत्युक्तकारी। अयु(यु)क्तः सन्बन्धः आत्मा यस्यां सा (यस्यासौ) युक्तात्मा। युक्तश्चासाव-युक्तः। तथास्य (तस्य) युक्तायुक्तस्य विपर्ययो व्यत्ययः अयुक्तयुक्तः इत्ये-वमादयः इत्येवंप्रकार(रा)भेदा विशेषाः प्रयोगेष्वर्थान्तरन्यासस्य काव्यादिषु लक्षिताः। उदाहरणमाला एषां विश्वव्यापिप्रकृ(भृ)तीनां रूपव्यक्त्यै त-

स्वरूपस्पष्टनाय निर्दिश्य(दर्श्य)ते ॥ १७०-१७१ ॥

२. विश्वेति । सः विश्वव्यापी विशेषस्थ इत्यादिभिः प्रकारैः अष्टप्रकारः ॥ १७०-१७१ ॥

३. पृथगर्थनामवशेन तद्भेदान् दर्शयति—विश्वेति । विश्वव्यापी निखिलपदार्थानुगतः । विशेषस्थः कस्मिंश्चिदेव पदार्थे व्यवस्थितः । श्लेषाविद्धः वक्ष्यमाणश्लेषालङ्कारलक्षणोपेतः । विरोधवान् असङ्गतिमान् । अयुक्तकारी स्वस्वभावविरुद्धार्थकारी । युक्तात्मा स्वस्वभावयोग्यार्थः । युक्तायुक्तः स्वस्वभाववि[illegible]तः । विपर्ययः अन्यभावापत्तिः । क्रमेण एषां उक्तप्रकाराः भेदाः सर्वेऽपि अस्य प्रयोगेषु काव्यनाटकादिषु लक्षणीयाः ॥ १७०-१७१ ॥

**भगवन्तौ जगन्नेत्रे सूर्याचन्द्रमसावपि ।**
**पश्य गच्छत एवास्तं नियतिः केन लंघ्यते ॥ १७२ ॥**

१. भगवन्तौ कृतिनौ । जगतस्त्रिभुवनस्य । नेत्रे उप (इव) नेत्रे सूर्याचन्द्रमसा(व)पि च गच्छत एवास्तं (अवश्यं) गच्छत इत्यर्थः । क्रियापदात्परत एवकारोऽत्यन्तायोगं व्यवच्छिनत्ति । तदुक्तम्—

‘विशेषणविशेष्याभ्यां क्रि(य)या च सहोदितं(दितः) ।
व्यवच्छिनत्ति धर्मस्य निपातोऽप्य(व्य)तिरेचकः ॥
अयोगं योगः परे(मपरै)रत्यन्तायोगमेव च ।’

इति प्रस्तुत्य वस्तु तत्साधनसमर्थस्य न्यासः अन्यस्य वस्तुनः यथा—

नियतिः केन लङ्घ्यते

नियतिरभ(र्भ)वितव्यता केन लङ्घ्यते न केनापि इति किमा सर्वनाम्ना सामान्याभिधायिना नियतेरलङ्घनीयतां प्रतिपादयन् विश्वं व्याप्नोति ।

२. भगवन्ताविति । नियतिः केन वा लङ्घ्यते ? विधिः सर्वैः अनुवर्तनीयः, इति सर्वेषामपि अनिष्टेषु प्रस्तुतेषु, शासनसमर्थः इति असौ विश्वव्यापी ॥ १७२ ॥

३. एषां भेदव्यक्त्यै उदाहरणान्याह । तत्र प्रथमं विश्वव्याप्युदाहरणम्—भगवन्तौ इति । अस्तं विनाशं एकत्र, अन्यत्र अस्ताचलं, गच्छत एव इति साध्यम् । नियतिः केन लङ्घ्यते इति अर्थान्तरमेतत् । ब्रह्मादिकीटपर्यन्तानां सर्वेषां विनाशनिष्ठता नियतिर्नाम ॥ १७२ ॥

१. विशेषस्थत्वमुदाहरति—

**पयोमुचः परीतापं हरन्त्येव शरीरिणाम् ।**

इत्युपन्यस्य वस्तु तत्साधनसमर्थस्यान्यस्य वस्तुनो न्यासः

**नन्वात्मलाभो महतां परदुःखोपशान्तये ॥ १७३ ॥**

महतां स्वात्मलाभो न कनीयसामिति विशेषस्थः ॥ १७३ ॥

२. पयोमुच इति । अत्र महतां आत्मलाभः इति महदुपादानात् विशेषस्थः । 'अवाप्तव्यान्यवाप्तानि यस्य सर्वाणि देहिनः । परोपकारव्यसनी स महानभिधीयते' इति पयोमुचां महत्त्वम् । अथवा महान् उदारः ॥ १७३ ॥

३. परदुःखोपशान्तिहेतुः शरीरपरिग्रहो महतामेव इति विशेषस्थोऽयम् १७३ ॥

१. श्लेषाविद्धमुदाहरति—

**उत्पादयति लोकस्य प्रीतिं दक्षिणमारुतः ।**

(एत)दे(दे)वोत्तरार्धेन समर्थयते—

**ननु दाक्षिण्यसम्पन्नः सर्वस्य भवति प्रियः ॥ १७४ ॥**

[द]क्षिणस्य भावो दाक्षिण्यं तेन सम्पन्नः कस्य प्रियं नावहति सर्वस्य सुख-

मावहत्येवेति । दाक्षिण्यं दक्षिणादिग्भ्यो हस्तयोर(दक्षिणदिग्भवत्वं वायोः । अ)न्यत्र दाक्षिण्यमुपरोधशीलतात्मकं पापरता (सरलत्वं?) चेति श्लेषाविद्धः ॥ १७४ ॥

२. उत्पादयतीति । दाक्षिण्यं दक्षिणदिग्भवत्वम्, अन्यच्छन्दानुवर्तित्वञ्च, इति श्लेषाविद्धत्वम्; 'देयभेदे तु दक्षिणा, त्रिष्वर्कसरलावामेष्वन्यच्छन्दानुवर्तिनि' इति ॥ १७४ ॥

३. उत्पादयतीति । दाक्षिण्यशब्दस्य स्वाभाविकार्थाः बहवः—दक्षिणदिक्सम्भवो, दाक्षिण्ययुक्तः, समर्थश्च । तेषु अन्यतमः साध्यतया निर्दिष्टः, साधनभूतेन अन्यतमेन साध्यते, इति श्लेषाविद्धः ॥ १७४ ॥

१. विरोधवानुदाहियते–

**जगदानन्दयत्येष मलिनोऽपि निशाकरः ।**

स्वयं मलिनस्य जगदाह्लादकारित्वं कथमिति विरोधः ।

**अनुगृह्णाति हि परान्**

**स्वयं**

**सदोषोऽपि द्विजेश्वरः ॥ १७५ ॥**

इति विरोधवान् ॥ १७५ ॥

२. जगदिति । द्विजेश्वरः ब्राह्मणः चन्द्रश्च । द्विजराजः सदोषोऽपि अनुगृह्णाति इति विरोधः ॥ १७५ ॥

३. जगदिति विरोधवतः उदाहरणम् । द्विजेश्वरः इति अर्थान्तरन्यासः । सदोषोऽपि ब्राह्मणमुख्यः परान् अनुगृह्णाति ॥ १७५ ॥

१. अयुक्तकारी उदाहियते–

**मधुपानकलात्कण्ठान्निर्गतोऽप्यलिनां ध्वनिः ।**
**कटुर्भवति कर्णस्य कामिनां पापमीदृशम् ॥ १७६ ॥**

मधुपानकलात्कण्ठान्निर्गतोऽप्यलिनां ध्वनिः । किल [कलः] कर्णमधुरः इति युक्तम् । एतत्तु विपरीतमित्ययुक्तकारी ॥ १७६ ॥

२. मध्विति । अलिनां मधुपानेन कलात् कण्ठात् निर्गतः श्रोत्रहारी अपि ध्वनिः कामिनां विरहिणां कर्णस्य कटुः भवति । पापं अयुक्तं करोति हि ॥ १७६ ॥

३. मध्विति । पापोपहतानां सर्वमपि विपर्यस्यते इति अर्थान्तरस्य प्रदर्शितत्वात् अयुक्तकारिणः उदाहरणं इदम् ॥ १७६ ॥

१. युक्तात्मा उदाह्रियते–

**अयं मम दहत्यङ्गमम्भोजदलसंस्तरः ।**
**हुताशनप्रतिनिधिर्दाहात्मा ननु युज्यते ॥ १७७ ॥**

अयमम्भोजदळसंस्तरो ममाङ्गं दहतीति । तदेव समर्थयते । हुताशनप्रकृति(तिनिधि)रग्निसमानद्युतिर्दाहात्मा दहनस्वभावो भवतीति युक्तमेव १७७॥

२. अयमिति । हुताशनप्रतिनिधिः–अम्भोजदलप्रस्तरस्य पीतवर्णतया हुताशनसादृश्यम् । इति युक्तकारी ॥ १७७ ॥

३. अयमिति । अयं अम्भोजदलसंस्तरः मां दहतीति शीतलस्य दाहस्वभावं प्रकृत्य हुताशनप्रतिनिधिः हुताशनसदृशो दाहात्मा भवतीति युज्यते इति युक्तात्मनः उदाहरणम् ॥ १७७ ॥

१. अयु(यु)क्तायुक्तमुदाहरति—

**क्षिणोतु कामं शीतांशुः किं वसन्तो दुनोति माम् ।**
**मलिनाचरितं कर्म सुरभेर्नन्वसाम्प्रतम् ॥ १७८ ॥**

क्षिणोतु कामं शीतांशुरिति युक्तमेतत् । किं च(व)सन्तो दुनोतीति तु(?)मामित्ययुक्तम् । तदेव समर्थयते । मलिनाचरितं मलिनेन (स) लाञ्छनेन (आ) चरितं कर्म परपीडाकरणं सुरभेर्वसन्तस्य निर्मलात्मनो नन्वसांप्रतमिति युक्तः एतत् (त्ययुक्तमेतत) ॥ १७८ ॥

२. क्षिणोत्विति । सुरभिः सौम्यो वसन्तश्च । मलिनस्य युज्यते परपीडनम् , न सौम्यस्य इति युक्तायुक्तत्वम् ॥ १७८ ॥

३. क्षिणोत्विति । मलिनः इन्दुः निकृष्टश्च । सुरभिः वसन्तः सत्पुरुषश्च । विरोधवति युक्तात्मनि युक्तायुक्ते च अर्थान्तरन्यासे श्लेषानुबन्धे सत्यपि , प्रागुक्तन्यायेन न तद्व्यपदेशः ॥ १७८ ॥

१. विपर्ययमुदाहरति–

कुमुदान्यपि दाहाय किमङ्ग कमलाकरः ।
न हीन्दुगृह्येषूग्रेषु सूर्यगृह्यो मृदुर्भवेत् ॥ १७९ ॥

कुमुदान्यपि दाहाय कुमुदानां दाहकरणमयुक्तं किमङ्ग किं पुनरहो कमलाकराः । कमलाकराः सुतराम् । कमलाकराणां दाहकरत्वमयु(यु)क्तमेव । तदेव समर्थयते । न हीन्दुगृह्येषु उग्रेषु चन्द्रपक्षपातिषु कुमुदेषूग्रेषु सत्सु सूर्यगृह्यो मृदुर्भवेत् सूर्यपक्षपातिनः कमलाकरा नम्रःपसरस्वयच्छीलाभ्यस्य (?) प्रकृतयो भवन्ति । सकलजनाह्लादनकरशशधरबन्धुषु दहत्सु नितरां खरकरपक्षपातिनः कमलाकरा दहन्तीत्ययुक्तः (त्ययुक्तयुक्तः) ॥ १७९ ॥

२. कुमुदानीति । किमङ्ग किं पुनः । कुमुदानां शीतलचन्द्रपक्ष्यत्वात् तापकरत्वं अयुक्तम् ; कमलाकरस्य उष्णकरपक्ष्यत्वात् तापकरत्वं युक्तम् । इति अयुक्तयुक्तरूपः अर्थान्तरन्यासः ॥ १७९ ॥

३. कुमुदानीति । शीतगुणयुक्तस्य तापकरणं विपर्ययो भवति । एनमर्थमुद्दिश्य अर्थान्तरन्यासः अभिहितः । इन्दुपक्षेषु उग्रेषु सत्सु, सूर्यपक्षा उग्रप्रायाः किल मृदुत्वे न समुपेता भवन्ति, इति विपर्ययार्थान्तरन्यासस्य उदाहरणम् ॥ १७९ ॥

इत्यर्थान्तरन्याचक्रम् ।

---

१. व्यतिरेकलक्षणमाह—

**शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः ।**
**तत्र यद्भेदकथनं व्यतिरेकः स कथ्यते ॥ १८० ॥**

शब्देनोपात्ते अभिहिते सादृश्ये सदृशयोर्भावः सादृश्यं तस्मिन् वस्तुनोर्द्वयोस्तत्र तयोर्मध्ये यदेकस्य वस्तुनो भेदकथनं विशेषाभिधानं व्यतिरेकः स कथ्यते । प्रतीते वा । शब्देनानुपात्ते किं तु प्रतीते सामर्थ्यादिनाऽवगते सति सादृश्ये द्वयोर्यदेकस्य भेदकथनं स च व्यतिरेक इति द्विधा व्यतिरेको भवति ॥ १८० ॥

२. व्यतिरेकं लक्षयति—शब्देति ॥ १८० ॥

३. व्यतिरेकालङ्कारलक्षणमाह—शब्देति । वाचकशब्देन वा सामर्थ्येन वा द्वयोः पदार्थयोः साम्ये परिज्ञाते सति भेदकथनं व्यतिरेको नाम ॥

१. तत्र शब्दोपात्तं सादृश्यमभिधाय व्यतिरेकमाह—

**धैर्यलावण्यगाम्भीर्यप्रमुखैस्त्वमुदन्वतः ।**
**गुणैस्तुल्योऽसि भेदस्तु वपुषैवेदृशेन ते ॥ १८१ ॥**

**इत्येकव्यतिरेकोऽयं धर्मेणैकत्रवर्तिना ।**
**प्रतीतिविषयप्राप्तेर्भेदस्योभयवर्तिनः ॥ १८२ ॥**

धैर्यलावण्यमाहात्म्यप्रमुखैर्गुणैस्त्वमुदन्वतः समुद्रस्य तुल्यः समोऽसीति तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्यामिति षष्ठी । उदन्वानुदधाविति उदक(?स्य)

मतुपि उदन्वानिति भवति। इति धैर्यादिभिः शब्दैः समुद्रेण समतामाप(।)य भेदस्तु वपुषैवेदृशेन समुद्राच्चेवति भेदकथनात् व्यतिरेकः।

इत्येकव्यतिरेकोऽयमिति। अनन्तरोक्त एकव्यतिरेकोऽयम्। कुतोऽयमेकव्यतिरेकमि (क इ) त्याह प्रतीतिविषयप्राप्तेः। कस्य। भेदस्य विशेषस्य। किंविशिष्टस्येत्याह–उभयवर्तिनः उभयत्र समुद्रपुरुषयोर्वर्तत इति उभयवर्ती तस्य। समुद्रस्य भवतश्च वपुरेव भिन्नमन्याभूतं नान्यादित्येकेन वपुषा व्यतिरिच्यते मा (च्यमा) नत्वादेकव्यतिरेक उच्यते ॥ १८२ ॥

२. एकव्यतिरेकं दर्शयति—धैर्येति। एकव्यतिरेकं व्याचष्टे—इतीति ॥

३. उदाहरति—धैर्येति। प्रतीतिविषयप्राप्तेः प्रतीतेः विषयतया प्राप्तेः ज्ञातत्वात् इत्यर्थः। एकत्र पुरुषे वर्तिना वपुराख्येन धर्मेण व्यतिरेकतया स्वीकृतेन उभयवर्तिनो भेदस्य प्रतीतिप्राप्तेर्हेतोः एकव्यतिरेकोऽयम् ॥ १८१-२॥

**अभिन्नवेलौ गम्भीरावम्बुराशिर्भवानपि।**
**असावञ्जनसङ्काशस्त्वं तु चामीकरद्युतिः ॥ १८३ ॥**

**उभयव्यतिरेकोऽयमुभयोर्भेदकौ गुणौ।**
**कार्ष्ण्यं पिशङ्गता चाभौ यत् पृथग्दर्शिताविह ॥ १८४॥**

१. अभिन्नवेलावभिन्नमर्यादौ (अम्बु)राशिः समुद्रो भवानपीत्युभयोः सादृश्यमभिन्नवेलादिना। वाय(द्वयोः)व्यतिरेचकं धर्ममाह–असावञ्जनसङ्काशः समुद्रः कृष्णवर्णः त्वं तु त्वं पुनश्चामीकरच्छविः उत्तप्तकनकसमद्युतिरित्युभयव्यतिरेकोऽयं उभयोः समुद्रपुरुषयोर्भेदकौ विशेषकारिणौ गुणौ धर्मौ कार्ष्ण्यं कृष्णता पिशङ्गता गौरता च यद्यस्मात् पृथक् दर्शितौ यस्माद्भिन्नावुक्ताविह ॥ १८३-१८४ ॥

२. उभयव्यतिरेकं दर्शयति—अभिन्नेति। उभयव्यतिरेकं व्याचष्टे—उभयेति ॥ १८३-१८४ ॥

त्वं समुद्रश्च दुर्वारौ महासत्त्वौ सतेजसौ ।
अयं तु युवयोर्भेदः स जडात्मा पटुर्भवान् ॥ १८५ ॥

स एष श्लेषरूपत्वात् सश्लेष इति गृह्यताम् ।
साक्षेपश्च सहेतुश्च दर्श्यते तदपि द्वयम् ॥ १८६ ॥

१. त्वं समुद्रश्च दुर्वारो दुःखेन वार्यत इति दुर्वारः । तथा दुष्टं वाः उदकं क्षारं यस्य स दुर्वाः तौ दुर्वारोदः (रौ । दुः) पापार्थे वर्तते । महत् सत्त्वं यस्य सः महासत्त्वः तं (?) तथा महान्तः सत्त्वाः कम(कूर्मम) करमत्स्यादयो यत्र स महासत्त्वस्तौ । तथा सह तेजसा क्षात्रेण परैरनभिभवनीयेन वर्तत इति सतेज(ा)स्त्वं समुद्रोऽपि महातेजाः महत्तेजो बडवामुखप्रभवं यत्र तौ सतेजसौ । इत्थं समुद्रस्य भवतश्च दुर्वारादिभिर्धर्मैः साम्यमापाद्य व्यतिरेकमापादयति इयता युवयोर्भेदः स समुद्रः जलात्म (त्मा जल) स्वभावः पटुर्भवान् । स एष सश्लेष इति गृह्यताम् । कुतः श्लेषरूपत्वात् । श्लिष्टमिष्टमनेकार्थमिति वचनात् । साक्षेपश्च सहेतुश्च सहाक्षेपेण वर्तत इति साक्षेपः तथा सह हेतुना वर्तत इति सहेतुश्च निर्दिश्यते तदपि त्व(द्व)यम् ॥१८५-६॥

२. सश्लेषव्यतिरेकं दर्शयति—त्वमिति । दुर्वारः दुर्धर्षः ; महासत्त्वः महाव्यवसायः ? सतेजाः—परिभवासहत्वं तेजः उच्यते, तद्वान्—इति वर्णनीयपक्षे । दुर्वारः दुष्टजलप्रदः, दुष्टं वाः जलं राति इति, रा दाने इत्यस्मात् कप्रत्ययः ; महासत्त्वः ग्राहादिमान् ; सतेजाः वाडवसाहितः— इति समुद्रपक्षे । जलात्मा जलरूपः, जडस्वभावश्च । एषः उभयव्यतिरेकोऽपि सश्लेषः इति पूर्वस्मात् भेदः । पूर्वस्मात् अस्य भेदं व्याचष्टेस इति । व्यतिरेकान्तरे कथयति—साक्षेपश्चेति ॥ १८५-१८६ ॥

३. त्वमिति । श्लेषरूपेण साम्यं श्लेषरूपेण भेदश्च कथितः इति सश्लेष एषः । दुर्वारौ—एकत्र परैः वारयितुं अशक्यः, अन्यत्र कुत्सितसलिल-

समूहः। महासत्त्वौ—सत्त्वं क्वचित् बलमन्यत्र तिमिङ्गिलादि। सतेजसौ—तेजः दर्पः, अन्यत्र वाडवः। जडात्मा—सलिलात्मा, अन्यत्र भ्रान्तप्रकृतिश्च। साक्षेपश्चेति—साक्षेपव्यतिरेकश्च, सहेतुव्यतिरेकश्च। आक्षेपः प्रतिषेधोक्तिः, हेतुः कारणम्; ताभ्यां सह वर्तमानौ साक्षेपसहेतुकौ प्रदर्श्येते॥ १८५-१८६॥

१. तत्र साक्षेपमुदाहरति—

**स्थितिमानपि धीरोऽपि रत्नानामाकरोऽपि सन्।**
**तव कक्ष्यां न यात्येव मलिनो मकरालयः॥ १८७॥**

मकरालयो भवानिव स्थितिमत्वात् (दि?) गुणसम्पन्नः तव कक्ष्यां भवता साम्यं न यात्येवेति प्रतिषेधोक्तिराक्षेप इति साक्षेपः। प्रतिषेधश्च मलिनो मकरालयः त्वं पुनर्निर्मलः (इति)॥ १८७॥

१. साक्षेपो व्यतिरेको व्याख्यातः। सहेतुरुच्यते—

**वहन्नपि महीं कृत्स्नां सशैलद्वीपसागराम्।**
**भर्तृभावाद्भुजङ्गानां शेषस्त्वत्तो निकृष्यते॥ १८८॥**

महीमेवं वि(महीं भूमिं) शेषो नागराजो वहन् दधानोऽपि त्वत्तो निकृष्यते। कस्मात्। भुजङ्गानामुरगाणां भर्तृभावात्। बिभर्तीति भर्ता भर्तुर्भावो भर्तृभावः तस्मात् भर्तृभावात् भुजङ्गाधिपतित्वादिति हेतुः। तं (त्वं) पुनर्भुजङ्गानां न भर्तासि किं तु आर्याणाम्॥ १८८॥

२. तत्र साक्षेपव्यतिरेकं दर्शयति—**स्थितिमानपी**ति। सहेतुव्यतिरेकं दर्शयति—**वहन्नपी**ति॥ १८७-१८८॥

३. **स्थितिमानपी**ति—मलिनः समुद्रः त्वत्समो न भवतीति अयमाक्षेपसहितो व्यतिरेकः। **वहन्नि**ति—भुजङ्गः सर्पो धूर्तश्च; भुजङ्गानां भर्तृभावात् निकृष्यते शेष इति सहेतुरयं व्यतिरेकः॥ १८७-१८८॥

शब्दोपादानसादृश्यव्यतिरेकोऽयमीदृशः ।
प्रतीयमानसादृश्योऽप्यस्ति सोऽप्यभिधीयते ॥ १८९ ॥

१. इति शब्दोपादानसादृश्यव्यतिरेकोऽयमीदृशोऽनन्तरो व्याख्यातः । इदानीं प्रतीयमानसादृश्योऽप्यस्ति व्यतिरेकः सोऽनुविधीयते ॥ १८९ ॥

२. एवं शब्दोपात्तसादृश्यव्यतिरेको दर्शितः । प्रतीयमानसादृश्यं दर्शयाम इत्याह—शब्देति ॥ १८९ ॥

३. शब्देति । अत्र पूर्वार्धेन उक्ता व्यतिरेका शब्दोपात्तसादृश्ये भवन्ति इत्याह ; उत्तरार्धेन प्रतीयमानसादृश्येऽपि सन्तः प्रदर्श्यन्त इत्याह ॥ ॥ १८९ ॥

त्वन्मुखं कमलं चेति द्वयोरप्यनयोर्भिदा ।
कमलं जलसंरोहि त्वन्मुखं त्वदुपाश्रयम् ॥ १९० ॥

१. त्वन्मुखं कमलं चेति द्वयोरप्यनयोर्भिदा भेदः । अत्राननारविन्दयोर्न शब्दोपात्तं सादृश्यम् । किं तु प्रतीयमानं कान्तत्वमिति प्रतीति(ते) सादृश्ये वस्तुनोर्द्वयोर्भेदकथनं स (व्यतिरेकः) । व्यतिरेचकं धर्ममाह—कमलं जलसंरोहि जले संरोहति । न मुखं त (त्व) दीयं; किं तु त्वद(मु)पाश्रयो यस्य तत् त्वत्पदा (दुपा)श्रयं त्वदाधारम् ॥ १९० ॥

२. त्वदिति । अत्र फुल्लं सुरभिगन्धि चेति सदृशधर्मौ प्रतीयेते ॥ ॥ १९० ॥

अभ्रूविलासमस्पृष्टमदरागं मृगेक्षणम् ।
इदं तु नयनद्वन्द्वं तव तद्गुणभूषितम् ॥ १९१ ॥

१. अविद्यमानो भ्रूविलासो यस्य तद्भ्रू(दभ्रू)विलासं अस्पृष्टो मदरागो येन तदस्पृष्टमदरागं मृगेक्षणम् । इदं तु नयनद्वन्द्वं तव तद्गुणभूषितं भ्रूविलासमदरागभूषितमिति व्यतिरेकः ॥ १९१ ॥

२. अभ्रूविलासमिति । अप्रस्तुतमृगेक्षणे वर्णनीयनयने च दीर्घत्वं विशालत्वं चेति सदृशधर्मौ प्रतीयमानौ ॥ १९१ ॥

१. स्वयमेतत् द्वयमपि विभागीकृत्य(?)पौनरुक्त्यं परिहरन्व्या(न् व्या)चष्टे–

**पूर्वस्मिन् भेदमात्रोक्तिरस्मिन्नाधिक्यदर्शनम् ।**

पूर्वस्मिन् त्वन्मुखं कमलं चेति द्वयोरप्यनयोर्भिदेत्यत्र भेदमात्रोक्ति-र्मुखकमलयोर्भेदमात्रमुक्तम् 'कमलं जलसंरोहि त्वन्मुखं त्वदपाश्रयम्' इति । अनेन पुनराधिक्यं दर्शितम् । 'अभ्रूविलासमस्पृष्टमदरागं मृगे-क्षणं' इत्युक्त्वा 'इदं तु नयनद्वन्द्वं तव तद्गुणभूषितमि'त्यनेन मृगेक्षणा(त्) मुखस्य आधिक्यप्रदर्शनात् वैलक्षण्यम् ॥

**सदृशव्यतिरेकश्च पुनरन्यः प्रदर्श्यते ॥ १९२ ॥**

सदृशव्यतिरेकश्च सादृश्यं प्रदर्श्य द्वयोर्वस्तुनोस्ततो भेदकथनमिति सदृशयोर्व्यतिरेकः । स च पुनरन्यः पूर्वस्माद्भिन्नः प्रदर्श्यते ॥ १९२ ॥

२. पूर्वस्मिन्निति । व्यतिरेकान्तरं लक्षयति—सदृशेति । सदृश-योः पदार्थयोः प्रदर्श्यमानो व्यतिरेकः, परस्परसादृश्याभ्यां (?) धर्माभ्यां इत्यर्थः। ॥ १९२ ॥

३. पूर्वस्मिन्निति । सदृशवस्तुकथनेन भेदः प्रतिपादित इति सदृशव्यतिरेकः । सदृशव्यतिरेको द्विधा भवति । शब्दोपात्तसादृश्ययोः शब्दोपात्तवस्तुकथनेन प्रतिपादितः, प्रतीयमानसादृश्ययोः प्रतीयमानसा-दृश्यवस्तुकथनेन प्रतिपादितश्च । सदृशव्यतिरेकस्य द्वैविध्यमेतत् प्रती-यमानेत्यादिना श्लोकेन पूर्वत्रेत्यादिना च प्रतिपादयिष्यति ॥ १९२ ॥

**त्वन्मुखं पुण्डरीकं च फुल्ले सुरभिगन्धिनी ।**

१. त्वन्मुखं पुण्डरीकं च अप्येते (उभे एते) फुल्ले विकसिते तथा सुर-भिगन्धिनी (इति) मुखकमलयोः फुल्लत्वादिना सादृश्यम् ।

व्यतिरेकमाह—

**भ्रमद्भ्रमरमम्भोजं लोलनेत्रं मुखं तु ते ॥ १९३ ॥**

सुगमम् ॥ १९३ ॥

२. त्वदिति । अत्र फुल्ले सुरभिगन्धिनी इति अभिधीयमानसादृश्ययोः मुखपुण्डरीकयोः भ्रमदिति लोलेति च अभिधीयमानसादृश्याभ्यां भ्रमरदृष्टिभ्यां व्यतिरेकः ; इति अभिधीयमानसादृश्यव्यतिरेकः ॥ १९३ ॥

३. अनयोरुदाहरणमाह—त्वदिति । सुरभिगन्धित्वविकसितत्वे समानधर्मौ मुखसरसिजयोरुक्तौ । पुनः तयोरेव लोलेन लोचनेन भ्रमता च भ्रमरेण परस्परसदृशेन भेद उक्तः । इति अभिधीयमानसादृश्यः सदृशव्यतिरेकः ॥ १९३ ॥

**चन्द्रोऽयमम्बरोत्तंसो हंसोऽयं तोयभूषणम् ।**
**नभो नक्षत्रमालीदमुत्फुल्लकु(मिदमुत्कु)मुदं पयः ॥ १९४ ॥**

१. चन्द्रोयमम्बरस्योत्तंस इवोत्तंसः । शिरोमण्डनकुसुममुत्तंस उच्यते । हंसोऽयं तोयस्य भूषणं आभरणम् । नभो नक्षत्रमालास्व(स्या) स्तीति नक्षत्रमाली(लि)प्रीत्या(व्रीह्या) दिषु पाठादिनिः । इदमुत्कुमुदं उद्गतकुमुदं पयः ॥

२. प्रतीयमानसादृश्यं व्यतिरेकं दर्शयति—चन्द्र इति ।

३. चन्द्र इति । प्रतीयमानसाम्यौ चन्द्रहंसौ भेदकौ इति सदृशव्यतिरेकः द्वितीयः । नभो नक्षत्रमालीति सदृशव्यतिरेकस्य प्रतीयमानसादृश्याश्रितस्य द्वितीयम् उदाहरणम् । अत्र उदाहरणद्वयं प्रदर्शयतः ईदृशम् अन्यदपि ऊह्यम् इत्यभिप्रायः ॥ १९४ ॥

१. स्वयं व्याचष्टे—

**प्रतीयमानसौक्ष्म्यादिसाम्ययोर्वियदम्भसोः ।**
**कृतः प्रतीतशुद्ध्योश्च भेदोऽस्मिन् चन्द्रहंसयोः ॥ १९५ ॥**

पूर्वत्र शब्दवत्साम्यमुभयत्रापि भेदकम्।
भृङ्गनेत्रादि तुल्यं तत् सदृशव्यतिरेकता ॥ १९६ ॥

प्रतीयमानसौक्ष्म्यादिसाम्ययोर्वियदम्भसोः भेदः कृतः परस्परवैलक्षण्यं कृतम्, तथा प्रतीतशुद्ध्योश्च चन्द्रहंसयोरस्मिन् भेदः कृत इति। प्रतीयमानं शब्देनानुपात्तं सौक्ष्म्यादिना साम्यं समता ययोस्ते प्रतीयमानसौक्ष्म्यादि-साम्ये वियदम्भसी तयोरस्मिन् भेदः नभसस्तावको याव(स्तावत्तोया)द्व्यतिरेको नक्षत्रमालीत्यनेन शब्देन, पयसश्च हस्तो (नभसो)व्यतिरेकः उत्कुमुदमित्य-नेन चन्द्रोयमम्बरोत्तंस इत्यनेन हंसाच्चन्द्रस्य व्यतिरेकः। 'हंसोऽयं तोय-भूषण'मित्यनेन हंसस्य चन्द्राद्व्यतिरेक इति। कथंभूतयोः। प्रतीता शब्देनानु-पात्ता शुद्धिर्धावल्यं ययोरिति।

'त्वन्मुखं पुण्डरीकं च' इत्यादौ शब्दवत् साम्यम् 'फुल्ले सुरभि-गन्धिनी' इत्युभयोरुपादानात् सादृश्यमुक्तं तस्योभयत्र भेदकं भृङ्गनेत्रादि भ्रमद्भ्रमरमम्भोजमिति तथा लोलदृष्टिमुखं तवेति 'तुल्यं तच्च भृङ्गनेत्राद्य-न्योन्यसदृशमिति। तस्मात् सदृशव्यतिरेकता (इति 'स)दृशव्यतिरेकश्च पुनर-न्यः प्रदर्श्यते' इति यदुक्तं तदुपसंहृतम् ॥ १९५-६ ॥

२. पूर्वार्धे चन्द्रहंसयोः प्रतीतशुद्ध्योः उत्तरार्धे प्रतीयमानसौक्ष्म्यादि-साम्यधर्मयोः वियदम्भसोश्च, वियदम्भोभ्यां नक्षत्रकुमुदाभ्यां च प्रतीय-मानसादृश्याभ्यां, व्यतिरेकः कृतः ॥ १९६ ॥

३. व्याकृतमर्थं अनेन प्रतिपादयति प्रतीयमानेत्ति। पूर्वं निर्दि-ष्टेन चन्द्रोऽयमिति श्लोकेन प्रतीयमानसौक्ष्म्यादिसाम्ययोः नभस्सलिलयोः भेदः प्रतीयमानवैमल्यौ चन्द्रहंसौ अधिकृत्य दर्शितः। पूर्वत्र—शब्दो-पात्तसादृश्ये; इति शब्दवत्साम्यम्। त्वन्मुखमित्यादौ उभयत्रापि— मुखे पुण्डरीके च—फुल्लत्वसुरभिगन्धित्वे साधारणे, भेदके तु भृङ्गनेत्रे, तद्धर्मौ

भ्रमणलौल्ये तुल्ये, इत्याह–भेदकं भृङ्गेति । आदिशब्देन भ्रमणलौल्ये गृह्यते । उपसंहरति– तत् सदृशव्यतिरेकता इति ॥ १९५-१९६ ॥

१. तदेवं भिन्नजातीनां व्यतिरेकमभिधाय स्व(स)जातिव्यतिरेकमुदाहरति

**अरत्नालोकसंहार्यमहार्यं सूर्यरश्मिभिः ।**
**दृष्टिरोधकरं यूनां यौवनप्रभवं तमः ॥ १९७ ॥**

रत्नानां वैर(?)वैडूर्यवज्रपद्मरागादीनामालोकः प्रभा रत्नालोकः तेन संह्रियत इति रत्नालोकसंहार्यम् । अरत्ना(रत्ना)लोकसंहार्यं न, रत्नादि-(त्नदीधि) त्यापनेतुमशक्यं तथाऽहार्यं आह(ह)र्तुमशक्यं सूर्यरश्मिभिः दृष्टि-रोधकरं रो(लो)चनान्ध्यकरणशीलं यूनां यौवनमदोद्धतानां यौवनात्प्रभवति यौवनप्रभवं तमो रागविशेषः ॥ १९७ ॥

१. स्वयं व्याचष्टे–

**सजातिव्यतिरेकोऽयं तमोजातेरिदं तमः ।**
**दृष्टिरोधितया तुल्यं भिन्नमन्यैरदर्शि यत् ॥ १९८ ॥**

स्व(स)जातिव्यतिरेकोऽयं तमोजातेरिदं यौवनप्रभवं रागाख्यं तमः दृष्टिरोधितया तुल्यं दर्शनवा(व्या)घातकहे(त्वे)न समं भिन्नमन्यैः रत्नालोक-संहार्यं सूर्यरश्मिभिश्च हार्यंनपरं तमः नेदमिति अन्यैः तमोधर्मैर्भिन्नमदर्श(र्शि) यत् । ॥ १९८ ॥

२. सजातिव्यतिरेकं दर्शयति—अरत्नेति । यूनां तमः अज्ञानरूपं दृष्टिरोधकरं यौवनप्रभवत्वारत्नालोकसंहार्यत्वसूर्यरश्म्यहार्यत्वैः बाह्यतमोजातेः भिन्नम् इति सजातीयव्यतिरेकः ॥ १९७-१९८ ॥

३. अरत्नेति । दृष्टिरोधितया तमोजातितुल्यस्य यौवनप्रभवस्य तमसः रत्नालोकसंहार्यत्वाद्यभावात् भेदः प्रतिपादित इति सजातिव्यतिरेकः । ॥ १९७-१९८ ॥

इति व्यतिरेकचक्रम् ।

१. विभावनामाह—

**प्रसिद्धहेतुव्यावृत्त्या यत्किञ्चित्कारणान्तरम् ।**
**यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना ॥ १९९ ॥**

यो यत्कार्यकरणे प्रसिद्धो हेतुः तस्य व्यावृत्त्या अभावेन यत्किञ्चित् अन्यत्कारणान्तरं यत्र कार्ये विभाव्यते निर्धार्यते सा विभावनोच्यते । तथा स्वाभाविकत्वं वा नैसर्गिकत्वं वा यत्र विभाव्यं सा च विभावना ॥ १९९ ॥

२. विभावनां लक्षयति—**प्रसिद्धेति** ॥ १९९ ॥

३. विभावनालङ्कारमाह—**प्रसिद्धेति** । प्रसिद्धस्य , जनकतया प्रसिद्धस्य वा व्यापकभूतस्य वा , हेतोर्निवर्तनेऽपि , तत्कार्यस्य यत्र यत्किञ्चित् कारणान्तरं विभाव्यते—सा एका विभावना । यत्र च प्रसिद्धहेतोः व्यावृत्त्या तत्कार्यस्य स्वाभाविकत्वं विभाव्यते—सा चैका विभावना । सा चतुर्धा-कालकृता , नियतद्रव्यकृता , अनियतद्रव्यकृता , नियतानियतद्रव्यकृता चेति ॥ १९९ ॥

१. तामुदाहरणे स्पष्टयति—

**अपीतक्षीबकादम्बमसम्मृष्टामलाम्बरम् ।**
**अप्रसादितशुद्धाम्बु जगदासीन्मनोहरम् ॥ २०० ॥**

**अनञ्जितासिता दृष्टिर्भ्रूरनावर्जिता नता ।**
**अरञ्जितोऽरुणश्चायमधरस्तव सुन्दरि ॥ २०१ ॥**

पानं पीतं नपुंसकभावे क्तः । न विद्यते पीतं येषां ते अपीताः । अथ वा पीतं पानं तदस्ति येषां ते पीताः अर्शआदिषु पाठात् अच् । न पीता अपीताः क्षीबा मत्ताः कादम्बा हंसा यत्र तदपीतक्षीबकादम्बम् । असंमृष्टामलाम्बरं अ(न)संमृज्यते .... ....(स)तथाप्यमलमम्बरमाकाशं यत्र न प्रसादिकं(तं) कतकफलादिना प्रसादनीयेन द्रव्येणाप्रसादितं तथाऽपि सूक्ष्मं स्वच्छं (अ)पङ्कमम्बु यत्र तदप्रसादितसूक्ष्माम्बु ।

क्षीबत्वे हेतुः प्रसिद्धः सुरापानं अमलत्वे हेतुः सम्मार्जनमम्बुनः स्वच्छत्वे प्रसादकद्रव्यं हेतुः । स च अपीतादिपदैर्व्यावर्तितः क्षीबत्वादिकार्यं चान्यक(ा)रणपूर्वमुक्तं यतो जगदासीन्मनोहरम् । अत्र च जगतो मनोहरत्वे कारणान्तरं शरत्समयः । स इह विभाव्यत इति विभावना ॥ २०० ॥

अनञ्जिताऽपि (?)कज्जलेन तथाऽपि (प्य) सित(ाऽ) धावल्याऽक्षिगोलको(के) दृष्टिर्नयनयुगलम् । भ्रूरनावर्जिताप्युभयकोट्योरनम्रीकृताप्यनमता(प्यानता) । मध्ये उन्नता कोट्योर्नता । तथाऽरञ्जितोरुणश्चायमधरः (?) अरञ्जितोऽलक्तकादिना पाटलद्रव्येण तथाऽप्यरुणो लोहितः मधुर(अधर)स्तव सुन्दरि । अत्र दृष्टेस्सि(रसि)तत्वे प्रसिद्धो हेतुरञ्जनं तदभावप्रदर्शना (द्) विभावना । एवमितरत्र योज्यम् ॥ २०१ ॥

२. विभावनामुदाहरति—अपीतेति द्वयेन ।

३. कालकृतस्य उदाहरणमाह—अपीतेति । अत्र कादम्बाद्याश्रितस्य क्षीबत्वादेः प्रसिद्धहेतुः पीतत्वादिर्व्यावर्त्यते ; हेत्वन्तरञ्च शरत्प्रभावः विभाव्यते । इत्यसौ कालकृता कारणान्तरविभावना । अनञ्जितेति—अत्र दृष्ट्याद्याश्रयस्य असितत्वादेः अञ्जितत्वादिः प्रसिद्धो हेतुः व्यावर्तितः; स्वभावसिद्धं च असितत्वादि दृष्ट्यादेः विभाव्येत । इति स्वाभाविकविभावना ॥ २००-२०१ ॥

१. स्वयमेतद्व्याचष्टे—

> यदपीतादिजन्यं स्यात् क्षीबत्वाद्यन्यहेतुजम् ।
> अहेतुकं च तस्येह विवक्षेत्यविरुद्धता ॥ २०२ ॥

यत्र क्षीबत्वादि स्यात् भवेत् कथंभूतं (तम् । अ) पीतादिजन्म न विद्यते पीतादिभ्यो मधुपानादिभ्यो जन्म प्रादुर्भावो यस्य तदपीतादिजन्म। किंत्वन्यहेतुजं अन्य(ः) प्रसिद्धाद्धेतोर्हेतुरन्यहेतु(स्तस्मा जायत इत्यन्य) हेतु जं

अविद्यमानो हेतुरस्येत्यन्य(त्य)हेतुकं तस्योभयस्यान्यहेतु(जस्याहेतु)कस्य च विप(व)क्षेभ्य (त्यविरुद्धता) विरोधाभावः ॥ २०२ ॥

२. यदिति। क्षीबत्वादिहेतोः असितत्वादिहेतोश्च इयान् भेदः— पीतादिकारणरहितं क्षीबत्वादि शरत्प्रभावजम्; अञ्जितत्वादिकारणरहितम् असितत्वादि कारणान्तररहितम्; अत एव अहेतुजं स्वाभाविकं च। यत् यस्मात्, तस्य कारणान्तरस्य स्वाभाविकत्वस्य च विवक्षा, इति न विरोधः ॥ २०२ ॥

३. व्याख्यातार्थमाह—यदिति। इमे शुद्धे ॥ २०२ ॥

**वक्त्रं निसर्गसुरभि वपुरव्याजसुन्दरम्।**
**अकारणरिपुश्चन्द्रो निर्निमित्तसुहृत्स्मरः ॥ २०३ ॥**

**निसर्गादिपदैरत्र हेतुः साक्षान्निवर्तितः।**
**उक्तं च सुरभित्वादिफलं तत् सा विभावना ॥ २०४ ॥**

१. जातीमुखा (?) दिमुखवासरहितमपि मुखं निसर्गेण स्वभावेनैव सुरभि। वपुराभरणादिना व्याजेन विनाऽपि रम्यम्। चन्द्रो दयितजनवियोगव्यथापीडना(डिता)नां सञ्जातमनोज्ञवस्तु(स्त्व) रोचकानामनिमित्तवैरि(री)। निर्निमित्त उपकारनिरपेक्षस्सुहृन्मित्रम् ॥ २०३ ॥

निसर्गादिपदैरत्र हेतुः साक्षान्निवर्तितः। हेत्वभावे फलं कार्यं सुरभित्वाद्युक्तमतो विभावनेत्युपसंहृतम् ॥ २०४ ॥

२. वक्त्रमिति। तस्याः वक्त्रं निसर्गसुरभि स्वभावसुरभि; वपुः अव्याजसुन्दरं स्वभावरमणीयम्; अपि च चन्द्रः अकारणरिपुः विरोधाभावेऽपि रिपुः भवति; स्मरः निर्निमित्तसुहृच्च भवति। अत्र अपीतत्वादिवत् अनञ्जितत्वादिवत् च प्रसिद्धहेतुः न व्यावर्तितः। कथं तर्हि विभावनात्वम् इति चेत्, तत्राह—निसर्गादिपदैरिति। साक्षात् हेतुः प्रसिद्ध-

हेतुः कर्पूरभक्षणादिः व्यावर्त्यत इति विभावनैव इयम्। अत्र पूर्वार्धे स्वाभाविकविभावने। उत्तरार्धे कारणान्तरे विरहः समागमश्च ॥ २०३-४ ॥

३. मिश्रमाह—वक्त्रमिति। अत्र उत्तरयोः विरहसमागमादिकारणान्तरविभावनयोः स्वाभाविकीभ्यां प्राग्विभावनाभ्यां अयथासंख्येन तद्भेदो विशेष उक्तः। सेयं विभावनयैव विभावनायाः उपकृतत्वात् मिश्रा भवति ॥ २०४ ॥

**इति विभावनाचक्रम्।**

---

१. समासोक्तिलक्षणमाह—

**वस्तु किञ्चिदभिप्रेत्य तत्तुल्यस्यान्यवस्तुनः।**
**उक्तिः संक्षिप्तरूपत्वात् सा समासोक्तिरिष्यते ॥ २०५ ॥**

वस्तु किञ्चिदनिष्टनामधेयं चेतनमचेतनं वाऽभिप्रेत्य मनसि निधाय तत्तुल्यस्याभिप्रेतवस्तुसदृशस्य वस्तुनो यदभिधानमुक्तिः सा समासोक्तिरिष्यते। कुतः पुनरेवंविधोक्ति (ः समा) सोक्तिसंज्ञां लभत इत्याह—संक्षिप्तरूपत्वात् संक्षिप्तं रूपं यस्याः सा संक्षिप्तरूपा तद्भावात् ॥ २०५ ॥

२. समासोक्तिं लक्षयति—**वस्त्विति**। कञ्चिदर्थं हृदये निधाय तत्तुल्यस्य अन्यस्य वस्तुनः कथनं समासोक्तिः। निर्वचनं करोति—**संक्षिप्तरूपत्वादिति**। उभयार्थद्योतकत्वात् इत्यर्थः ॥ २०५ ॥

३. समासालङ्कारमाह—**वस्त्विति** ॥ २०५ ॥

१. तदुदाहरणैः स्पष्टयति—

**पिबन्मधु यथाकामं भ्रमरः फुल्लपङ्कजे।**
**अप्यसन्नद्धसौरभ्यं पश्य चुम्बति कुड्मलम् ॥ २०६ ॥**

**इति प्रौढाङ्गनाबद्धरतिलीलस्य रागिणः।**
**कस्यांचिदपि बालायामिच्छावृत्तिर्विभाव्यते ॥ २०७ ॥**

सुगमम् ॥ २०६-७ ॥

२. समासोक्तिः तुल्यसंविधाना, तुल्यविशेषणा, तुल्यातुल्यविशेषणा चेति त्रिविधा । तत्र तुल्यसंविधानाम् उदाहरति— पिबन्निति । एतद्व्याचष्टे—इतीति ॥ २०६-२०७ ॥

**विशेष्यमात्रभिन्नापि तुल्याकारविशेषणा ।**
**अस्त्यसावपराप्यस्ति भिन्नाभिन्नविशेषणा ॥ २०८ ॥**

१. विशेष्यमात्रभिन्ना विशेष्यमेव केवलं भिन्नं यस्याः सा विशेष्यमात्रभिन्ना । तुल्याकाराणि विशेषणानि यस्यास्सा तुल्याकारविशेषणा सा तावदेव(का) समासोक्तिरस्ति । तथाऽपराप्यस्ति । भिन्नानि च विसदृशानि अभिन्नानि चोभयसाधारणानि विशेषणानि यस्यास्सा वि(?)भिन्नाभिन्नविशेषणा ॥ २०८ ॥

२. अपरे विभजन्ते—विशेष्येति ॥ २०८ ॥

३. समासालङ्कारस्य भेदं दर्शयति—विशेष्येति ॥ २०८ ॥

१. एवं द्विप्रकारां तां यथाक्रममुदाहरति—

**रूढमूलः फलभरैः पुष्णन्ननिशमर्थिनः ।**
**सान्द्रच्छायो महावृक्षः सोऽयमासादितो मया ॥ २०९ ॥**

**अनल्पविटपाभोगः फलपुष्पसमृद्धिमान् ।**
**सुच्छायः स्थैर्यवान् दैवादेष लब्धो मया द्रुमः ॥ २१० ॥**

**उभयत्र पुमान् कश्चिद्वृक्षत्वेनोपवर्णितः ।**
**सर्वे साधारणा धर्माः पूर्वत्रान्यत्र तु द्वयम् ॥ २११ ॥**

रूढं मूलं यस्य सः रूढमूलः पुरुषश्च कोऽप्यभिप्रेतोऽभिधातुं(तुः ?) यः स रूढमूलः रूढं मन्त्रिपुरोहितादि मूलं बलं यस्य फलभरैः पुष्णन्ननिशमर्थिनः । वृक्षस्य फलानि प्रतीतानि । पुरुषश्च फलभरैः समीहितार्थसिद्धिभिरर्थिनो

याच्छावतः पुष्णन् । सान्द्रा छाया यस्य स सान्द्रच्छायो बहुलच्छायः। कान्तिमान् छाया कान्तिरुच्यते । लावण्यमित्यपरे । महावृक्षस्सोऽयमासादितो मया लब्ध इत्याद्या । अनल्पो विटपानामाभोगो यस्यानल्पशाखाटोपः। फलपुष्पस(मृद्धिमान्) सुच्छायः स्थैर्यवान् स्थावरत्वादेव स्थैर्यवशात् अचप(च)लः वृक्ष एव(ष) मयादै(मया दै)वात् पुण्यादासादित इति द्वितीय (या) ॥ २०९-१० ॥

१. उभयत्रोभय्यां उभयत्र त्रतसाविति पुंवद् भावात् स्त्रीप्रत्ययनिवृत्तिः । पुमान् कश्चित् वृक्षत्वेनोपवर्णितः । सर्वे साधारणा धर्मा रूढमूल(: फल)भैरित्यादयो वृक्षस्य पुरुषस्य चेति। विशेष्यमात्रं भिन्नं एकत्र पुमानन्यत्र वृक्षः। अन्यत्र(उभयत्र)विशेषणानीति तुल्याकारविशेषणा। अन्यत्र तु द्वितीयस्यां द्वयमेव द्वितीया(तुल्या)कारं सुच्छायःस्थैर्यवानिति (न) सर्वाण्यनल्पविटपादि(?)भोगप्रभृतीनीति भिन्नाभिन्नविशेषणा ॥ २११ ॥

२. तुल्यविशेषणामुदाहरति— रूढमूल इति । रूढमूलः क्षेत्रादिमान्; फलभरैः अभीप्सितैः अर्थैः; सान्द्रच्छायः विशालनिवासः ; एवं महापुरुषः अभिप्रेतः । वृक्षविशेषणानि हि प्रकटानि। तुल्यातुल्यविशेषणामुदाहरति—अनल्पेति । अनल्पविटपाभोगः इत्यनेन पुत्रादिसम्पत्तिः द्योतिता ; फलपुष्पसमृद्धिमानिति अर्थायतिः द्योतिता ; न तु अभिहिता। सुच्छायः स्थैर्यवान् इति द्वयम् उभयविशेषणम् । पूर्वश्लोकौ व्याचष्टे—उभयत्रेति ॥ २११ ॥

३. उदाहरणे—रूढेति अनल्पेति च । सुच्छायः स्थैर्यवान् इति धर्मद्वयस्यैव साधारण्यम् ॥ २११ ॥

निवृत्तव्यालसंसर्गो निसर्गमधुराशयः।
अयमम्भोनिधिः कष्टं कालेन परिशुष्यति ॥ २१२ ॥

**इत्यपूर्वसमासोक्तिः पूर्वधर्मनिवर्तनात्।**
**समुद्रेण समानस्य पुंसो व्यापत्तिसूचनात् ॥ २१३॥**

१. निवृत्तो व्यालदुर्जनैः संसर्गो यस्य तथा व्यालैः क्रूरनक्रैः निसर्गेण मधुर आशयो मनः पुंसः समुद्रस्य चाशयो जलं यस्यासौ निसर्गमधुराशयः अयं इत्थंभूतोऽ(म्भो)निधिः कष्टं कालेन परिशोष(व्य)ते इत्यपूर्वसमासोक्तिरियमुच्यते । कुतः पूर्वधर्मनिवर्तनात् पूर्वधर्मावम्भोनिधेर्व्यालसंसर्गः तथा क्षाराशयत्वं तयोर्निवर्तनात् निवृत्तव्यालसंसर्गो निसर्गमधुराशय इति वचनात् समुद्रेणेत्थंभूतेन समानस्य पुंसा व्यावृत्तिः (पत्तेः)सूचना(द्) भावाभिधानात ॥ २१२-१३ ॥

२. निवृत्तेति । निवृत्तव्यालसंसर्गः दुर्जनसम्बन्धराहितः । पूर्वं व्याचष्ट—इत्यपूर्वेति ॥ २१२-१३ ॥

३. निवृत्तेति । आशेरते अस्मिन् मत्स्यादय इति आशयः जलम् । समुद्रस्य व्यालसंसर्गः भुजङ्गसंसर्गः लवणाशयत्वं च प्रसिद्धो धर्मः । तस्य तौ नित्यौ व्यालसंसर्गराहित्यं मधुराशयत्वं च धर्मौ आरोप्य, तत्समानस्य पुंसो विपत्तिसूचनात्, इयम् अपूर्वसमासोक्तिः ॥ २१२-१३ ॥

**इति समासोक्तिचक्रम् ।**

---

१. अतिशयोक्तिलक्षणमाह—

**विवक्षा या विशेषस्य लोकसीमातिवर्तिनी ।**
**असावतिशयोक्तिः स्यादलङ्कारोत्तमा यथा ॥ २१४ ॥**

लोकसीमातिवर्तिविशेषो यत्र (वि)वक्ष्यते साऽतिशयोक्तिरलङ्कारेषु स्वभावाख्यानादिषूत्तमा । यथेत्यादिना तामुदाहरति ॥ २१४ ॥

२. अतिशयोक्तिं लक्षयति—विवक्षेति । कस्यचित् पदार्थस्य गुणप्रकर्षविवक्षा लोकातिशायिनी अतिशयोक्तिः ॥ २१४ ॥

३. अतिशयालङ्कारमाह—विवक्षेति । लावण्यादेः विशेषस्य लोकसीमातिलङ्घिनीं विवक्षाम् अतिशयोक्तिं विदुः ॥ २१४ ॥

**मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः ।**
**क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥ २१५ ॥**

१. मल्लिकानां माला स्रक् तां बिभ्रतीति मल्लिकामालभारिण्यः 'इष्टकेषीकामालानां चिततूलभारिषु' इति ह्रस्वत्वम् । सर्वाङ्गीणमार्द्रं चन्दनं यासां ताः सर्वाङ्गीणार्द्रचन्दनाः । क्षौमं शुक्लं श्लक्ष्णं वस्त्रं यासामस्ति ताः क्षौमवत्यः न लक्ष्यन्ते ज्योत्स्नायां अभिसारिकाः पुंश्चल्यः ॥ २१५ ॥

२. **मल्लिकेति** । मालभारिण्यः इत्यत्र 'इष्टकेषीकामालानां चिततूलभारिषु' इति मालाशब्दस्य ह्रस्वः । अतिशयोक्तयः स्पष्टाः ॥ २१५ ॥

३. उदाहरति **मल्लिकेति** ॥ २१५ ॥

१. कथमियमतिशयोक्तिरिति स्वयमाह—

**चन्द्रातपस्य बाहुल्यमुक्तमुत्कर्षवत्तया(था) ।**
**संशयातिशयादीनां व्यक्त्यै किञ्चिन्निदर्श्यते ॥ २१६ ॥**

चन्द्रातपस्य चन्द्रतेजसो बाहुल्यं बहुलत्वं उक्तमुत्कर्षवत् । तथा सशंयातिशयादीनां रूपं संशयातिशयोक्तिनिर्णयातिशया(योक्त्या)दीनां रूपं व्यक्त्यै निर्दिश्य(दर्श्य)ते उदाह्रियते ॥ २१६ ॥

१. तत्र संशयातिशयोक्तिं तावदुदाहरति—

**स्तनयोर्जघनस्यापि मध्ये मध्यं प्रिये तव ।**
**अस्ति नास्तीति सन्देहो न मेऽद्यापि निवर्तते ॥ २१७ ॥**

स्तनयोर्जघनस्यापि मध्ये उभयस्यान्तराले मध्यं हे नितम्बिनि किमस्त्युत नास्तीति सन्देहो न मेऽद्यापि निवर्तत इत्येषा संशयोक्तिः । मध्यस्य कृशत्वातिशयव्यावर्त(र्ण)नात् ॥ २१७ ॥

३. **स्तनयोरिति** । अस्ति नास्तीति सन्देहास्पदत्वकथनेन प्रियायाः मध्यतानवस्य लोकसीमातिलङ्घित्वं विवक्षितम् । इति सन्देहमुखेन अतिशयकथनात् अयं संशयातिशयः ॥ २१७ ॥

१. निर्णयातिशयोक्तिमुदाहरति—

**निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि।**

कुतः पुनस्तयोर्जघनस्यापि मध्ये मध्यमस्तीति निर्णेतुं शक्यमित्यर्थापत्तिं प्रमाणमुपन्यस्यति—

**अन्यथा नोपपद्येत पयोधरभरस्थितिः॥ २१८॥**

यदि स्तनयोर्जघनस्य चान्तराले मध्यं न स्यात्तदा पयोधरभरस्यावस्थानमेव न स्यादित्यर्थापत्तेः प्रमाण (णात्) मध्यास्तित्व(निर्णयात्) निर्णयातिशयोक्तिः॥ २१८॥

२. निर्णेतुमिति। वर्णनीयजघनादूर्ध्वं मध्यं नाम किञ्चिदस्तीति पयोधरस्थितिमूलया अर्थापत्त्या निर्णीयत इति लोकसीमातिगस्य मध्यतानवस्य विवक्षितस्य निर्णयमुखेन अभिधानात् अयं निर्णयातिशयः॥ २१८॥

**अहो विशालं भूपाल भुवनत्रितयोदरम्।**
**माति मातुमशक्योऽपि यशोराशिर्यदत्र ते॥ २१९॥**

१. अहो विशालमित्यादिका विस्मयातिशयोक्तिः यशोराशेर्मह(त्त्व) ख्या(ख्या) पनात्॥ २१९॥

२. अहो इति। अत्र यशोराशेः अशक्यमानस्य अतिशयोक्त्या विशेषविवक्षया, तेन भुवनं आकीर्णमिति आशङ्क्यते। सोऽयं महत्त्वातिशय उच्यते॥ २१९॥

**अलङ्कारान्तराणामप्येकमाहुः परायणम्।**
**वागीशमहितामुक्तिमिमामतिशयाह्वयाम्॥ २२०॥**

१. अलङ्कारान्तराणामपि स्वभावाख्यानादीनामाहुरेकं परायणं वागीशेन महितामुक्तिमिमामतिशयाह्वयाम्। अतिशयोक्तियुक्त एव शोभां लभत इत्यतिशयोक्तिं सर्वोऽप्यलङ्कारोऽनुवर्तत इत्यर्थः॥ २२०॥

३. अलङ्कारेति। अलङ्कारान्तराणामपि एष उपकारी भवति। अतिशयजननत्वं (?) विना भूषणता न स्यादित्यभिप्रायः॥ २२०॥

इत्यतिशयोक्तिचक्रम्।

---

१. उत्प्रेक्षालक्षणमाह—

**अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा।**
**अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्यथा॥ २२१॥**

अन्येनैव प्रकारेणान्यथा (ण स्थिता) वृत्तिर्वर्तनं प्रवृत्तिः स्वभावो वा चेतनस्य आत्माधिष्ठितस्य बुद्ध्याद्याचा(धा)रस्याचेतनस्य वा तद्विपरीतस्य वस्तुनः अन्येनैव प्रकारेणान्यथा (स्थिता) यत्रोत्प्रेक्ष्यते विकल्प्यते तमुत्प्रेक्षालङ्कारं प्रचक्षते। यथेत्यादिना तमुदाहरति॥ २२१॥

२. उत्प्रेक्षां लक्षयति—अन्यथैवेति। चेतनस्य अचेतनस्य वा प्रकारान्तरेण जाता वृत्तिः प्रकारान्तरेण यत्कविना कथ्यते सा उत्प्रेक्षा॥

३. उत्प्रेक्षालङ्कारमाह—अन्यथैवेति। इतरस्य अचेतनस्य; अन्यथा पूर्वावस्थावैपरीत्येन। स्वप्रतिभासो यत्र वस्तुनि स्वाभाविकत्वेन आरोप्यते सा उत्प्रेक्षा॥ २२१॥

**मध्यन्दिनार्कसन्तप्तः सरसीं गाहते गजः।**

१. मध्याह्नसमयवर्तिभास्करस्तेन(रतेजः)सन्तप्त(प्तो) गजः सरसीं गाहत इति स्थिता वृत्तिः। तां वृत्तिमन्यथा कश्चित् कविरुत्प्रेक्षते—

**मन्ये मार्ताण्डगृह्याणि पद्मान्युद्धर्तुमुद्यतः॥ २२२॥**

मन्ये मार्ताण्डगृह्याणि रविपक्षपात(भाञ्जि)पद्मान्युद्धर्तुमुन्मूलयितुमुत्सुको गज इति। येनादित्येन अहं तापितः तस्योदये यानि विकसन्ति तदस्तमये च निमीलन्ति तानि तावदुन्मीलया(न्मूलया)मीति—निरसितुमिच्छोर्ये तदीया-

श्रयेण श्रियमधिगतवन्तः तेऽपि हन्तव्यपक्षे— इत्यहं मन्ये ॥ २२२ ॥

१. स्वयं व्याचष्टे—

**स्नातुं पातुं बिसान्यत्तुं करिणो जलगाहनम्।**
**तद्वैरनिष्क्रयायेति कविनोत्प्रेक्ष्य वर्ण्यते ॥ २२३ ॥**

गजः सरसीं गाहते स्नातुं पातुं पयः बिसानि पद्मदलाङ्कुरा(णि) अत्तुं नान्यथेति। कविना पुनरियं गजस्य स्थिता वृत्तिः अन्यथोत्प्रेक्ष्यते। तद्वैरनिष्क्रियाय तेन तापकारिणा सह यद्वैरं दो(द्वे)षस्तं नि(स्तन्नि)ष्क्रयायेयुत्प्रेक्षणादुत्प्रेक्षा ॥ २२३ ॥

२. मध्यन्दिनेत्यादिना उत्प्रेक्षितविषयस्य उत्प्रेक्षात्वं दर्शयति—**स्नातुमिति** ॥ २२२-३ ॥

३. उदाहरणमाह—**मध्यन्दिनेति**। पूर्वस्य व्याख्या उत्तरः श्लोकः। इदं चेतनोदाहरणम् ॥ २२२-२२३ ॥

१. इति चेतनस्य गजस्यान्यथा स्थितां वृत्तिमन्यथोदाहृत्याचेतनस्योदाहरति—

**कर्णस्य भूषणमिदं ममायतिनिरोधिनः।**
**इति कर्णोत्पलं प्रायस्तव दृष्ट्या विलंघ्यते ॥ २२४ ॥**

कर्णस्य भूषणमिदं नीलोत्पलमवतंसीकृतम्। कथंभूतस्येत्याह— मदायतिविरोधिनः ममायतिरायामो दैर्घ्यं आज्ञा च मदायतिस्तां निरुणद्धीत्येवंशीलं मदायतिनिरोधि तस्य। इति कर्णोत्पलं प्रायस्तव दृष्ट्या विलोचनेन विलंघ्यते अतिक्रम्यते(ऽ)हि(भि)भूयते ॥ २२४ ॥

१. स्वयमेतद्व्याचष्टे—

**अपाङ्गभागपातिन्या दृष्टेरंशुभिरुत्पलम्।**
**स्पृश्यते वा न वेत्येवं कविनोत्प्रेक्ष्य वर्ण्यते ॥ २२५ ॥**

कर्णावतंसतामुपनीतं च (उत्प) लं दृष्टर्लोचनस्य किरणैः स्पृश्यते वा न वा स्पृश्यते । कविना पुनरित्थमुत्प्रेक्ष्य कथ्यते । इति सुबोधम् ॥ २२५ ॥

३. अचेतनोदाहरणमाह—**कर्णस्येति** । आयतिः वृद्धिः । अस्योत्प्रेक्षालक्षणोपेतत्वं दर्शयति—**अपाङ्गेति** ॥ २२४-२२५ ॥

**लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।**
**इतीदमपि भूयिष्ठमुत्प्रेक्षालक्षणान्वितम् ॥ २२६ ॥**

**[पिनष्टीव तरङ्गाग्रैरुदधिः फेनचन्दनम् ।**
**तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः ॥]**

१. इतीदमपि इत्यादिकमपि भूयिष्ठं सुष्ठु महत् उत्प्रेक्षा(ल)क्षणान्वितं को(नो)पमालक्षणान्वितमित्यर्थः ॥ २२६ ॥

२. **लिम्पतीवेति** । गाढं तमः यदा शरीरेण श्लिष्यति, तदा तत् तमः अङ्गानि लिम्पतीव इत्युत्प्रेक्ष्यते । नीलं तमो यदा विश्वं व्याप्नोति, तदा नभः अञ्जनं वर्षतीव इत्युत्प्रेक्ष्यते ॥ २२६ ॥

३. उत्प्रेक्षालक्षणसहितं उपमाभ्रान्तिकरं उदाहरणद्वयं दर्शयति—**लिम्पतीवेति** । भूयिष्ठं—नैतत् द्वितयमेव, ईदृशमनेकमस्ति इत्यभिप्रायः ॥ २२६ ॥

१. इयमुपमा नोत्प्रेक्षेति कुतो भ्रान्तिरित्यत आह—
**केषांचिदुपमाभ्रान्तिरिवश्रुत्येह जायते ।**

**केषांचिदुपमाभ्रान्तिः** अनुपमायामुपमेति प्रतीतिर्मिथ्याज्ञानं भ्रान्तिः इवश्रुत्या लिम्पतीव पिनष्टीवेत्यादौ या इवश्रुतिरिवशब्दस्तया जन्यते किल । इववद्वेत्यादयः शब्दा उपमाद्योतकाः । लिम्पतीत्यादिषु चै(च)वशब्दमाकर्ण्य उपमां मन्यन्ते केचित् ।

१. किं कृत्वा मन्यन्त इत्याह–

**नोपमानं तिङन्तेनेत्यतिक्रम्याप्तभाषितम् ॥ २२७ ॥**

आख्यातपदेन क्रियावाचिना उपमानोपमेयभावो नास्तीति यदाप्तैरुक्तं तदुल्लंघ्य ॥ २२७ ॥

२. केचित् इदं उदाहरणद्वयं उपमेति मन्यन्ते । ते—'न वै तिङन्तेनोपमानमस्ति' इति भाष्यकारवचनमपि अतिलंघ्य इवशब्देन भ्रमन्तीत्याह—**केषांचिदिति** । तिङन्तवाच्योऽर्थः साध्यतया प्रतीयते । सिद्धयोः द्वयोः उपमानोपमेयभाव इत्यर्थः ॥ २२७ ॥

३. केषांचिदित्यादिना उत्प्रेक्ष्यते इत्यन्तेन ग्रन्थेन उपमाभ्रान्तिं निराकरोति । नोपमानं तिङन्तेन इति भाष्यकारोदितं लक्षणम् ॥ २२७ ॥

१. कुतः पुनस्तिङन्तेनोपमानं नास्तीत्यत आह–

**उपमानोपमेयत्वं तुल्यधर्मव्यपेक्षया ।**
**लिम्पतेस्तमसश्चासौ धर्मः को नु समीक्ष्यते ॥ २२८ ॥**

तुल्यधर्ममपेक्ष्योभयधर्मिसाधारणं उपमानोपमेयभावः । लिम्पतेस्तिङन्तस्य पदस्य तथा तमसश्चासौ साधारणो धर्मः कोऽत्र समीक्ष्यते न कोऽपीत्यर्थः ॥ २२८ ॥

२. तेषां भ्रान्तिं प्रकटयति—**उपमानेति** । एकेन समानधर्मेण हि उपमानोपमेयव्यवहारो भवति । अत्र लिम्पतितमसोः उपमानोपमेययोः कः समानधर्मः ? कोऽपि नास्तीत्यर्थः ॥ २२८ ॥

३. **उपमानेति** । उपमानभूतायाः लिम्पतिक्रियायाः उपमेयभूतस्य तमसश्च साधारणभूतो न कोऽपि धर्मो दृश्यते ॥ २२८ ॥

**यदि लेपनमेवेष्टं लिम्पतिर्नाम कोऽपरः ।**
**स एव धर्मो धर्मी चेत्यनुन्मत्तो न भाषते ॥ २२९ ॥**

यदि लेपनमेवेष्टं लेपनमेव यद्युपमानोपमेय(यो)स्तुल्यो धर्मोऽभिमतः तदा तस्माल्लिम्पतिर्नाम कोऽपरस्ततो लेपनादन्यः कोऽयं भिन्नो लिम्पतिर्नाम धर्मः न कोऽपीत्यर्थः । अथ स एव लिम्पतिर्धर्मो लेपनाभिधानो भवति धर्मी च स एव लेपनधर्माधारस्तत्राह—**स एव धर्मो धर्मी चेति** । स एव लिम्पतिधर्मश्च भवति लेपनाख्यस्तथा धर्मी च स एव लेपनधर्माधार इति एतदेवंविधं धर्मसम्बन्धमनुन्मत्तो यः पुमान् स न भाषते । उन्मत्त एव [illegible]नाहेत्यधिक्षिपति ॥ २२९ ॥

२. शङ्कते यदीति । दूषयति लिम्पतिरिति । आख्यातार्थक्रियायाः प्राधान्यात् सैव लिम्पतिशब्दवाच्या । सा उपमानं सैव समानधर्मः इति भ्रान्तभाषितम् ॥ २२९ ॥

३. यदीति । यदि लेपनक्रियैव धर्मत्वेन परिकल्प्यते, लेपनक्रियाव्यतिरिक्तो लिम्पतिर्नाम नापरोऽस्ति । लिम्पतिरेव धर्मश्च धर्मी च भवतीति चेत्, उन्मत्तजल्पितमेतत् । अनुन्मत्तो नैवं व्यवहरति ॥ २२९ ॥

१. अथ कर्तुस्तमस उपमानता भविष्यतीत्यत आह—

**कर्ता यद्युपमानं स्यान्न्यग्भूतोऽसौ क्रियापदे ।**
**स्वक्रियासाधनव्यग्रो नालमन्यदपेक्षितुम् ॥ २३० ॥**

यदीति सम्भावनायां वर्तते । तमः कर्तृकारकम् । स कर्ता तमोऽभिधानः उपमीयते अनेनेत्युममानं यदि स्याद्भवेत् । तदा न्यग्भूतोऽसावप्रधानम् । क्वेत्याह क्रियापदे आख्याते । यतः कर्तृकर्मकरणकारकलयम(स्य) निष्पाद्य (द्या या) क्रिया सैव प्रधानम् । क्रियाप्रधानमाख्यातं (इति) कर्त्रादीनां क्रियानिर्वर्तकत्वेनोपसर्जनत्वात् । यद्धि यदर्थं तत्तत्र प्रधानमिति वचनात् । स्वक्रियाऽऽख्यातवाच्या तत्साधने व्यग्रो नालमन्यदुपमेयं वा उ(व्य)पेक्षितुं कर्तेति । ततश्च कर्तुस्तमसो लेपनक्रियानिर्वर्तकत्वेन[illegible] ॥ २३० ॥

२. शङ्कने कर्तेति । आख्याते क्रिया तत्कर्ता च द्वयमपि विद्यते ; तत्र कर्ता उपमानं क्रिया किल समानधर्म इति चेत्, तत् प्रतिक्षिपति न्यग्भूत इति । आख्याते क्रियाप्राधान्येन तत्साधककर्ता सर्वाकारेण मग्नः। नामपदस्थकर्तेव न स्वतन्त्रः ; अतो न विशेषमाकाङ्क्षति ॥ २३० ॥

३. कर्तेति । लिम्पतिक्रियायाः कर्ता उपमानमिति चेत्, असौ न्यग्भूतः । प्रसिद्धं हि वस्तु उपमानं उपमेयं वा भवितुमर्हति ; अपि-त्वसौ क्रियापदे न्यग्भवति । सङ्ख्यापुरुषविशिष्टस्य साधनस्य प्रत्ययवाच्य-त्वे, कालोपग्रहविशिष्टायाः क्रियायाः प्रकृतिवाच्यत्वे प्रकृतिप्रत्ययौ सहिता-वेव प्रत्ययार्थं ब्रूवाते इति व्यवस्थायां भूतभव्यन्यायेन कथमत्र सिद्धं साध्यम् ? साधन(साधनसाध्य)भूतायाः क्रियायाः सिद्धावुपक्षीणं वस्तु उपमानम् उपमेयं वा भवितुं न (?) समर्थम् ॥ २३० ॥

१. अथ मन्यसे कर्तुस्तमसो यद्युपमानता न घटते मा घटिष्ट। लिम्प-तिस्तु उपमानं भविष्यतीति । अत्राह—

**यो लिम्पत्यमुना तुल्यं तम इत्यपि शंसतः ।**
**अङ्क्तीति न सम्बद्धं सोऽपि मृग्यः समो गुणः ॥ २३१ ॥**

लिम्पती येनेन क्रियावाचिना (यः कर्ताऽऽक्षिप्येते तेन) उपमानत्वेन परैरभ्यु-पगतेन तुल्यं समं तमः इत्यपि शंसति वर्णयति यस्तस्याप्येवं शंसतो लि-म्पतितमसोः परस्परोपमानोपमेयभावं ब्रुवतः अङ्क्तीति न सम्बद्धमसङ्गतम् ; तावता उपमानोपमेयभावस्य गतत्वात् । किं च सोऽपि मृग्योऽन्वेषणीयः समस्साधारणो गुणो धर्मः ॥ २३१ ॥

२. दूषणान्तरमाह— य इति । यो लिम्पति अमुना तमः तुल्यं इति वक्तुं न शक्यत इत्युक्तम् । उच्यतां वा ; तथा चेत् अस्मिन् वाक्ये अङ्क्तीति पदस्य न सम्बन्धः । अपि च लिम्पतिधर्मो लेपः तमस्यपि भवेत् ; स तु नास्ति ॥ २३१ ॥

३. य इति । अन्यच्च दूषणमस्ति—उपमानभूतस्य तमसा समानधर्मत्वं च गवेषणीयम् इति । तदाह—सोऽपि मृग्यः समो गुणः इति ॥

१. स्वयं स्पष्टयति—

**यथेन्दुरिव ते वक्त्रमिति कान्तिः प्रतीयते ।**
**न तथा लिम्पतौ लेपादन्यदत्र प्रतीयते ॥ २३२ ॥**

इन्दुवक्त्रयोर्धर्मिणोरुपमानोपमेयभावेनोपस्थितयोर्यथा कान्तिस्साधारणो धर्मः प्रतीयते न तथा लिम्पतेर्लेपादुपश्लेषणादन्यद् उभयधर्मिसाधारणमत्र धर्मान्तरं कान्तिप्रख्यं किंचित्प्रतीयते । ततो नोपमानोपमेयभाव इत्यर्थः ॥ २३२

२. तदेव स्पष्टयति—यथेति । इन्दुरिव ते वक्त्रम् इत्युपमायाम् उपमाने इन्दाविव उपमेयेऽपि वक्त्रे यथा कान्तिः प्रतीयते, तथा उपमाने लिम्पताविव उपमेये तमस्यपि स समानधर्मो लेपनं प्रतीयेत । न तदस्ति ; नाप्यन्यः कोऽपि तादृशो धर्मः ॥ २३२ ॥

३. समानधर्मस्तु न कण्ठोक्तः, नापि प्रतीयते इत्याह—यथेति ॥

१. प्रकृतमुपसंहरन्नाह—

**तदुपश्लेषणार्थोऽयं लिम्पतिर्ध्वान्तकर्तृकः ।**
**अङ्गकर्मा च पुंसैवमुत्प्रेक्ष्यत इतीष्यताम् ॥ २३३ ॥**

यतः लिम्पतीव तमोऽङ्गानीत्यादौ तुल्यधर्मव्यपेक्षाभावं नो(वान्नो)पमानोपमेयभावस्तस्मादुपश्लेषणा(र्थोयं लिम्पतिर्ध्वान्तकर्तकत्वेनाङ्गकर्मकत्वेन चोत्प्रेक्ष्यत इति द्रष्टव्यम्) ॥ २३३ ॥

२. उपसंहरति—तदिति ॥ २३३ ॥

३. उपसंहरति—तदिति । उपश्लेषणं सम्बन्धः ॥ २३३ ॥

**मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।**
**उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥ २३४ ॥**

१. यादृशा मन्यत(न्य) इत्येवमादयः तादृशोऽयमपीति इवशब्द उ(मु)पमाल(पल)भ्योपमाशङ्का(ं) मा कार्षुरित्यर्थः ॥ २३४ ॥

२. उपमासूचकत्वेन दर्शित इवशब्दः उत्प्रेक्षायामपि साधारण इत्याह—**मन्य** इति ॥ २३४ ॥

३. **मन्य** इति । न केवलं उपमाया एव द्योतक इवशब्दः उत्प्रेक्षाया अपि ॥ २३४ ॥

इति उत्प्रेक्षाचक्रम् ।

**हेतुश्च सूक्ष्मलेशौ च वाचामुत्तमभूषणम् ।**
**कारकज्ञापकौ हेतू तौ चानेकविधौ यथा ॥ २३५ ॥**

१. हेतुसूक्ष्मलेशामु(नु) द्दिश्य हेतोः कारकज्ञापकभेदाद्द्वैविध्यमुद्दिशति कारकज्ञापकौ हेतू इति । करोतीति कारको यमा(था) बीजमङ्कुरस्य जनकं कारको हेतुरुच्यते । समवाय्यसमवायिनिमित्तभेदात् त्रिधेति केचित् । अपरे पुनरन्तरङ्ग(बहिरङ्ग ?)भेदात् त्रि(द्वि)विधो हेतुः कारक इत्याहुः । ज्ञापयत्यवबोधयत्यतीतं भावि समकालं वा परोक्षं वा(व)स्त्विति ज्ञापकः । यथा परोक्षमाग्निमध्यक्षो धूम इत्यलमतिप्रसङ्गेन । तौ च उभावपि हेतू न नै(अने)कविधौ । यथेत्युदाहरति ॥ २३५ ॥

२. हेतुं लक्षयिष्यन् भामहेनोक्तं— 'हेतुश्च सूक्ष्मलेशौ च नालङ्कारतया मताः' —इत्येतत् प्रतिक्षिपति—**हेतुश्चे**ति । उत्तमभूषणं इति प्रत्यकमभिसम्बन्धः । क्रियायाः कारणं हेतुः इति सामान्यलक्षणं मत्वा तं विभजते—**कारके**ति । तौ कारकज्ञापकौ हेतू भावरूपत्वेन अभावरूपत्वेनभावरूपकार्यत्वेन(अभाव....त्वेन ?) चित्रहेतुत्वेन च बहुविधौ ॥२३५॥

३. प्रागुद्दिष्टानामपि हेतुसूक्ष्मलेशानां पुनरुद्देशेन तेषां अलङ्कारान्तरात् उत्कर्षं कथयति—**हेतुश्चे**ति । तत्र हेत्वलङ्कारमाह । हेतु-

लक्षणन्तु कारकत्वेन ज्ञापकत्वेन च द्विप्रकारमित्याह—कारकज्ञापकौ हेतू इति । तौ एकैकशः अनेकप्रकारौ इत्याह—तौ चेति ॥ २३५ ॥

अयमान्दोलित(ता)प्रौढचन्दनद्रुमपल्लवः ।
उत्पादयति सर्वस्य प्रीतिं मलयमारुतः ॥ २३६ ॥

प्रीत्युत्पादनयोग्यस्य रूपस्यात्रोपबृंहणम् ।
अलङ्कारतयोद्दिष्टं निवृत्तावपि तत् समम् ॥ २३७ ॥

१. आन्दोलिताः (कं) पिताः अप्रौढाः बालाः चन्दनद्रुमपल्लवाः येन स तथाभूतो मलयमारुतो लोकस्य प्रीतिमुत्पादयति ॥ २३६ ॥

इति जनमनःप्रीतिजननहेतु(तो)रेवंविधस्य पवनस्य हेतुत्वमुक्तम् । तथा निवृत्तावपि अभावेऽपि जन्ये तद्धेतुकं(त्वं) सममस्य हेतोः । एतदुक्तं भवति—यथा भावो भा(वा)त् भवत्येव उ(म)भावो वि(ऽपि) प्रध्वंसो भावा(प्रध्वंसाभावो) भावादेव भवति । अयं तु विशेषः । कारणत्रयजन्यो भावः । अभावः पुनर्निमित्तमात्रादिति ॥ २३७ ॥

२. भावरूपकार्ये हेतुं दर्शयति—अयमिति । हेतोः अलङ्कारत्वप्रत्याख्यायिनं भामहं प्रत्याह—प्रीत्युत्पादनेति । अत्र दक्षिणमारुतस्य आन्दोलितप्रौढचन्दनद्रुमपल्लवः इति विशेषणं हेत्वलङ्कारतया उक्तम् । एतद्विशेषणानिवृत्तावपि दक्षिणमारुतस्य हेतुत्वमात्रं सिद्धम्; तत्र नालङ्कारः ॥

३. उदाहरति—अयमिति । मलयमारुतस्वरूपवर्णनस्य प्रीत्युत्पादनयोग्यत्वं च प्रयोजनमित्याह—प्रीतीति । निवृत्तावपि तत् समम्—इत्यत्र अपिशब्देन केवलं प्रवर्तकहेतोरिव निवर्तकहेतोरपि गुणादिवर्णनं कार्यम् इत्याह ॥ २३६-७ ॥

१. तदुदाहरति—

चन्दनारण्यमाधूय स्पृष्ट्वा मलयनिर्झरान् ।
पथिकानामभावाय पवनोऽयमुपस्थितः ॥ २३८ ॥

**अभावसाधनायालमेवंभूतो हि मारुतः ।**
**विरहज्वरसन्ताप(म्भूत)मनोज्ञारोचके जने ॥ २३९ ॥**

चन्दनारण्यमाधूयेत्यादिविशेषणसमन्वितः पवनः पथिकानामभावायोपस्थितो मरणाय जात इति वच(पव)नो भावोऽभावस्य मरणस्य हेतुरुक्तः । निवृत्तावपि तत्समामिति इदमनेन द(निद)र्शितम् । ऋजुः(जु) ॥ विरही(हो)ज्वर इव विरहज्वरः विरहो ज्वरत्वेन रूप्यते । विरहज्वरेण सम्भूतो जातो मनोज्ञेषु चन्दनचन्द्रिकादिष्वरोचकोऽरुचिर्यस्य स विरहज्वरसम्भूतमनोज्ञारोच(क)स्तस्मिन् जने । अभावसाधनायालमेवंभूतो हि मारुतः । सुगमम् ॥ २३८-२३९ ॥

२. अभावरूपकार्ये हेतुं दर्शयति—चन्दनेति । सकलजनसन्तापहरो मलयमारुतः कथं पथिकप्राणहर इत्याशङ्क्य आह—अभावेति । यानियानि वस्तूनि दयितासहितस्य प्रीतिकरणानि तानितानि तद्वियोगे सन्तापकराणि भवन्ति । विरहज्वरसन्तापकृतमनोज्ञपदार्थविषयकारोचकव्याधिमति जने मनोहरो मारुतः प्राणहरणाय अलम् ॥ २३८ ॥

३. दर्शितस्तु प्रवर्तकहेतुः ; निवर्तकहेतुं दर्शयति—चन्दनेति । एतदेव व्याचष्टे—अभावेति । मनोज्ञेष्वपि वस्तुषु विरहज्वरार्तानाम् अरोचकं अरुचिः भवति । रोगाख्यायां ण्वुल् बहुलं इति बहुलग्रहणात् नपुंसकत्वम् ॥ २३८-९ ॥

**निर्वर्त्ये च विकार्ये च हेतुत्वं तदपेक्षया ।**
**प्राप्ये तु कर्मणि प्रायः क्रियापेक्षैव हेतुता ॥ २४० ॥**

१. इह खलु क्रियया व्याप्यं कर्म । तच्च त्रिविधं निर्वर्त्यं विकार्यं प्राप्यं चेति । तत्रासतः प्रादुर्भावो(वे) निर्वर्त्यम् । तदुक्तम्–प्रागसतस्सत्तासम्बन्धः स्वकारणसमवायो वा(....?) । कार्यं निर्वर्त्यं कर्मोच्यते । विक्रियत इति विकार्यम् । सतो गुणान्तराधानं विकारः । यथा हस्तौ कुरु पादौ कुर्वि-

त्युक्ते नापूर्वप्रादुर्भावे(वो) घटस्येव। किन्तु मृदानेति गम्यते। तस्मिन्नुभयत्र कर्मणि हेतुत्वं तदपेक्षया उभयकर्मापेक्षया। प्राप्यत इति प्राप्यं यथा ग्रामं गच्छतीत्यत्र ग्रामो गमनक्रियया प्राप्यत इति कर्म। विषयभूतमपि प्राप्यमेव। तथाहि—आदित्यं पश्यति हिमवन्तं शृणोतीति दर्शनश्रवणक्रियाभ्यां आदित्यहिमवतो वाच्य(व्याप्य)मानत्वादेव प्राप्यकर्मता। तस्मिन् प्राप्ये कर्मणि प्रायो बाहुल्येन क्रियापेक्षैव हेतुता। क्रियापेक्षमेव प्राप्यं कर्म हेतुर्भवति। यथा ग्रामः प्राप्यस्सन् गमनक्रियाया हेतुः। आदित्यहिमवन्तौ दर्शनश्रवणक्रिययोरिति॥ २४०॥

२. निर्वर्त्य इति। निर्वर्त्यविकार्यप्राप्यभेदात् (?) त्रिविधो हेतुः। तत्र निर्वर्त्ये विकार्ये च कर्मणि निर्वर्तकविकारकयोः हेत्वोः तत्तत्कर्मापेक्षया हेतुत्वम्। प्राप्ये तु कर्मणि तद्गतविशेषजननाभावात् न प्राप्यं प्रति हेतुत्वम्। प्राप्तिक्रिया जायत इति तदपेक्षया हेतुत्वम्। प्रायःशब्देन बुद्धिसुखदुःखादिषु च प्राप्येषु तदपेक्षैव हेतुत्वम् इति ज्ञाप्यते॥ २४०॥

३. हेतुहेतुमतोः कः सम्बन्धः इत्यत्राह—निर्वर्त्य इति। अस्यार्थः—निर्वर्तनं नाम अनुत्पन्नस्य उत्पादनम्। भाविनिष्पादनं निर्वर्त्यम्। तथा च घटं करोति इत्यादौ घटादयः निर्वर्त्याः। विकृतिर्नाम दशान्तरापत्तिः। एष्यद्दशान्तरं विकार्यम्; तथा च ओदनं पचति इत्यादौ ओदनादयः, अर्थतः तण्डुलादयः विकार्याः। निर्वर्त्ये तु कर्मणि तदपेक्षया निर्वर्त्यकर्मसिद्धिश्रद्धया, हेतुत्वं कर्तृत्वं इति यावत्। एवं विकार्येऽपि। प्राप्ये तु कर्मणि—अत्र तुशब्दः पूर्वस्मात् वैषम्यं दर्शयति। प्राप्ये कर्मणि स्वरूपस्पृशः कर्तव्यस्य अभावात्, प्राप्तिमात्रस्यैव अपेक्षितत्वात्, क्रियापेक्ष एव हेतुभावः न कर्मापेक्षः। प्राप्यम्—ग्रामं गच्छतीत्यादौ ग्रामादयःप्राप्याः। क्रियावत्त्वं नाम उपयत्र साधारणमेव॥ २४०॥

हेतुर्निर्वर्तनीयस्य दर्शितः शेषयोर्द्वयोः ।
दत्त्वोदाहरणद्वन्द्वं ज्ञापको वर्णयिष्यते ॥ २४१ ॥

१. तत्र त्रिषु कर्मसु मध्ये निर्वर्तनीयस्य कर्मणो हेतुर्दर्शितः ।
'अयमान्दोलितप्रौढचन्दनद्रुमपल्लवः ।
उत्पादयति लोकस्य प्रीतिं मलयमारुतः ॥'
इत्यनेन श्लोको यथा– (केन भावस्य)
'चन्दनारण्यमाधूय स्पृष्ट्वा मलयनिर्झरान् ।
पथिकानामभावाय पवनोऽयमुपस्थितः ॥
इत्येननाभावस्य हेतुरुदाहृतः । शेषयोर्विकार्यप्राप्ययोर्द्वयोः कर्मणोर्दत्त्वा उदाहरणद्वन्द्वं ज्ञापको हेतुर्वर्णयिष्यते मया ॥ २४१ ॥

२. हेतुरिति । पूर्वोदाहरणद्वयेन भावरूपाभावरूपनिर्वर्तनीयकार्यस्य हेतुः दर्शितः । शेषयोः विकार्यप्राप्ययोः उदाहरणे दत्त्वा ज्ञापको वर्णयिष्यते ॥ २४१ ॥

३. प्रागुक्तं उदाहरणद्वयं निर्वर्तनीयस्य द्रष्टव्यम् । विकार्यप्राप्ययोरपि उदाहरणे दर्शयित्वा ज्ञापकं वर्णयिष्यामि इत्याह हेतुरिति ॥ २४१ ॥

१. तत्र विकार्यस्य कर्मणो हेतुत्वं तावदुदाहरति—

उत्प्रवालान्यरण्यानि वाप्यः सम्फुल्लपङ्कजाः ।
चन्द्रः पूर्णश्च कालेन पान्थदृष्टेर्विषं कृतम् ॥ २४२ ॥

२. विकार्यकर्महेतुं दर्शयति—उदिति । उत्प्रवालत्वादिना विकृतानि अरण्यादीनि । कालेन वसन्तेन तत् सर्वं पान्थदृष्टिविषं कृतम् ॥

३. विकार्योदाहरणम्—उदिति । अरण्यादीनां विषत्वापत्तिः दशान्तरापत्तिरिह विकृतिः । पान्थवैरिणा कामेन तत् सर्वं तथा कृतं इति विकार्यकर्मापेक्षया हेतुत्वम् ॥ २४२ ॥

**मानयोग्यां करोमीति प्रियस्थाने स्थितां सखीम् ।**
**बाला भ्रूभङ्गजिह्माक्षी पश्यति स्फुरिताधरा ॥ १४३ ॥**

१. बाला भ्रूभङ्गजिह्माक्षी पश्यतीत्येतस्या दर्शनक्रियायाः सखीमित्येतत् कर्म हेतुरिति दर्शनक्रियापेक्षैव सखी मित्येतस्य कर्मणो हेतुता ॥२४३॥

२. प्राप्यकर्महेतुं दर्शयति—मानेति । दर्शनक्रियाप्राप्यत्वं सख्या दर्शनक्रियां प्रति हेतुत्वं बालायाः ॥ २४३ ॥

३. प्राप्योदाहरणमाह—मानेति । प्रियस्थाने प्रेषितां सखीं उद्दिश्य बाला तावत् एवं कृतवती अहं मानाभ्यासं करोमि इति । एतदर्थं हृदि कृत्वा तां सभ्रूभङ्गं प्रेक्षितवती । अत्र प्राप्यता नाम तस्या भवति पश्यतिक्रियया या सखी प्राप्यते ॥ २४३ ॥

१. इदानीं ज्ञापकं हेतुमुदाहरति—

**गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः ।**
**इतीदमपि साध्वेव कालावस्थानिवेदने ॥ २४४ ॥**

'गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः । इत्येवमादिकीं(किं) काव्यं वार्तामेनां प्रचक्षते' इति यदुक्तं भामहेन तदपाकरोति—'इतीदमपि साध्वेव कालावस्थानिवेदने ।' कालो 'रात्रिंदिवर्तवः' इति वक्ष्यति । तस्यावस्थाना(?)दिनापगमस्तन्निवेश(द)ने अवबोधनमि(इ)ति ॥ २४४ ॥

२. गत इति । गतोऽस्तमर्क इत्यादीनि वाक्यानि निशारम्भद्योतकानि । ज्ञापकहेतुमात्रं नालङ्कारः ॥ २४४ ॥

३. ज्ञापकहेतूदाहरणमाह—गत इति । सूर्यास्तमयादिना कालविशेषः परिज्ञात इति सूर्यास्तमयादेः ज्ञापकत्वम् ॥ २४४ ॥

१. द्वितीयमुदाहरणं दर्शयितुमाह—

**अवध्यैरिन्दुपादानामसाध्यैश्चन्दनाम्भसाम् ।**
**देहोष्मभिः सुबोधं ते सखि कामातुरं मनः ॥ २४५ ॥**

सख्या मदन(नस) कामार्तताववबोध देहोष्माणो हेतवः ॥ २४५ ॥

२. ज्ञापकहेत्वलङ्कारं दर्शयति—अवध्यैरिति । अवध्यैरित्यादिविशेषणविशिष्टैः देहोष्मभिः कामातुरं मनः सुबोधम् । इति भावहेतवः ॥

३. अवध्यैरिति । अवध्यैश्चन्द्रपादानां इत्यादिभिः शरीरतापैः तप्तं मनः कामातुरं ज्ञायते इति तेषां ज्ञापकत्वम् ॥ २४५ ॥

१. इदानीमुपसंहरन्नाह—

**इति लक्ष्याः प्रयोगेषु रम्या ज्ञापकहेतवः ।**
**अभावहेतवः केचित् व्याक्रि(ह्रि)यन्ते मनोहराः ॥ २४६ ॥**

तथाऽभावहेतवश्चान्ये व्याह्रियन्ते उच्यन्ते मनोहराः । अभावश्चासौ हेतुश्च अभावहेतुः अभावहेतुश्चा(भावहेतुश्चाभावहेतुश्चा)भावहेतव इत्येकशेषः । अभावाख्यो हेतुर्भावस्य द्रव्यगुणकर्मलक्षणस्य कार्यस्य प्रदर्श्यते । स च प्राक्प्रध्वंसेतरात्यन्तभेदादभावश्चतुर्धा भिद्यते । पथिकानामभावाय पवनोऽयमुपस्थित इत्यनेन भावोऽभावस्य कार्यस्य मरण(स्य)हेतुरुदाहृतम्(तः) । अयं पुनरभावो भावस्येति न पिष्टपेषणदोषः ॥ २४६ ॥

२. भावहेतुप्रदर्शनानन्तरं अभावहेतवः प्रदर्श्यन्ते इत्याह—इतीति॥

३. इत्यादिज्ञापकहेतवः प्रयोगेषु लक्ष्याः इत्याह—इतीति । अभावहेतवो मनोहरा बहवो विद्यन्ते ; तेषु केचित् व्याक्रियन्ते इत्याह—अभावेति । अभावा नामः बहवः सन्ति शास्त्रकृताः । तत्र नैयायिकपक्षमाश्रित्य अभावस्य विविधत्वमुक्तम् । अभावः पञ्चविधः—प्रागभावः, प्रध्वंसाभावः, इतरेतराभावः, अत्यन्ताभावः, अभावाभावश्च इति । प्रागभावो

नाम कारणान्निष्पाद्यस्य वस्तुनः तत्कारणसन्निधानात् पूर्वम् । अनुदयः प्रध्वंसाभावस्तु कारणान्निष्पन्नस्य कारणान्तरेण विनाशः । इतरेतराभावो नाम भावे भावान्तरस्वरूपाभावः । अत्यन्ताभावः कारणशून्यस्य सर्वदा सत्ताया अभावः । अभावाभावो नाम—यस्य कस्यचित् पदार्थस्य अनुत्पत्तेः अभावो यः, असौ अभावाभावः; वस्तूदय इत्यर्थः ॥ २४६ ॥

१. तत्र प्रागभावं भावहेतुमुदाहरति—

**अनभ्यासेन विद्यानामसंसर्गेण धीमताम् ।**
**अनिग्रहेण चाक्षाणां जायते व्यसनं नृणाम् ॥ २४७ ॥**

विन्दन्ति चतुर्वर्गमादि(भि)रिति विद्याः आन्वीक्षकीत्या(क्या)दयः तासामनभ्यासेनाधीतस्य स्थैर्यकरणे प्रयत्नाभावेनाध्ययनाभावेन वा तदुक्तं 'तत्र स्थितौ यत्नोऽभ्यासः । स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमि(रिति) । तथा धीमतां विदुषामसंसर्गेण वृद्धसंयोगाभावेन । अक्षाणां कर्णत्वगक्षिजिह्वाघ्राणानां अनिग्रहेण निग्रहाभावेनाजितेन्द्रियत्वेन च । तदुक्तं कर्णत्वगक्षिजिह्वाघ्राणानां अनिग्रहेण निग्रहाभावेनाजितेन्द्रियत्वेन च तदुक्तं कर्णत्वगक्षिजिह्वाघ्राणानां शब्दस्पर्शरूपरसगन्धेष्वपिप्वप्रतिप(प्रवृत्ति)त्तिरिन्द्रियजयः तद्विरुद्धवृत्तिरप(व)श्येन्द्रिय इति । तेनानिग्रहेण चाक्षाणां मनःषष्ठानाम् । यदुक्तम्—कामक्रोधलोभमानमदहर्षत्यागादि[न्द्रि]यजयं कुर्वीत । व्यसनं कामजं मृगयादिचतुर्विधम् । क्रोधजं च वाक्पारुष्यादि त्रिविधम् । एवं सप्तधा मानुषमपनय(या)ज्जायते । तदुक्तम्—अविद्याविनयः पुरुषो व्यसनहेतुः ॥ २४७ ॥

२. **अनभ्यासेने**ति । प्रागभावस्य हेतुत्वम् ॥ २४७ ॥

३. क्रमेण उदाहरणानि—**अनभ्यासेने**ति । अत्र विद्यानभ्यासादेः प्रागभावस्य व्यसनहेतुत्वमुक्तम् ॥ २४७ ॥

१. प्रध्वंसाभावमुदाहरति—

**गतः कामकथोन्मादो(द्धातो) गलितो यौवनज्वरः।**
**क्षतो मोहश्च्युता तृष्णा कृतं पुण्याश्रमे मनः॥ २४८॥**

गतः कामकथोद्धातः ध्वस्तः कामकथाप्रारम्भः। गलितो यौवनज्वरः यूनो भावो यौवनं तज्ज्वर इव यौवनज्वरः। क्षतः क्षीणो मोहोऽज्ञानम्। च्युता तृष्णा भवविभवमनोभवभेदात् त्रिविधा सा विनष्टा। ततः कृतं पुण्याश्रमे तपसि मनश्चित्तम्। अनेन कामकथादीनां नाशः पुण्याश्रमे मनस्करणस्य हेतुरुक्तः॥ २४८॥

२. **गत** इति। प्रध्वंसाभावस्य हेतुत्वम्॥ २४८॥

३. **गत** इति। अत्र कामकथोन्मादगमनादिरूपस्य प्रध्वंसाभावस्य पुण्याश्रमानुसन्धानविषये कारणत्वम्॥ २४८॥

१. इतरेतराभावमुदाहरति—

**वनान्यमूनि न गृहाण्येता नद्यो न योषितः।**
**मृगा इमे न दायादास्तन्मे नन्दति मानसम्॥ २४९॥**

वनानि शून्यारण्यानि अनेकानि क(अमून्येतानि) नैतानि गृहाणि। नैताः (योषितः) पीनपयोधराः कुटिलगामिन्यः कामिन्यो न न भ(न भ) वन्त्येताः। किं त्वेता नद्यः। तथा नैते दायादाः बान्धवाः किं त्वेते मृगाः रुरुपृषतादय इति। तन्मे नन्दति मानसम्। कश्चित् परित्यक्त-सकलसंसारसङ्गस्तपस्यन्निदमभ्यधात्। अनेन मनोनन्दनस्य कार्यस्येतरेतराभावो हेतुरुक्तः॥ २४९॥

२. **वनानीति**। इतरेतराभावस्य हेतुत्वम्॥ २४९॥

३. **वनानीति**। अत्र वनान्यमूनि न गृहाणि इत्यादिरूपस्य इतरेतराभावस्य मनःप्रमोदे कारणत्वम्॥ २४९॥

१. अत्यन्ताभावमुदाहरति—

अत्यन्तमसदार्याणामनालोचितचेष्टितम्।
अतस्तेषां विवर्धन्ते सततं सर्वसम्पदः॥ २५०॥

अत्यन्तमसदविद्यमानमार्याणां विदुषां विवेकिनामनालोचितचेष्टितमविमृश्यकारित्वम्। अतस्तेषामसादेवानालोचितचेष्टिताभावादेव विवर्धन्ते सततं सर्वसम्पदः। अविमृश्यकारित्वाभावः सम्पद्वृद्धेर्हेतुरुक्तः॥ २५० ॥

२. अत्यन्तमिति। अत्यन्ताभावस्य हेतुत्वम्॥ २५० ॥

३. अत्यन्तमिति। अत्र अनालोचितचेष्टितस्य अत्यन्ताभावः विभूतीनां सार्वत्रिकीणा सर्वकालीनानां हेतुः॥ २५० ॥

१. इदानीमभावाभावो भावस्य हेतुरुदाह्रियते—

उद्यानसहकाराणामनुद्भिन्ना न मञ्जरी।
देयः पथिकनारीणां सतिलः सलिलाञ्जलिः॥ २५१॥

उद्यानसहकारकुसुमाभावस्याभावः पथिकस्त्रीमरणहेतुरुक्तः॥ २५१॥

२. उद्यानेति। अभावाभावस्य हेतुत्वम्॥ २५१ ॥

३. उद्यानेति। अत्र वस्तुनः उत्पत्तिः प्रागभावाभाव उच्यते। तेन सहकारमञ्जरीणां उद्भेदस्य पथिकनारीणां मरणकारणत्वम्॥ २५१ ॥

प्रागभावादिरूपस्य हेतुत्वमिह वस्तुनः।
भावाभावस्वरूपस्य कार्यस्योत्पादनं प्रति॥ २५२॥

इह भावहेतोव....रकारे (अभावहेत्वलङ्कारे) वस्तुनो हेतुत्वमुक्तम्। किंभूतस्येत्याह—प्रागभावादिरूपस्य प्रागभाव आदिर्यस्य तत् प्रागभावादि तद्रूपं यस्य तत् प्रागभावादिरूपं वस्तु तस्य। किं प्रतीत्याह—कार्यो-(र्यस्यो)त्पादनं प्रति। कथंभूतस्य कार्यस्योत्पत्तिं प्रतीत्याह—भावाभावस्वभावस्य

भावश्चाभावश्च भावाभावौ तौ स्वभावौ यस्य तत् भावाभावस्वभावं तस्य । इह खलु द्विविधं कार्यं भावस्वभावमभावस्वभावरूपं (?) चेति । तस्योभयस्याप्युदाहरणान्युक्तानि ।

ननु प्रागभावादिरूपस्य वस्तुनो हेतुत्वमुक्तं नाभावस्य । कथमभावस्य भावाभावस्वभावं कार्यं प्रति हेतुत्वमिति चेत् .... .... .... .... .... .... भावो हि भावधर्मो .... .... .... .... प्रमायते च व्यपदिश्यते च वस्तुव्यवस्थागममेयमन्यत् । तथा हि .... घटप्रध्वंसोऽपि कपालत्वा.... .... तेन निरूपयति भाव एव घटप्रध्वंसः । तथा घटे पटाभावोऽपि घटसद्भाव एवेति । इतरेतराभावोऽपि भावस्वरूप एव । अत्यन्ताभावोऽपि नास्ति प्रकृतिर्पुरुषस्य द्वितीयं शिरस्तृतीयो बाहुरित्येके(क)शिरस्सद्भाव एवेति । प्रागभावादिवस्तुनो हेतुत्वमुक्तमित्य(न)वद्यम् । अथ वा प्रागभावादिरूपस्येत्येतन्न वस्तुनो विशेषणम् । किं तु प्रागभावादिरूपस्य हेतुत्वमिह । तथा वस्तुनश्च भावस्य च । तथा चैवोदाहृतम् ॥ २५२ ॥

२. अभावहेतूदाहरणानि व्याचष्टे—प्रागिति । चतुर्षु उदाहरणेषु भावरूपं कार्यम् ; अन्त्योदाहरणे कार्यत्वं अभावस्य ॥ २५२ ॥

३. प्रागिति सुबोधम् ॥ २५२ ॥

१. इदानीं दूरकार्यादीन् पञ्च कारककारकान् (?) हेतून् दर्शयति—

**दूरकार्यस्तत्सहजः कार्यानन्तरजस्तथा ।**
**अयुक्तयुक्तकार्यौ चेत्यसंख्याश्चित्रहेतवः ॥ २५३ ॥**

दूरदेशे व्यवधाने कार्यं यस्य हेतोरसौ दूरकार्यः । तेन कार्येण सहैव समकालमेव जायत इति तत्सहजः । कार्यादनन्तरं पश्चाज्जायत इति

कार्यानन्तरजः अयुक्तं युक्तं च युक्तायुक्ते ते कार्ये जन्ये ययोस्तावयुक्त-युक्तकार्यौ चेति। असंख्याश्चापि कारका ज्ञापकाश्च हेतवः स्वयमूह(ह्य)ाः ।। ।। २५३ ।।

२. चित्रहेतुनामकान् हेतूनाह—दूरेति ।। २५३ ।।

३. चित्रहेतुलक्षणप्रकारमाह—दूरेति । आश्चर्यहेतवस्तु अपर्य-न्ताः ; तत्र केचन दर्श्यन्ते। क्वचित् देशे स्थितस्य हेतोः देशान्तरे कार्ये दूरकार्यः । कार्येण सह जायमानः तत्सहजः । कार्यस्य पश्चाज्जातः कार्यानन्तरजः। स्वस्वभावविरुद्धार्थकारी अयुक्तकार्यः। स्वस्वभावानुरूपा-र्थकारी युक्तकार्यः ।। २५३ ।।

तेऽमी प्रयोगमार्गेषु गौणवृत्तिव्यपाश्रयाः ।
अत्यन्तसुन्दरा दृष्टास्तदुदाहृतयो यथा ॥ २५४ ॥

१. अमी दूरकार्यादयः प्रयोगमार्गे(षु)स्वलक्षप्रपञ्चेषु गौणप्र(?)वृत्ति-व्यपाश्रयाः गौणीं प्र (?)वृत्तिमाश्रित्यात्यन्तसुन्दरा अत्यन्तरमणीया दृष्ट[ाः ।] नाना(न)मुख्यवृत्तिव्यपाश्रयाः सन्तो रम्याः । तदुदाहृतयस्तेषां दूरकार्यादी-नामुदाहृतय उदाहरणानि ।। २५४ ।।

२. कारणमन्यत्र कार्यमन्यत्र इत्यादि विरुद्धम् इत्याशङ्क्य परिह-रति—त इति ।। २५४ ।।

३. त इति। अमी हेतवः गौणवृत्तिमाश्रित्य प्रयोक्तव्याः ।। २५४ ।।

१. यथा—

त्वदपाङ्गाह्वयं जैत्रमनङ्गास्त्रं यदङ्गने ।
मुक्तं तदन्यतस्तेन सोऽस्म्यहं मनसि क्षतः ॥ २५५ ॥

हे अङ्गने ! यदेतत् त्वदपाङ्गाभिधानमनङ्गास्त्रं तद्यतः अन्यस्मिन्नन्यतः त्वया मुक्तं तेनान्यतो(मुक्तेनाहं)मनसि क्षतो विद्ध इति दूरकार्यः ।।२५५।।

२. त्वदिति। वैयधिकरण्येन प्रवृत्तो हेतुः दूरकार्यः। यत्किञ्चिदपि पश्यन्त्याः कस्याश्चित् चक्षुषोः विभ्रमातिरेकेण हृतहृदयः कश्चित् एवमाह—सोऽस्मयहं मनसि क्षतः इति॥ २५५॥

३. क्रमेण उदाहरणानि। त्वदिति—अन्यतो मुक्तस्य अपाङ्गात्मनो हेतुभूतस्य अस्त्रस्य अन्यतः क्षताभिधानकार्यदर्शनात् असौ दूरकार्यः॥

१. तत्सहजमुदाहरति—

**आविर्भवति नारीणां वयःपर्यस्तशैशवम्।**
**सहैव विविधैः पुंसामङ्गजोन्मादविभ्रमैः॥ २५६॥**

अतीतबालभावं वयो यौवनं वनितानां प्रकटीभवति। पुंसामङ्गजो-[न्मा] दविभ्रमैर्विविधैः सहेत्यनेन वनितानां यौवनस्य कामुकजन(विभ्रमकारणस्य स्वकार्यैः कामुकजनविभ्रमैः सह जननमुक्तम्॥ २५६॥

२. कार्यसहजं हेतुं दर्शयति—आविरिति। तारुण्यस्य वयसः युवोन्मादकत्वमत्र लक्ष्यम्॥ २५६॥

३. आविरिति। पर्यस्तशैशवस्य नारीणां वयोलक्षणस्य हेतोः पुंसां अङ्गजोन्मादविभ्रमस्य च कार्यस्य सहदर्शनात् तत्सहजः॥ २५६॥

**पश्चात्पर्यस्य किरणानुदीर्णं चन्द्रमण्डलम्।**
**प्रागेव हरिणाक्षीणामुदीर्णो रागसागरः॥ २५७॥**

१. किरणान्विकीर्य चन्द्रमण्डलं पश्चादुद्गतम्; हरिणाक्षीणां रागसागरः पुनश्चन्द्रोदयात् प्रागेव क्षुभित इति रागसागरविवृद्धिलक्षणात् कार्यात् (परं) चन्द्रोदयाभिधानो हेतुरुद्गत इति कार्यानन्तरजः॥ २५७॥

२. पश्चादिति। अत्र कार्यानन्तरजो हेतुः। चन्द्रोदयम् उत्प्रेक्षमाणानाम् उदयात् प्रागेव रागः प्रवृद्ध इति भावः॥ २५७॥

३. अत्र चन्द्रोदयलक्षणात् हेतोः पूर्वमेव रागसागरः उदीर्णः इति कार्यस्य उदयलाभः। स इह गौणवृत्त्याश्रयो हेतोः अतिशयं पुष्यति। कार्यानन्तरजः एष हेतुः ॥ २५७ ॥

१. अयुक्तकार्यमाह—

**राज्ञां हस्तारविन्दानि कुड्मलीकुरुते कुतः।**
**देव त्वच्चरणद्वन्द्वरागबालातपः स्पृशन् ॥ २५८ ॥**

हे देव त्वत्पादद्वयराग एव बालातपः स्पृशन् राज्ञां सामन्तानां पाणिपद्मानि कुड्मलीकुरुते मुकुलतामापादयतीत्ययुक्तकार्यः यस्मादादित्योदयसमुद्भूतातपः पद्मानां विकासस्य हेतुः न सङ्कोचस्येति। अयं पुनस्तद्विपरीत इत्ययुक्तकार्यः॥ २५८ ॥

२. अयुक्तहेतुं दर्शयति—**राज्ञामिति**। कुत इति अयुक्तं दर्शयति ॥ २५८ ॥

३. **राज्ञामिति**। बालातपस्वभावः कमलविकासकारी। अत्र तु वर्णनीयचरणद्वन्द्वरागबालातपः राज्ञां कराम्बुजानि सङ्कोचयति इति स्वभावाननुरूपकारित्वात् अयुक्तकार्यः॥ २५८ ॥

**पाणिपद्मानि भूपानां सङ्कोचयितुमीशते।**
**त्वत्पादनखचन्द्राणामर्चिषः कुन्दनिर्मलाः ॥ २५९ ॥**

२. युक्तहेतुं दर्शयति—**पाणीति** ॥ २५९ ॥

३. **पाणीति**। अत्र तु वर्णनीयनखचन्द्रार्चिरपि राज्ञां कराम्बुजानि सङ्कोचयति इति स्वभावानुरूपार्थकारित्वात् युक्तकार्यः ॥ २५९ ॥

१. प्रकृतमुपसंहरन्नाह—

**इति हेतुविकल्पानां दर्शिता गतिरीदृशी।**

इति हेतुचक्रम्।

हेत्वलङ्कारप्रपञ्चस्यैवंविधा गतिरुक्ता।

१. सूक्ष्मलक्षणमाह—

**इङ्गिताकारलक्ष्योऽर्थः सौक्ष्म्यात् सूक्ष्म इति स्मृतः ॥ २६० ॥**

इङ्गितमन्यथा (?) (इङ्गिताका)राभ्यां लक्ष्यत इतीङ्गिताकारलक्ष्यः । इङ्गिताकारलक्ष्य इत्यन्तर्गत(त्यनूद्य) सूक्ष्म इति विधीयते । कस्मात् सूक्ष्म इत्याह—सूक्ष्म(सौक्ष्म्यात्) (सर्वैर्घट) प(ट)ादिवदुपलक्षयितुमशक्यत्वात् ॥

२. सूक्ष्मं लक्षयति—इङ्गितेति । इङ्गितं कायचेष्टाविशेषः ; आकारः मानसविकारद्योतकमुखवर्णादिः ; ताभ्यां लक्षणीयः अर्थः सौक्ष्म्यात् दुर्ज्ञेयत्वात् सूक्ष्मः ॥ २६० ॥

३. इङ्गितेति । इङ्गितं भ्रूक्षेपकटाक्षवीक्षणादि ; आकारः स्वेदरोमाञ्चादिः ; ताभ्यां अनुमेयः अर्थः सूक्ष्मः ॥ २६० ॥

१. तत्र इङ्गितलक्ष्यमर्थमुदाहरति—

**कदा नौ सङ्गमो भावीत्याकीर्णे वक्तुमक्षमम् ।**
**अवेक्ष्य कान्तमबला लीलापद्मं न्यमीलयत् ॥ २६१ ॥**

(कदा कस्यां वेला) यां नौ आवयोः सङ्गमः सुरतसंयोगो भावी भविष्यतीति (वक्तुमसमर्थं प्रियं ज्ञात्वा लीलापद्मं न्यमीलयत्) सङ्कोचमनयत् । वक्तुमक्षमत्वं च सङ्कीर्णत्वात् ॥ २६१ ॥

१. स्वयं व्याचष्टे—

**पद्मसम्मीलनादत्र सूचितो निशि सङ्गमः ।**
**आश्वासयितुमिच्छन्त्या प्रियमङ्गजपीडितम् ॥ २६२ ॥**

[आकारलक्ष्यमुदाहरति]

२. इङ्गितलक्षणं दर्शयति—कदेति । आकीर्णे जनसङ्घाते 'कदा नौ सङ्गमो भवेत् ?' इति वक्तुमक्षमम् , कान्तं तदिङ्गितेन ज्ञात्वा , हस्तगतं पद्मं निमीलनाभिनयेन मुकुलीचकार । एतत् विवृणोति—पद्मेति ॥

३. कदेति । नायिकादर्शितस्य निशि समागमस्य पद्मसम्मीलन-लक्षणेन इङ्गितेन प्रियतमेन लक्षितत्वात् अयम् इङ्गितलक्ष्यः सूक्ष्मः ॥२६२॥

**त्वदर्पितदृशस्तस्या गीतगोष्ठ्यामवर्धत ।**
**उद्दामरागतरला छाया काऽपि मुखाम्बुजे ॥ २६३ ॥**

१. त्वामालोकयन्त्यास्तस्याः कान्ताया उक्त(उत्कटा)नुरागललिता काऽपि शोभाऽवर्ध)तेति आकारलक्ष्योऽर्थ इति सूक्ष्मः ॥ २६३ ॥

**इत्यनुद्भिन्नरूपत्वाद्रत्युत्सवमनोरथः ।**
**अनुल्लंघयैव सूक्ष्मत्वमभूदत्र व्यवस्थितः ॥ २६४ ॥**

१. रतिरेवो (त्सवः । तत्र) मनोरथा(थोऽ) वाप्तिप्रार्थना अनुद्भिन्नं रूपं यस्याः सा [?] अनुद्भिन्नरूपा । तस्या भावोऽनुद्भिन्नरूपत्वं तस्मात् सूक्ष्मत्वमनुलङ्घ्यैव व्यवस्थितोऽत्रासीदिति ॥ २६४ ॥

२. आकारलक्ष्यं दर्शयति—त्वदिति । गीतगोष्ठ्यां त्वदर्पितदृशः तस्याः मुखाम्बुजे उद्दामरागतरला रागातिरेकभासुरा कापि शोभा अवर्धत इति, तद्वीक्षणसमये तस्या मुखच्छायाभेदेन तस्मिन् अनुरागं लक्षयित्वा कोऽपि कथयति । इतीति । कस्मिंश्चित् अनुरागलक्षणस्य अल्प(र्थ?)स्य अप्रकाशितरूपत्वात् निपुणवेद्यत्वात् सूक्ष्मत्वम् ॥ २६३-२६४ ॥

३. त्वदिति । वर्णनीयमनसि वर्तमानः रत्युत्सवमनोरथः विलक्षणया मुखच्छायया लक्षित इति आकारलक्ष्यः सूक्ष्म एषः ॥ २६३-२६४ ॥

इति सूक्ष्मम् ॥

१. लवमुदाहरति—

**लेशो लेशेन निर्भिन्नवस्तुरूपनिगूहनम् ।**
**उदाहरण एवास्य रूपमाविर्भविष्यति ॥ २६५ ॥**

लेशो लवपर्यायः । उद्देशे लव इति निर्देशे लेश इति वदतो न

दोषः। तत्पर्यायत्वात्। लेश इति लक्ष्यनिर्देशः। लेशेन व्याजेन स्तोकेन मनागिति यावत्। निर्भिन्नं च तद्वस्तु च तस्य रूपं तस्य निगूहनं संवरणमिति लक्षणनिर्देशः। अस्य लेशस्य उदाहरणवाक्ये रूपमाविर्भविष्यति ॥ २६५ ॥

२. लेशं लक्षयति लेश इति। किञ्चित्प्रकाशस्य अर्थरूपस्य प्रकारान्तरेण निगूहनं लेशः ॥ २६५ ॥

३. लेशालङ्कारमाह—लेश इति। लेशेन व्याजेन निर्भिन्नस्य प्रकटीभूतस्य वस्तुनः तिरस्करणं लेशः लवः इति सम्बन्धः। सात्त्विकविकारेषु अन्यतमस्य तत्कारणतया ज्ञायमानस्य कारणान्तरकथनेन निगूहनम् सूक्ष्मभूतेन कारणेन अनुमितस्य गूहनात् लेशः। लवस्य रूपं उदाहरणे व्यक्तीभविष्यति इत्याह—उदाहरण इति ॥ २६५ ॥

**राजकन्यानुरक्तं मां रोमोद्भेदेन रक्षकाः।**
**अवगच्छेयुरा ज्ञातमहो शीतानिलं वनम् ॥ २६६ ॥**

१. रागहेतुभूतेन रोमहर्षेण रक्षा[क्षका]मामवगच्छेयुर्यथाऽयं राजकन्यानु(रक्त इति। आः) ज्ञातम्। अहो शीतानिलं वनमित्यनेन व्याजेन शीतहेतुकं रोमहर्षक(?)मापादयद्रा [नु रा]जकन्याविषयाभि[लाषं निगूहतीति लेशः] ॥ २६६ ॥

२. राजेति। राजकन्यादर्शनसमये समुपजातं आत्मनो रोमाञ्चमवेक्ष्य, तद्रक्षकैरात्मविकारदर्शनभिया तद्गूहनोपायं विचिन्त्य, उपवनानिलशैत्यं रोमाञ्चहेतुमुपन्यस्तवान्। आः ज्ञातम् इति रोमाञ्चहेतुस्मरणं द्योतयति ॥ २६६ ॥

३. उदाहरति—राजेति। राजकन्याविषयं अनुरागं पुलकोद्गमेन रक्षकाः शुद्धान्तरक्षकाः ज्ञास्यन्तीति भयात्कोऽत्र परिहारः इति चिन्तयता,

कारणान्तरेण आः ज्ञातं शीतानिलं वनं इति लेशेन परिहारः कृत इति उक्तलक्षणो लेशालङ्कारः ॥ २६६ ॥

१. (अपर)मुदाहरणं दर्शयति—

**आनन्दाश्रु प्रवृत्तं मे कथं दृष्ट्वैव कन्यकाम् ।**
**अक्षि मे पुष्परजसा वातोद्धूतेन दूषितम् ॥ २६७ ॥**

इदञ्च प्राक्तनोऽप्युदा(नोदा)ह(रणव्याख्यानेनैव कृत)व्याख्यानमिति न पृथक्प्रपञ्च्यते ॥ २६७ ॥

२. आनन्देति । अत्र स्वानुरागप्रकाशकानन्दाश्रुरूपसात्त्विक-भावनिगूहनाय अश्रुकारणं पुष्परेणुमुपन्यस्तवान् । उदाहरणद्वयप्रदर्शनं शङ्काहेतुसात्त्विकभेदकथनेन विषयव्याप्त्यर्थम् ॥ २६७ ॥

३. आनन्देति । राजकन्याविषयं अनुरागं परिसरवर्तिनः प्रमोदबा-ष्पेण ज्ञास्यन्ति इति तस्य कारणान्तरकथनात् लेशलक्षणयोगः ॥ २६७ ॥

**इत्येवमादिस्थानेऽयमलङ्कारोऽतिशोभते ।**

१. इत्येवमादिस्थानेऽयमलङ्कारो लेशोऽतीव शोभते ।

**लेशमेके विदुर्निन्दां स्तुतिं वा लेशतः कृताम् ॥ २६८ ॥**

२. लेशस्य लक्षणान्तरमाह—लेशमिति । एतत् लेशलक्षणं वक्ष्य-माणव्याजस्तुतिलक्षणेन सङ्कीर्णं इति स्वाभिमतमित्याह—एके इति ॥२६८॥

३. इतीति । एवमादिस्थाने ईदृशे स्थाने । लेशलक्षणं बहुप्रकारं आचक्षते ; इदमेव तु श्लाघनीयम् इत्यभिप्रायः । लेशालङ्कारस्य आचार्या-न्तरमतं लक्षणं दर्शयति—लेशमिति । एके केचिदाचार्याः । लेशतः कृता स्तुतिर्वा लेशतः कृता निन्दा वा लेशः इत्यर्थः ॥ २६८ ॥

**युवैष गुणवान् राजा योग्यस्ते पतिरूर्जितः ।**
**रणोत्सवे मनः सक्तं यस्य कामोत्सवादपि ॥ २६९ ॥**

**वीर्योत्कर्षस्तुतिर्निन्दैवास्मिन् भावनिवृत्तये।**
**कन्यायाः कल्पते भोगान्निर्विविक्षोर्निरन्तरान् ॥ २७० ॥**

१. युवैष गुणवान् राजेत्यादिर्वीर्योत्कर्षस्तुतिः निन्दैवास्मिन् राजनि; न स्तुतिः। कन्याया भोगान् निरन्तरं निर्विवक्ष(क्षोरभि)लाषभङ्गाय जायते ॥ ॥ २६९-२७० ॥

**चपलो निर्दयश्चासौ जनः किं तेन मे सखि।**

१. [तेन] जनेन।

**आगःप्रमार्जनायैव चाटवो येन शिक्षिताः ॥ २७१ ॥**

इत्यत्र

**दोषाभासो गुणः कोऽपि दर्शितश्चाटुकारिता।**

१. चाटून् करोतीति चाटुकारः [तस्य भावश्चाटुकारिता। दोषाभासो न] तु परमार्थतो दोषः किं तु गुणवत[एव]। किं कुर्वते[त्ये]त्याह—

**मानं सखीजनोद्दिष्टं कर्तुं रागादशक्तया ॥ २७२ ॥**

(सखीज)नेनोपदिष्टो मानः तं रागात् भर्तृविषये स्नेहात्कर्तुमश(क्तया। चपलो निर्दय इत्या)दिना दोषवत्तामुद्भाव्य चाटुकारगुणप्रकाशनात् (लवः)॥२७२॥

२. युवेत्यादि। लेशोदाहरणे स्पष्टे ॥ २६९-२७२ ॥

३. युवेत्यादि। राज्ञो वीर्योत्कर्षस्तुतिः कन्यायाः भोगान् निरन्तरान् निर्विविक्षोः दोषत्वेन प्रतिभासमाना तद्राजविषयाभिलाषनिवृत्तये भवति। चपल इत्येतत् व्याचष्टे—दोषाभास इति। अस्मिन्नुदाहरणे दोषाभासाः गुणत्वेन दर्शिताः। चपलः विरहावस्थायां स्थातुमशक्तः; निर्दयः संश्लेषे कठोरः; आगःप्रमार्जनाय चाटुवचनं शिक्षितवान् इति गुणः। अत्र सखीजनोपदिष्टं मानं निर्वोढुं अपारयन्त्या नायिकया प्रियस्य दोषाभासो गुणीकृतः ॥ २६९-२७२ ॥

इति लेशचक्रम् ॥

१. कमल (क्रमं लक्षयति—)

**उद्दिष्टानां पदार्थानामनुदेशो यथाक्रमम् ।**
**यथासंख्यमिति प्रोक्तं संख्यानं क्रम इत्यपि ॥ २७३ ॥**

.... (उद्दिष्टानां उ) च्चारितानां पदार्थानामनु पश्चाद्देशोऽनुदेशस्तस्यै (थै)व पाठः यथा(संख्यमिति प्रोक्तम् । क्रम इति यथासंख्यमि)त्यपि पर्यायशब्दाविमाविति उद्देशग्रन्थे हेतुः सूक्ष्मो लवः क्रम इत्युक्तमिह तु (यथासंख्यमिति) ॥ २७३ ॥

२. क्रमं लक्षयति—उद्दिष्टानामिति ॥ २७३ ॥

३. क्रमालङ्कारमाह—उद्दिष्टानामिति । यस्मिन् उद्दिष्टाः पदार्थाः संख्यावन्तः समानसंख्यैः अनुदेशिभिः पदार्थैः क्रमेण सम्बद्ध्यन्ते यथासंख्यम् संख्यानम् क्रमः इत्यपि भवति ॥ २७३ ॥

**ध्रुवं ते चोरिता तन्वि स्मितेक्षणमुखद्युतिः ।**
**स्नातुमम्भःप्रविष्टायाः कुमुदोत्पलपङ्कजैः ॥ २७४ ॥**

१. स्मितं चेक्षणे च मुखं च । (ते त्वत्सम्)बन्धिनां स्मितादीनां ध्रुवं हे तद्विरोचि(तन्वि चो[रि])ता । कैरित्याह कुमुदोत्पलपङ्कजैः कुमुदानि श्वेतोपे(त्पलानि । उत्पलानि नीलानि । पङ्कजानि प)द्मानि तैरिति यथासंख्यमस्ति । तथा हि । कुमुदैः स्मितद्युतिश्चोरिता नीलोत्पलैरीक्षणद्युतिः पङ्कजैः (मुखद्युतिः । इति पूर्वं यथा निर्देशः पश्चादपि त)था निर्देश इति क(क्र)मः ॥ २७४ ॥

२. उदाहरति—ध्रुवमिति । अत्र स्मितद्युतिः कुमुदेन, ईक्षणद्युतिः उत्पलेन, मुखद्युतिः पङ्कजेन इति यथाक्रमं अनुदेशः, यथासंख्यम् संख्यानम् क्रमः इति संज्ञात्रयवान् ॥ २७४ ॥

३. ध्रुवमिति सुबोधमेतत् ॥ २७४ ॥

इति क्रमः ।

१. प्रेयोरसवदूर्जस्विनां लक्षणम्—

**प्रेयः प्रियतराख्यानं**

प्रियवचनमतिशययुक्तं प्रेयः।

**रसवद्रसपेशलम्।**

(रसैः) रमणीयं यत्तद्रसवत्। अतिशायने मतुप्।

**ऊर्जस्वि रूढाहङ्कारं**

रूढः प्रसिद्धोऽहङ्कारोऽभिमानो (यत्र तत्) मानोऽहङ्कारो अहङ्कारोऽमर्षः पुरुषकार इति वचनात् अन्यैरपि.... ....मीदृशम् (?)।

**युक्तोत्कर्षं च तत् त्रयम्॥ २७५॥**

तत् त्रयः (यं यत्) प्रेयो रसवदूर्जस्वीत्युक्तम्॥ २७५॥

२. केचित् प्रेय इति रसवद्वर्णयन्ति, उद्धतमिति च। ततः साम्यात् प्रेयो रसवदूर्जस्वीति त्रयं युगपल्लक्षयति—प्रेय इति। रसात्मकत्वात् त्रयं एतत् उत्कृष्टम्। देवगुरुपित्रादिविषयः प्रीतिप्रकर्षः प्रेयः॥ २७५॥

१. तत्र प्रेय उदाहरति—

**अद्य या मम गोविन्द जाता त्वयि गृहागते।**
**कालेनैषा भवेत्प्रीतिस्तवैवागमनात् पुनः॥ २७६॥**

**इत्याह युक्तं विदुरो नान्यतस्तादृशी धृतिः।**
**भक्तिमात्रसमाराध्यः सुप्रीतश्च ततो हरिः॥ २७७॥**

(तवागमना)द(दे)व यदि स्यात; नाद्य(न्य)त इति॥ २७६॥

इत्याह—युक्त(क्तं) सम्बन्ध[द्ध]मेव विदुरो राजा। कुतो युक्तमित्याह—नान्यतस्तादृशी (धृतिः प्रीतिः) यतो नास्त्यतः। भक्तिरेव केवलं भक्तिमात्रं तेन समाराध्य आराधयितुं शक्यः सुप्रीतश्च ततो विदुरवचनाद्धरिः। भक्त्या तुष्यन्ति देवा (वता) इति॥ २७७॥

२. तत् उदाहरति—अद्येति । प्रेयस्त्वं व्याचष्टे—इतीति । कृष्ण-विषये प्रेयो दर्शितम् ॥ २७६-२७७ ॥

३. प्रेयस उदाहरणम्—अद्येति । एतत् व्याचष्टे-इतीति । विदुरः एवं अवदत् । तस्य च अन्यागमनात् एवं न धृतिः प्रीतिः अभवत् यथा विष्णौ गृहमागते आसीत् ॥ २७६-२७७ ॥

१. प्रेयस एव (द्विती)यमुदाहरणम् ।

**सोमः सूर्यो मरुद् भूमिर्व्योम होताऽनलो जलम् ।**
**इति रूपाण्यतिक्रम्य त्वां द्रष्टुं देव के वयम् ॥ २७८ ॥**

**इति साक्षात्कृते देवे राज्ञो यद्रातवर्मणः ।**
**प्रीतिप्रकाशनं तच्च प्रेय इत्यवगम्यताम् ॥ २७९ ॥**

सोमः, सूर्यः, मरुत् पवनः, भूमिः, व्योम आकाशः, होता यजमानः, अनलो हुताशनः, जलमिति रूपाण्यष्टावतिक्रम्य हे देव महादेव त्वां द्रष्टुं के वयं मांसचक्षुष इत्येवंविधं हृदये यथार्थवस्तुप्रतिपादकवचनरचनातः (?) साक्षात् कृते देवे महेश्वरे राज्ञा यद्रामवर्मणः प्रीतिप्रकाशनं तच्च तदपि प्रेय इत्यवगम्यताम् ॥ २७८-२७९ ॥

२. महेश्वरविषयं प्रेयो दर्शयति–सोम इति । एतत् व्याचष्टे–इति साक्षात्कृत इति ॥ २७८-२७९ ॥

३. अस्य उदाहरणान्तरं दर्शयति सोम इति । अष्टौ रूपाणि अतिक्रम्य त्वां परमार्थतः द्रष्टुं वयं के । व्याचष्टे–इतीति । शिवे साक्षात्कृते सति रातवर्मनाम्ना राज्ञा प्रीतिप्रकाशनं यत् तच्च पूर्वोक्तं च प्रेयः इति अवगम्यताम् ॥ २७८-२७९ ॥

इति प्रेयः ।

१. रसवदुदाहरति–

मृतेति प्रेत्य सङ्गन्तुं यया मे मरणं मतम् ।
सैषाऽवन्ती मया लब्धा कथमत्रैव जन्मनि ॥ २८० ॥

प्राक् प्रीतिर्दर्शिता सेयं रतिः शृङ्गारतां गता ।
रूपबाहुल्ययोगेन तदिदं रसवद्वचः ॥ २८१ ॥

मृतेति प्रेत्य मृत्वा सङ्गन्तुं यया सह मे मरणं मतं सैवावन्ती वासवदत्ता मया दृष्टा । कथमत्रैव जन्मनि जीवतीति वाक्यशेषः ॥ २८० ॥

प्रीतिर्दर्शिता यया प्रेत्य सङ्गन्तुमित्यनेन । सेयं रतिः शृङ्गारतां गता रति(ः शृङ्गाररसोत्पत्तौ स्थायी)भावः । शृङ्गाराख्यरसरूपस्य बाहुल्यं तद्योगे(न तदीयबहुरू)पसमपा (सम्पादनेन समवायेन) (रस)वद्वचः रस (इति सामा)न्येनाभिधाने(ऽपि र)तिः शृङ्गारतां गतेति (कथनात्) शृङ्गाररसेन रसवदिति लभ्यते ॥ २८१ ॥

२. अष्टरसभेदेन रसवत् अष्टधा दर्शयिष्यति; शृङ्गारवत् दर्शयति–मृतेति । प्राक् प्रीतिरिति—'मनोऽनुकूलेष्वर्थेषु सुखसंवेदनं रतिः । असंप्रयोगविषया सैव प्रीतिर्निगद्यते' इति प्रीतिलक्षणम् । तत्र पूर्वोदाहरणे प्रीतिप्रकर्षो दर्शितः । अत्र तु रतिः रूपबाहुल्ययोगेन शृङ्गाराकारा दर्शिता ।

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥
शृङ्गारहास्यकरुणा वीररौद्रभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्ट नाट्यरसाः स्मृताः ॥
ज्ञायमानतया यत्र विभावो भावपोषकृत् ।
आलम्बनोद्दीपनत्वप्रभेदेन स च द्विधा ॥

अनुभावो विकारस्तु भावसंसूचनात्मकः ।
स्तम्भप्रळयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू ।
अश्रु वैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः ॥
विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः ।
स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव सागरे ॥
निर्वेदग्लानिशङ्काश्रमधृतिजडताहर्षदैन्यौग्र्यचिन्ता-
त्रासेर्ष्याऽमर्षगर्वस्मृतिमरणमदाः सुप्तिनिद्राविबोधाः ।
व्रीडापस्मारमोहाः समादिरलसताऽऽवेगतर्कावहित्था
व्याध्युन्मादौ विषादोत्सुकचपलयुतास्त्रिंशदेते त्रयश्च ॥
विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आनीयमानः स्वादुत्वं स्थायी भावो रसः स्मृतः ॥

अत्र अवन्तीविषये वत्सराजस्य जाता रतिः, तस्य महाकुलीनतादिभिः उद्दीपनविभावैः उद्दीप्यमाना, सा नष्टा इति श्रुत्वा विषादमरणाध्यवसायादिभिः व्यभिचारिभिः स्तम्भप्रळयादिभिः सात्त्विकैः पुनर्जीवन्त्या(न्ती) दृष्टया अ(दृष्टेत्य)नेन वागारम्भानुभावेन परां पुष्टिं आनीयमाना, शृङ्गाररसतां आपाद्यते । तदिदं रसवत् । रूपबाहुल्ययोगेन विभावानुभावव्यभिचारियोगेन इत्यर्थः ॥ २८०-२८१ ॥

३. रसवतः उदाहरणमाह—मृतेति । ननु इदमपि प्रीत्युदाहरणत्वेन दर्शयितुं युक्तम्; नष्टावन्तीलाभतुष्टवत्सराजस्य प्रीतेः कथं रतिप्रतीतिः इत्याशंक्य आह—प्रागिति । विदुरराजवर्मणोः पुरुषोत्तमभवानीपतिविषया स्नेहवृत्तिः असंप्रयोगविषयत्वात् प्रीतिर्भवति । अत्र तु वत्सराजस्य वासवदत्ताविषया स्नेहवृत्तिः संप्रयोगविषयत्वात् रतिः भवति । रत्यभिधानः एष स्थायी भावः मृतेत्यादिना वागारम्भानुभावेन अनुमीयमानैः हर्षधृतिस्मृतिवितर्कप्रभृतिभिः व्यभिचारिभिः संसृज्यमानः करुणानन्तरां शृङ्गाराख्यां लभते । तेन अन्वितमेतत् रसवत् ॥ २८०-२८१ ॥

निगृह्य केशेष्वाकृष्टा कृष्णा येनाग्रतो मम
सोऽयं दुश्शासनः पापो दृष्टः किं जीवति क्षणम् ॥ २८२ ॥

इत्यारुह्य परां कोटिं क्रोधो रौद्रात्मतां गतः ।
भीमस्य पश्यतः शत्रुमित्येतद्रसवद्वचः ॥ २८३ ॥

१. क्रोधो रौद्ररसस्य स्थायिभावो रौद्रात्मतां गतः रौद्ररसभावेन परिणतः । शत्रु(मि)त्येतद्रसवद्वचः । पूर्ववद्योज्यम् ॥ २८२-२८३ ॥

२. रौद्रं दर्शयति–निगृह्येति । द्रौपदीकेशाकर्षणजनितः क्रोधः स्मृत्यौग्र्यचिन्तादिभिः व्यभिचारिभिः अनेन वागारम्भानुभावेन च पोषं नीयमानः रौद्रतां आपाद्यते ॥ २८२-३ ॥

३. निगृह्येत्यादि । अत्रापि निगृह्येत्यादिना वागारम्भानुभावेन, अनुरूपैः व्यभिचारिभिश्च, संसृज्यमानेन रौद्रात्मतां गतेन क्रोधेन अन्वयात् रसवत् एतत ॥ २८२-३ ॥

अजित्वा सार्णवामुर्वीमनिष्ट्वा विविधैर्मखैः ।
अदत्त्वा चार्थमर्थिभ्यो भवेयं पार्थिवः कथम् ॥ २८४ ॥
इत्युत्साहः प्र(-ह्रष्ट-)कृष्टात्मा तिष्ठन्वीररसात्मना ।
रसवत्त्वं गिरामासां समर्थयितुमीश्वरः ॥ २८५ ॥

१. सागरपर्यन्तां महीं (अजित्वा) राजसूयादिभिर्यागैरनिष्ट्वा, याचकेऽभिलषितमर्थमदत्वा च कथमहं पार्थिवः स्याम् इत्युत्साहप्रकृष्टात् (त्मा)उत्साह(ो)वीररसोत्पत्तौ स्थायी भावः तेन प्रकृष्ट (ष्ट आत्मा यस्य सः। वी)ररसात्मना वीररसतादात्म्येन वर्तमानः कश्चित् क्षत्रियः रसवत्त्वं गिरां तासां अजित्वा सार्णवां महीं इ(त्यादीनां सम्पादयितुं समर्थः) ॥२८४-५॥

२. अजित्वेति। अजित्वा सार्णवां उर्वीमिति समरवीरः ; अनिष्ट्वा विविधैः मखैः इति देवतां उद्दिश्य द्रव्यत्यागः इति दानवीरः ; दीनानाथेभ्यः अर्थं अदत्त्वा इति दयावीरः; इति त्रिविधो वीरो दर्शितः ॥ २८४-५ ॥

३. अजित्वेति । अत्र वसुधाविजयादेरालम्बनविभावात् उत्पन्नः स्थायी उत्साहः, तेजआद्युद्दीपनविभावैः उद्दीप्यमानः, समुत्पन्नेषु वागारम्भानुभावानुमीयमानेषु स्मृतिवितर्कादिषु व्यभिचारिषु निष्पन्नः, वीररससंज्ञया व्यवह्रियते । तेन अन्वितं रसवत् एतत् । अत्र त्रिविधो वीरः प्रतिपाद्यते—अजित्वा सार्णवामुर्वीमित्यनेन युद्धवीरः; अनिष्ट्वेत्यनेन दानवीरः; अदत्त्वेत्यादिना दयावीरश्च। उक्तमर्थमभिधत्ते—इतीति ॥ २८५॥

**यस्याः कुसुमशय्यापि कोमलाङ्ग्या रुजाकरी।**
**साधिशेते कथं तन्वी हुताशनवतीं चिताम्॥ २८६॥**
**इति कारुण्यमुद्रिक्तमलङ्कारतया स्मृतम्।**
**अथापरेऽपि वीभत्सहास्याद्भुतभयानकाः॥ २८७॥**

१. कुसुमास्तरणं शयनमपि यस्या दुःखमुत्पादयति सा देवी (हुताशनवतीं चितां कथमधिशेत इति कारुण्यं शो) का(त) स्थायिनो भावात् आविर्भूतमलङ्कारतया स्मृतमाचार्यैः ॥ २८६ ॥

२. करुणं दर्शयति—**यस्या** इति । चितां आरोपितां स्ववल्लभां दृष्टवतः कस्यचित् मरणजनितः शोकः, तत्सौकुमार्यादिभिः उद्दीपनविभावैः, निर्वेदग्लानिचिन्तादिभिः व्यभिचारिभिः, वागारम्भानुभावेन च निष्पन्नः, करुणरसतां आपाद्यते । कारुण्यमिति शोकः उच्यते । अथापरेऽपीति वक्ष्यमाणेषूदाहरणेषु संक्रमं दर्शयति ॥ २८६-२८७ ॥

३. **यस्याः** इति । आलम्बनविभावभूतात् देवीमरणात् उत्पन्नः शोकः स्थायी भावः, चितानिवेशनहुताशनज्वालादिभिः उद्दीपनविभावैः उद्दीप्यमानः, वागारम्भानुभावानुमेयैः निर्वेददैन्यादिभिः व्यभिचारिभिः संसृज्यमानः, करुण इति ज्ञायते । तादृशेन करुणरसेन अन्वितं रसवत् एतत् । प्रागुक्ताः शृङ्गारवीरकरुणाः; अथ अपरेऽपि बीभत्सहास्याद्भुतभयानकाः । उच्यन्ते इति वाक्यशेषः ॥ २८६-७ ॥

१. ते वा (जुगुप्सातः स्थायिनो भावात्) बीभत्सरसोत्पत्तिः । तां दर्शयति—

**पायंपायं तवारीणां शोणितं पाणिसम्पुटैः ।**
**कौणपाः सह नृत्यन्ति कबन्धैरान्त्रभूषणाः ॥ २८८ ॥**

त्वदरातीनां रुधिरं हस्ताञ्जलिभिः पीत्वा पीत्वा कौणपा वेतालप्रेतपिशाचराक्षसाः आन्त्राणि भूषणानि आभरणानि येषां ते आन्त्रभूषणाः कबन्धैः सह नृत्यन्तीति बीभत्सरसेन रसवद्वचः ॥ २८८ ॥

२. बीभत्सं दर्शयति—पायं पायमिति । अत्र रुधिरपानादिजनिता जुगुप्सा हि स्थायी भावः; स च नासावक्त्रविकूणनादिभिः अनुभावैः, आवेगादिभिः व्यभिचारिभिः, पुष्टः बीभत्सो भवति ॥ २८८ ॥

३. **पायं पाय**मिति । अत्र आलम्बनविभावेभ्यो भूतेभ्यः कस्यचित् रिपुविजयाशंसिनः उत्पन्ना जुगुप्सा स्थायी भावः, शिरश्छेदविगलद्रुधिरधारापरिप्लुतकबन्धनर्तनकौणपान्त्रभूषणशोणितपानादिभिः उद्दीपनविभावैः उद्दीप्यमानः, समुत्पन्नेषु वागारम्भानुमेयेषु भयावेगशङ्कावहित्थादिषु व्यभिचारिषु, उच्यते बीभत्स इति । तेनान्वितं रसवत् एतत् ॥ २८८ ॥

१. हासात् स्थायिनो भावात् हास्यरसोत्पत्तिं दर्शयति—

**इदमम्लानमानाया लग्नं स्तनतटे तव ।**
**छाद्यतामुत्तरीयेण नवं नखपदं सखि ॥ २८९ ॥**

इदमम्लानमानाया इत्यादिनाऽभिमानशालिनीं सखीं काचित् नर्मणा हसतीति हास(स्य) रसवद्वचः ॥ २८९ ॥

२. हास्यमुदाहरति इदमिति । कृतप्रणयकलहां, पूर्वदिने सायन्तनसमये दयितेन पादपतनादिभिः सखीसान्त्वनैश्च कृतेऽपि प्रसादनेऽकृतप्रसादां, प्रियोपभोगचिह्नखपदादिवैकृतवतीं, नायिकां प्रातरालोक्य

जातो हासः स्थायी, स्मितवागारम्भादिभिः अनुभावैः व्यभिचारिभिश्च पुष्टः, हास्यरसो भवति ॥ २८९ ॥

३. इदमिति । अत्र काञ्चित् सखीं, भर्तरि पूर्वं परिगृहीतमानां, तेनैव नवनखपदाङ्कितस्तनीम् आलम्बनविभावभूतामुपाश्रित्य, तस्याः सान्त्वने वितथयत्नायाः सख्याः उत्पन्नो हासः स्थायी भावः, तदीयमानपरिग्रहणादिभिः उद्दीपनविभावैः उद्दीप्यमानः, समुत्पन्नेषु वागारम्भणानुमितेषु शङ्कावहित्थासूयाहर्षगद्गदादिषु व्यभिचारिषु निष्पन्नः, हास्यशब्देन अभिधीयते । तेनान्वितं रसवत् एतत् ॥ २८९ ॥

१. (विस्मयात्स्थायिनो भावात् अद्भुतरसोत्पत्तिं) उदाहरति—

**अंशुकानि प्रवालानि पुष्पं हारादिभूषणम् ।**
**शाखाश्च मन्दिराण्येषां चित्रं नन्दनशाखिनाम् ॥ २९० ॥**

अंशुकानि क्षौमदुकूलचीनपट्टादीनि तान्येव प्रवालानि तथा पुष्पं हारादिभूषणं हारनूपुरादिभूषणमेव पुष्प(म्) । सुधाधवलितप्रासादकाञ्चनवलभीप्रभृतीन्येव शाखाः ये(ए)षां नन्दन(शाखिना)मिन्द्रोद्यानतरूणामिति चित्रमेतत् ॥ २९० ॥

२. अद्भुतं दर्शयति—**अंशुकानीति** । नन्दनशाखिनां प्रवालादीनां अंशुकत्वादिना जनितो विस्मयः स्थायी भावः, साधुवादादिभिः अनुभावैः हर्षवेगधृत्यादिभिः व्यभिचारिभिश्च पुष्टः अद्भुतरसो भवति ॥२९० ॥

३. **अंशुकानीति** । प्रवालपुष्पशाखासम्पत्तिः निजरूपं तरूणाम्; नन्दनशाखिनां पुनः प्रवालादिस्थानेषु अंशुकहारमन्दिराणि । तदेतदाश्चर्यम् । अतश्च एतेभ्यः आलम्बनविभावेभ्यः कस्यचित् देवभूमिं गतस्य उत्पन्नो विस्मयः स्थायी भावः, तदीयावयवदर्शनादिभिः उद्दीपनविभावादिभिः उद्दीप्यमानः, समुत्पन्नेषु वागारम्भानुमितेषु हर्षरोमोद्गमस्वेदगद्गदादिषु

व्यभिचारिषु निष्पद्यमानः, अद्भुतः इत्युच्यते । तत्सम्बन्धात् रसवदेतत् ॥ २९० ॥

१. भयात् स्थायिनो भावात् भयानकरस उत्पद्यते । तेन भया(नकरस)वत्तामुदाहरति–

**इदं मघोनः कुलिशं धारासन्निहितानलम् ।**
**स्मरणं यस्य दैत्यस्त्रीगर्भपाताय कल्पते ॥ २९१ ॥**

१. इदं मघोनो देवराजस्य कुलिशं वज्रमायुधम् । किं भूतम् । धारासु सन्निहितोऽनलोऽग्निर्यस्य तद्धारासन्निहितानलम् । यस्य स्मरणं दैत्यस्त्रीगर्भपाताय कल्पते । स्मरणादेव दा(नवस्त्रीणां)गर्भाः पतन्तीति ॥२९१॥

२. भयानकं दर्शयति इदमिति । दैत्यघातकमघवत्कुलिशस्मरणजनितं दैत्यस्त्रीणां भयं स्थायी भावः, सर्वाङ्गवेपथुस्वेदशोषादिभिः अनुभावैः दैन्यसंभ्रमसंमोहनादिभिः व्यभिचारिभिश्च पुष्टः, भयानकरसो भवति ॥२९१

३. इदमिति । अत्र महेन्द्रकुलिशधारासन्निहितानलात् आलम्बनविभावात् स्मर्यमाणादपि दैत्यस्त्रीणामुत्पन्नं भयं स्थायी भावः, तदीयावयवदर्शनादिभिः उद्दीपनविभावैः उद्दीप्यमानः, गर्भपातादिभिः अनुभावैः तदनुमितस्तम्भवैवर्ण्यवेपथुप्रभृतिभिः व्यभिचारिभिः संसृज्यमानः, भयानकरसरूपेण निष्पद्यते । तत्सम्बन्धात् रसवदेतत् ॥ २९१ ॥

१. ननु च माधुर्यं वैदर्भमार्गावसरे प्रतिपादितमेव । तत् किमर्थं पुनरिहोच्यत इत्याशंक्याह–

**वाक्यस्याग्राम्यतायोनिर्माधुर्ये दर्शितो रसः ।**
**इह त्वष्टरसायत्ता रसवत्ता स्मृता गिराम् ॥ २९२ ॥**

वाच्यस्य वस (न ग्राम्यमग्राम्यम्) ता समता (तस्य भावोऽग्राम्यता) सैव योनिरिव योनिरुत्पत्तिस्थानं यस्याः सा (यस्य सः) अग्राम्यता-

योनिः माधुर्ये वैदर्भमार्गप्रा(णभूते गु)णे दर्शि(तो) रसः पूर्वम् । यदुक्तम्—

'मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः ।
येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः ॥
कामं सर्वोऽप्यलङ्कारो रसमर्थे निषिञ्चति ।
तथाऽप्यग्राम्यतैवैनं भारं वहति भूयसा ॥' २९२ ॥

२. एवं शृङ्गारादिभिः अष्टभी रसैः पूर्वदर्शितेन च अग्राम्यतारूपेण रसेन नवधा रसवत्त्वम् इति रसवदलङ्कारं उपसंहरति **वाक्यस्येति** ॥ २९२ ॥

३. **वाक्यस्येति** । माधुर्यगुणे प्रदर्शितः शब्दार्थयोः अग्राम्यतया जातः रसः वाक्यस्य भवति । अलङ्कारतया निर्दिष्टं रसवत्त्वं अष्टरसायत्तमेव ॥ २९२ ॥

इति रसवच्चक्रम् ॥

---

१. ऊर्जस्व्युदाहरति—

**अपकर्ताहमस्मीति हृदि ते मा स्म भूद्भयम् ।**
**विमुखेषु न मे खड्गः प्रहर्तुं जातु वाञ्छति ॥ २९३ ॥**

**इति मुक्तः परो युद्धे निरुद्धो दर्पशालिना ।**
**पुंसा केनापि तज्ज्ञेयमूर्जस्वीत्येवमादिकम् ॥ २९४ ॥**

कुतो भयं ते माभूत्,यतो विमुखेषु संग्रामान्निवृत्तेषु न (मे)....हुः (खड्गः)प्रहर्तुं जातु कदाचित् वाञ्छति इति मुक्तः परो रिपुर्युद्धेनिरुद्धः केनापि दर्पशालिना पुंसा तज्ज्ञेयमूर्जस्वीत्येवमादिकमन्यदपि रूढाहङ्कारमिति॥

२. ऊर्जस्वि दर्शयति—**अपकर्तेति** । एतत् व्याचष्टे—**एवमिति** । ऊर्जस्वि इत्येतदलङ्कारः गर्वस्थायिभावः उद्धतरस इति, प्रेयोरसः

प्रीतिस्थायिभावः प्रेयान् अलङ्कार इति, केचित् कथयन्ति। तेन रसात्मकत्वेन 'युक्तोत्कर्षं च तत् त्रयम्' इत्युक्तम् ॥ २९४ ॥

३. ऊर्जस्विन उदाहरणमाह—अपकर्तेति। अत्र मया अस्य अपकारः क्रियते इति यत्ते चेतसि भयं तत् मा भूत्, मम खड्गः परेषु पराङ्मुखेषु न कदाचिदपि प्रहर्तुं उत्सहते; इति सर्वदैव रूढः अहङ्कारः प्रतीयते। तेन अन्वितं ऊर्जस्वि इत्युच्यते। एवमादिकं ईदृशं अन्यदपि द्रष्टव्यं इति यावत् ॥ २९४ ॥

इत्यूर्जस्वि

——

१. पर्यायोक्तस्य लक्षणमाह—

**अर्थमिष्टमनाख्याय साक्षात्तस्यैव सिद्धये।**
**यत्प्रकारान्तराख्यानं पर्यायोक्तं तदिष्यते ॥ २९५ ॥**

अभिलषितं सर्वं साक्षाद्वाचकेन शब्देनानाख्याय अनभिधाय तस्यैवेष्टस्यार्थस्य सिद्धये यत् प्रकारान्तरस्याख्यानं वचनं तत् पर्यायेणान्यवस्तुप्रतिपादनद्वारेणोक्तं तदिष्यते ॥ २९५ ॥

२. पर्यायोक्तं लक्षयति—अर्थमिति॥ २९५ ॥

३. अर्थमिति। प्रकारान्तराख्यानं व्याजकथनम् ॥ २९५ ॥

**दशत्यसौ परभृतः सहकारस्य मञ्जरीम्।**
**तमहं वारयिष्यामि युवाभ्यां स्वैरमास्यताम् ॥ २९६ ॥**

**सङ्गमय्य सखीं यूना सङ्केते तद्रतोत्सवम्।**
**निर्वर्तयितुमिच्छन्त्या कयाऽप्यपसृतं ततः ॥ २९७ ॥**

१. दशत्यसौ परभृतः कोकिलः सहकारस्याम्रतरोर्मञ्जरीम्। तमहं परभृतं वारयिष्यामि। युवाभ्यां स्वैरमास्यतां

सङ्गमस्य संयोज्य सखीं यूना सह सङ्केते समयस्थाने उद्यानादौ तयोः रतोत्सवं निर्वर्तयितुमिच्छन्त्या (कयाऽप्यप)सृतं तत्सङ्केतस्थानादिति ॥ २९६-७ ॥

२. उदाहरति—दशतीति। एतत् व्याचष्टे—सङ्गमय्येति ॥ २९७॥

३. उदाहरति—दशतीति। सङ्गमय्येति—नायकरत्युत्सवलक्षणं स्वाभिमतं अर्थं अनाचक्षाणया सख्या तत्सिद्धये सहकारमञ्जरीकबलनोन्मुखपरभृतनिवारणव्याजकथनेन सङ्केतगृहात् अपसृतम् ॥ २९६-२९७ ॥

इति पर्यायोक्तम् ॥

---

१. समाहि(तलक्षण)माह—

**किञ्चिदारभमाणस्य कार्यं दैववशात् पुनः ।**
**तत्साधनसमापत्तिर्या तदाहुः समाहितम् ॥ २९८ ॥**

किञ्चित्कार्यमारभमाणस्य दैववशाददृष्टबलात्अदृष्टवशात(?)तत्कार्यकरणसमर्थं यत्साधनं हेतुस्तस्य या समापत्तिरुपढौकनं तत्समाहितमाहुराचार्याः ॥ २९८ ॥

२. समाहितं लक्षयति—किञ्चिदिति ॥ २९८ ॥

३. समाहितालङ्कारमाह—किञ्चिदिति। साधनसमापत्तिः सहायावाप्तिः ॥ २९८ ॥

**मानमस्या निराकर्तुं पादयोर्मे पतिष्य-नमस्य-तः ।**
**उपकाराय दिष्ट्यैतदुदीर्णं घनगर्जितम् ॥ २९९ ॥**

१. ननु पादौ नमस्यत इति द्वितीयया कर्मणि भवितव्यम् । तत् कथं पादयोः । न चौपपदिकी कर्मणि षष्ठ्यस्ति । न च क्रुधोगे

विहितोऽप्यस्ति । लादेशत्वाच्छतुः 'न लोकाव्ययनिष्ठाखलर्थतृना' मिति प्रतिषेधात् । अत्रोच्यते । नमस्यत इति वाक्यार्थे पदवचनमेतदित्यदोषः । नमस्यतः नमस्कारं कुर्वत इत्यर्थः । दृष्टं च वाक्यार्थे पदवचनम् । यथा जीवन्ति प्राणान् धारयन्तीति । ततः प्रातिपदिकार्थव्यतिरेकात् भवत्येव शैषिकी षष्ठीत्यनवद्यम् । मानिनीमानमपनिनीषोरनुकूलं घनगर्जितम् । तदुक्तं कैश्चित्—

तान्येतानि शिखण्डिताण्डवगुरूनम्भोधराडम्बरे [रैः]
तत्पानानि दिनानि[संस्त्यानानि] नूनममृतस्यन[न्दी]नि वन्दामहे ।
उद्गाढा नवनीलनीरजदृशामत्यन्तमायामिनो
भिद्यन्ते स्वयमेव येषु विषमा मानग्रहग्रन्थयः' ॥ २९९ ॥

२. तत् उदाहरति—**मान**मिति ॥ २९९ ॥

३. उदाहरति—**मान**मिति। माननिराकरणकालोत्पन्नस्य मेघगर्जितस्य मानविध्वंसे सहकारित्वात् इयं दैवकृता सहायसम्पत्तिः इति समाहितम् ॥ २९९ ॥

इति समाहितम् ॥

---

१. उदात्तलक्षणमाह—

**आशयस्य विभूतेर्वा यन्महत्त्वमनुत्तमम् ।**
**उदात्तं नाम तं प्राहुरलङ्कारं मनीषिणः ॥ ३०० ॥**

आशयस्य चित्तस्य विभूतेरैश्वर्यस्य वाऽविद्यमानोत्तरमनन्याधिकं यन्महत्त्वं तदुदात्ताभिधान[मलङ्कारमा]हुः ॥ ३०० ॥

२. उदात्तं लक्षयति—**आशयस्ये**ति। आशयस्य मनसः, विभूतेः ऐश्वर्यस्य वा, यत् अनुत्तमं अत्यतिशयं महत्त्वं तत् उदात्तम् ॥ ३०० ॥

३. उदात्तालङ्कारमाह—आशयस्येति । आशयः चित्तवृत्तिः । चित्तगतं सम्पद्गतं वा (यत्) निस्सीमोत्कर्षं महत्त्वं तत् उदात्तम् ॥२००॥

गुरोः शासनमत्येतुं न शशाक स राघवः ।
यो रावणशिरश्छेदकार्यभारेऽप्यविक्लवः ॥ ३०१ ॥

१. गुरोर्दशरथस्य पितुः शासनं आज्ञामत्येतुमुल्लङ्घयितुं स राघवो रामो न शशाक । कथंभूत इत्याह—यो....ऽविक्लवः । यदार्य(यः ईदृश)स्स धीर एव ॥ ३०१ ॥

२. मानसोदात्तं दर्शयति—गुरोरिति । मातुः सपत्न्याः वचनमात्रात् देवेन्द्रपदोपमं राज्यं त्यक्तवान् इति मानसौदात्त्यम् । गुरुवचनं अत्येतुं औदात्त्यादेव न शशाक इत्येतत् प्रकटयति—यः इति ॥३०१॥

३. उदाहरणम्—गुरोरिति । त्रैलोक्यविजेतृ रावणस्य विजयक्षमोऽपि पितृवचनपरिपालनपरः तृणाय राज्यं मन्यमानो वनं गतः इति आशयस्य महत्त्वम् ॥ ३०१ ॥

रत्नभित्तिषु संक्रान्तैः प्रतिबिम्बशतैर्वृतः ।
ज्ञातो लङ्केश्वरः कृच्छ्रादाञ्जनेयेन तत्त्वतः ॥ ३०२ ॥

१. वृतो वेष्टितो लङ्केश्वरो दशाननः अञ्जनाया अपत्यमाञ्जनेयः । तेन हनुमता कृच्छ्रात् ज्ञातस्तत्त्वतः एतानि प्रतिबिम्बानि अयं तु रावण इति ॥

२. रत्नेति । अनवधिकायां विभूताविव, भवनेषु रत्नभित्तयः संभवन्ति, इति विभूतेः महत्त्वं अनेन प्रतिपाद्यते ॥ ३०२ ॥

पूर्वत्राशयमाहात्म्यमत्राभ्युदयगौरवम् ।
सुव्यञ्जितमिति व्यक्तमुदात्तद्वयमप्यदः ॥ ३०३ ॥

१. पूर्वत्र 'गुरोः शासनमत्येतु'मित्यादौ आशयस्य माहात्म्यं मनसो

महत्त्वं अत्राभ्युदयगौरवं रत्नभित्तिषु संक्रान्तैरित्यत्र रावणेश्वरस्य....गौरवं सुव्यञ्जितं प्रकटीकृतमिति व्यक्तमुदात्तद्वयमप्युदः उदाहृतम् ॥ ३०३ ॥

३. श्लोकद्वयमेतद्याकरोति पूर्वेति ॥ ३०३ ॥

इत्युदात्तम् ॥

---

१. अपह्नुतिलक्षणमाह—

**अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थदर्शनम् ।**

अपह्नुतिरिति लक्ष्यनिर्देशः । अपह्नुत्य किञ्चिदन्यार्थदर्शनमिति लक्षणनिर्देशः । किञ्चित्प्रसिद्धं वस्तु अपह्नुत्य अपलप्य ततोऽन्यस्यार्थस्य यद्दर्शनं प्रकाशनं साऽपह्नुतिरलंक्रिया ॥

१. तामुदाहरति—

**न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणामिति ॥ ३०४ ॥**

स्मरबाणानां पञ्चत्वसंख्यामपह्नुत्य सहस्रसंख्याप्रदर्शनात् (अपह्नुतिः) ॥ ३०४ ॥

२. अपह्नुतिं लक्षयति—अपह्नुतिरिति । साधर्म्यापह्नुतिः वैधर्म्यापह्नुतिः इति अपह्नुतिः द्वेधा । तत्र साधर्म्यापह्नुतिः नियतविषयः अनियत विषयश्च इति द्विधा । तत्र अनियतविषयं दर्शयति—नेति ॥ ३०४ ॥

३. अपह्नुत्यलङ्कारमाह—अपह्नुतिरिति । लोकप्रसिद्धं किञ्चिद् अपोह्य लोकप्रसिद्धस्य कस्यचिदर्थस्य प्रकाशनम् अपह्नुतिः इति यावत् । उदाहरति—नेति । कामस्य हि उन्मादन-तापन-शोषण-स्तम्भन-संमोहनात्मानः सायकाः पञ्चैव इति लोकप्रसिद्धम् । तेषां पञ्चसंख्याविशिष्टतया [?] प्रकाशनात् असौ संख्यापह्नुतिः ॥ ३०४ ॥

**चन्दनं चन्द्रिका मन्दो गन्धवाहश्च दक्षिणः।**
**सेयमग्निमयी सृष्टिर्मयि शीता परान् प्रति ॥ ३०५ ॥**

**शैशिर्यमभ्युपेत्यैव परेष्वात्मनि कामिना।**
**औष्ण्यप्रकाशनात्तस्य सैषा विषयनिह्नुतिः ॥ ३०६ ॥**

१. चन्दनमित्यादिका सेयमग्निमयी सृष्टिः शीता किल परान् प्रति। शैशिर्यमभ्युपेत्यैव चन्दनादीनां परेषु जनेषु सखिषु अदृष्टविरहज्वरसन्तापेषु आत्मनि पुनः कामिना विरहव्यथातदथि[कदर्थि]तेनौष्ण्यप्रदर्शनात् तस्य चन्दनादेः सैषा विषयनिह्नुतिरात्मविषये चन्दनादीनां यच्छिशिरत्वं तस्यापह्नवात् ॥ ३०५-३०६ ॥

२. नियतविषयं दर्शयति—**चन्दन**मिति। परेषु शैशिर्यमभ्युपेत्य विरहिणा आत्मनि औष्ण्यप्रदर्शनात् विषयस्यैव निह्नुतिरिति नियतविषया निह्नुतिः ॥ ३०५ ॥

३. अपह्नुतिभेदं दर्शयति—**चन्दन**मिति। चन्दनादीनां शिशिरगुणः अपह्नूयते कामेन [मिना]; अग्निमयी सृष्टिः इति अन्यार्थश्च [?] क्रियते। परान् प्रति शीता किल इत्युक्त्वा स्वस्मिन् विषये तेषां औष्ण्यप्रकाशनात् विषयनिह्नुतिरियम् ॥ ३०५ ॥

**अमृतस्यन्दिकिरणश्चन्द्रमा नाम नामतः।**
**अन्य एवायमर्थात्मा विषनिष्यन्दिदीधितिः ॥ ३०७ ॥**

**इति चन्द्रत्वमेवेन्दौ निह्नुत्यार्थान्तरात्मता।**
**उक्ता स्मरार्तेनेत्येषा स्वरूपापह्नुतिर्मता ॥ ३०८ ॥**

१. अमृतं स्यन्दन्तेऽमृतस्यन्दिनः किरणा यस्य स किल नाम चन्द्रमाः इति नोऽस्माकं मतः। अन्य एवायमर्थात्मा चन्द्रादन्य एवायमर्थः। अर्थ एव अर्थात्मा अर्थस्वभावो वा। किं भूतः। विषं निष्यन्दन्ते विषनिष्यन्दिन्यो दीधितयो यस्यासौ विषनिष्यन्ददीधितिः इत्येषा स्वरूपापह्नुति-

मता । चन्द्रस्वरूपममृतस्यन्दिकिरणत्वम् । त....प्याहि [तथा हि चदि]धात्वर्थः । 'चदी दीप्तिह्लादनयोः' । दीप्तिं ह्लादनं च यः करोति स चन्द्रः । अयं पुनः [विं]षमुत्सृजति । तेनायं चन्द्रो न भवतीति स्मरार्तेनोक्तमिति ॥ ॥ ३०७-८ ॥

२. वैधर्म्यापह्नुतिश्च द्वेधा—विरुद्धकार्यकरणात् सादृश्याच्च । तत्र विरुद्धकार्यकरणवैधर्म्यापह्नुतिं दर्शयति—अमृतेति ॥ ३०७-३०८ ॥

३. स्वरूपापह्नुतेरुदाहरणमाह—अमृतेति । व्याचष्टे—इतीति । विषयस्वरूपापह्नवयोः अयं भेदः । चन्दनं चन्द्रिकेत्यत्र चन्दनादिगतस्य स्पर्शेन्द्रियविषयभूतस्य शैत्यस्य कामेन[?] निह्नवः; अन्यत्र सुधास्यन्दिकिरणत्वं नाम चन्द्रमसः स्वरूपं अपह्नुतम् इति स्वरूपापह्नवः ॥ ३०७-३०८ ॥

**उपमापह्नुतिः पूर्वमुपमास्वेव दर्शिता ।**
**इत्यपह्नुतिभेदानां लक्ष्यो लक्ष्येषु विस्तरः ॥ ३०९ ॥**

१. [उप]मापह्नुतिरित्यादि सुबोधम् ॥ ३०९ ॥

२. सादृश्यवैधर्म्यापह्नुतिः पूर्वमेव रूपके दर्शिता इत्याह—उपमेति । उपमाऽपह्नुतिः सादृश्यापह्नुतिः । उपमासु रूपकेषु इत्यर्थः; उपमारूपकयोः अनतिभेदात् । अपह्नुतिमुपसंहरति—इतीति ॥ ३०९ ॥

३. उपमेति । उपमायाः अपह्नुतिः उपमापह्नुतिः ; लुप्तोपमाया द्योतकादेः अपह्नवः इत्यभिप्रायः । शशाङ्कवदने इत्यत्र द्योतकसामान्यलोपः दृष्ट एव । अपह्नुतिभेदाः बहवो दृश्यन्ते, ते लक्ष्येषु द्रष्टव्याः इत्याह इतीति ॥ ३०९ ॥

इत्यपह्नुतिः ॥

---

१. श्लिष्टलक्षणमाह–

**श्लिष्टमिष्टमनेकार्थमेकरूपान्वितं वचः।**
**तदभिन्नपदं भिन्नपदप्रायमिति द्विधा ॥ ३१० ॥**

श्लिष्टमिष्टमिति लक्षण[क्ष्य]मनूद्यानेकार्थमिति तस्य लक्षणं विधीयते [?]अनेकार्थमेकरूपान्वितं यद्वचस्तच्छ्लिष्टम् । अभिन्नानि पदानि यस्य तदभिन्नपदं अखण्डपदमेव द्व्यर्थम् । यथा राजा राजेत्येतत्पदमखण्डमेव नृपे चन्द्रे च वर्तते । भिन्ने भिन्नानि वा पदानि पर्या[प्रायो] यस्य तद्भिन्नपदप्रायमिति द्विधा द्विप्रकारं भवति श्लिष्टम् ॥ ३१० ॥

२. श्लिष्टं लक्षयति श्लिष्टमिति ॥ ३१० ॥

३. श्लेषालङ्कारमाह श्लिष्टमिति । समानाकारम् अनेकार्थं वाक्यं श्लिष्टालङ्कारत्वेन अभिप्रेतम् । तदभिन्नेति— यत्र एकरूपेण पदेन अर्थद्वयं प्रतिपाद्यते तत् अभिन्नपदम्; यत्र भिन्नरूपेण पदेन अर्थद्वयप्रतिपत्तिः तत् भिन्नपदप्रायम् । यस्मिन् वाक्योच्चारणकाले पदं प्रतीयमानेन एकाकारेण अर्थद्वयं प्रतिपादयति तदभिन्नपदम् ; यत्र तु पदं वाक्योच्चारणकाले प्रतीयमानाकारान्तरेणैव अर्थान्तरं प्रतिपादयति तत् भिन्नपदप्रायम् ; इत्यर्थः ॥ ३१० ॥

१. तदुदाहरणैः स्पष्टयति–

**असावुदयमारूढः कान्तिमान् रक्तमण्डलः।**
**राजा हरति लोकस्य हृदयं मृदुभिः करैः ॥ ३११ ॥**

उदयपर्वतमारूढः उदितः कान्तिमान् दीप्तिमान् रक्तं लोहितं मण्डलं वृत्तं संस्थानं यस्यासौ रक्तमण्डलः राजा चन्द्रः लोकस्य हृदयं मृदुभिः सुकुमारैः शिशिरैः किरणैर्हरति सुखयति । द्वितीयोऽर्थः । राजा नृपः लोकस्य चतुर्वर्णाश्रमलक्षणस्य हृदयं हरति । कथंभूत इत्याह । उदयो

ऽभ्युदयः सम्राज्ञा राज्यावाप्तिः तमुदयमारूढःकान्तिमान् दीप्तिरछविः प्रतापो वा दीप्तिः तद्वान् संरक्तमनुरक्तं मण्डलं पृथिवी अमात्यादयः प्रकृतयश्च यस्यासौ रक्तमण्डलः अनुरक्तप्रकृतिः मृदुभिः करैः उचितादानैः धान्यषड्भागपण्यसदृशभागहिरण्यभागधेयैरित्यभिन्नपदश्लेषः । उदयादिपदैरभिन्नैः नृपचन्द्रमसोरभिधानात् ॥ ३११ ॥

२. अभिन्नपदं दर्शयति–असाविति । उदयमारूढः ऐश्वर्यं प्राप्तः कान्तिमान् प्रभाववान् रक्तमण्डलः अनुरक्तलोकः असौ राजा नृपतिः मृदुभिः लघुभिः षष्ठांशरूपैः करैः सर्वस्य हृदयं हरतीति एकोऽर्थः । तमेव चन्द्रपरेण अर्थान्तरेण साधयति, उदयपर्वतमारूढः प्रभावान् उदयानुरक्तबिम्बः चन्द्रः शीतलैः करैः सर्वस्य हृदयं हरति इति ॥ ३११ ॥

३. उदाहरति–असाविति । उदयम् उदयगिरिं सम्पदं च, आरूढः कृतारोहणः प्राप्तश्च, कान्तिमान् प्रभाववान् शोभावान्, रक्तमण्डलः लोहितबिम्बःअनुरक्तराष्ट्रश्च, राजा चन्द्रः भूपश्च, मृदुभिः कोमलैः, स्वल्पैश्च, करैः रश्मिभिः बलिभिश्च । अर्थद्वयम् अभिन्नैरेव पदैः समर्थितमिति अभिन्नपदमेतत् ॥ ३११ ॥

१. भिन्नपदश्लेषमुदाहरति–

**दोषाकरेण सम्बध्नन्नक्षत्रपथवर्तिना ।**
**राज्ञा प्रदोषो मामित्थमप्रियं किन्न बाधते ॥ ३१२ ॥**

दोषा रात्रिः तत्करोतीति दोषाकरो रजनीकरस्तेन सम्बध्नन् सङ्घटमानः नक्षत्राणां पन्था मार्गः आकाशं नक्षत्रपथस्तस्मिन् वर्तत इति नक्षत्रपथवर्ती (.... ) यद्वा क्षत्रपथे न वर्तत इति अक्षत्रपथवर्तीति क्रियाप्रतिषेधः । समासस्तु अश्राद्धभोज्यादिवत् द्रष्टव्यः । तेन राज्ञा नृपेण क्षत्रधर्मादपसृतेनायं सम्बध्नन् प्रकृष्टदोषो यस्यासौ प्रदोषो जनो मां अप्रियमनिष्टं किं न बाधत इति भिन्नपदं दोषाकरादिपदानां भिन्नपदत्वात् ॥ ३१२ ॥

२. भिन्नप्रायं दर्शयति दोषेति । प्रदोषः रजनीप्रथमयामः । नक्षत्रपथवर्तिना गगनचारिणा, दोषाकरेण रजनीकरेण, राज्ञा चन्द्रेण, सम्बध्नन्, अप्रियं प्रियारहितं मां बाधते इत्येकोऽर्थः । कश्चित् क्षत्रपथातिलङ्घिना दोषाणां आकरभूतेन नृपेण सम्बद्धः सन्, अप्रियं विद्विषं मां किं न बाधते? बाधत एव ॥ ३१२ ॥

३. दोषेति । दोषाकरेण दोषाणाम् आकरेण, दोषा नाम रजनी, तां कुर्वता; सम्बध्नन् अन्तरङ्गत्वेन वर्तमानः संयुक्तश्च; नक्षत्रपथवर्तिना तारापथगामिना क्षत्रियमार्गातिलङ्घिना च; राज्ञा चन्द्रेण नरेन्द्रेण च; प्रदोषः प्रकृष्टदोषः रजनीमुखं च; अप्रियम् अनिष्टं प्रियारहितं च। किं न बाधते—किमिति प्रतिषेधे—बाधत एवेत्यर्थः । वाक्योच्चारणसमये प्रतीयमानादाकारान्तरमाश्रितैः पदैः अर्थान्तरप्रतिपत्तिः इति भिन्नपदप्रायमेतत् । प्रायशब्दस्य सर्वेषु पदेषु नैष विधिः इत्यर्थः ॥ ३१२ ॥

उपमारूपकाक्षेपव्यतिरेकादिगोचराः ।
प्रागेव दर्शिताः श्लेषा दर्श्यन्ते केचनापरे ॥ ३१३ ॥

१. श्लेषोपमा श्लिष्टरूपकं श्लेषाक्षेपः श्लेषव्यतिरेकः इत्यादिविषयाः प्रागेव तेषु तेष्वलङ्कारावसरेषु दर्शिताः श्लेषाः। इदानीं दश्य(दर्श्य)न्ते केचनापरे ॥ ३१३ ॥

२. उपमेति । उपमाद्यलङ्कारेषु तत्तदलङ्काराङ्गतया श्लेषाः दर्शिताः। इदानीं अन्ये श्लेषप्रकाराः दर्श्यन्ते ॥ ३१३ ॥

३. उपमेति । सुबोधमेतत् ॥ ३१३ ॥

१. तानुद्दिशति—

अस्त्यभिन्नक्रियः कश्चिदविरुद्धक्रियोऽपरः ।
विरुद्धकर्मा चास्त्यन्यः श्लेषो नियमवानपि ॥ ३१४ ॥

नियमाक्षेपरूपोक्तिरविरोधी विरोध्यपि ।
तेषां निदर्शनेष्वेव रूपमाविर्भविष्यति ॥ ३१५ ॥

अति(स्ति) श्लेषः कश्चित् । अभिन्ना क्रिया यस्य सः अभिन्नक्रियः । कस्ताव(कश्चि)त्(प्रथमः) । अविरुद्धा परस्पराबाधिनी क्रिया यस्येत्यविरुद्धक्रियः । अपरो द्वितीयः । विरुद्धं कर्मास्येति विरुद्धकर्मा । कर्म क्रियोच्यते । विरुद्धक्रियस्तृतीयोऽप्यस्ति । तथाऽतिप्रसक्तस्य विधि(:) दुःख(?)प्रतिषेधफलो नियमः सोऽस्यास्तीति नियमवान् चतुर्थोऽस्ति । नियमः उक्तलक्षणस्तस्य आक्षेपो निषेधः । स रूपं यस्याः सा नियमाक्षेपरूपोक्तिः अनियमवानित्यर्थः । स च पञ्चमोऽस्ति । विरोधोऽस्यास्तीति विरोधी न विरोधी अविरोधी षष्ठः । तथा विरोधो विप्रतिषेधः सोऽस्यास्तीति विरोधी । सोऽप्यस्ति सप्तमः । तेषामभिन्नक्रियादीनां सप्तानामपि श्लेषाणां निदर्शनेषूदाहरणेष्विव रूपमाविर्भविष्यति ॥ ३१४-३१५ ॥

२. तानेव प्रकारान् उद्दिशति—अस्तीति । तेषां नामान्येव लक्षणानि ॥ ३१४-३१५ ॥

१. तत्राभिन्नक्रियमुदाहरति—

स्निग्धाः स्वभावमधुराः शंसन्त्यो रागमुल्बणम् ।
दशो दूत्यश्च कर्षन्ति कान्ताभिः प्रेषिताः प्रियान् ॥ ३१६ ॥

दशां दूतीनां च प्रियाकर्षणमभिन्नक्रियेत्यभिन्नक्रियः । शेषमृजु ॥

२. अभिन्नक्रियमुदाहरति—स्निग्धा इति । स्निग्धाः शीतलाः प्रेमवत्यश्च, स्वभावमधुराः प्रसन्ना मनोहराश्च, उल्बणं रागं शंसन्त्यः सूचयन्त्यः कथयन्त्यश्च, प्रेषिताः अभिमुखप्रेरिता गच्छेति चोदिताश्च । दशां दूतीनां च कर्षन्तीति एकक्रियायोगात् अभिन्नक्रियत्वम् ॥ ३१६ ॥

३. अभिन्नक्रियो यथा—अत्र कर्षन्तीति एकस्यां क्रियायां दशां दूतीनां च एकाकारपदविशेषितानां आवेशात् अभिन्नक्रियो नाम श्लेषविशेषः ॥

१. अविरुद्धक्रियमुदाहरति—

**मधुरा रागवर्धिन्यः कोमलाः कोकिलागिरः।**
**आकर्ण्यन्ते मदकलाः श्लिष्यन्ते चासितेक्षणाः॥ ३१७॥**

मधुरा रागवर्धिन्यः कोमलाः कोकिलानां गिरः मदकलाः आकर्ण्यन्ते। तथा श्लिष्यन्ते चासितेक्षणाः कामिन्यः। कथंभूता इत्याह—मधुराः माधुर्यगुणयुक्ताः रागवर्धनशीलाः कोमलाः अपरुषाः मदेन कला व्याप्ताः कोकिलानामिव गीश्शब्दो यासां ताः कोकिलागिर इति कोकिलगिरामसितेक्षणानां चाविरुद्धे आकर्णनालिङ्गने क्रिये इत्यविरुद्धक्रियः॥

२. अविरुद्धक्रियाद्वयं दर्शयति—**मधुरा** इति। मधुराः अतिसुभगाः, रागवर्धिन्यः स्मरोद्दीपनकर्यः; कोमलाः मृदवः, असितेक्षणाः निश्चलीकृतेक्षणाः, कोकिलानां गिरः आकर्ण्यन्ते। मधुराः मनोहराः, रागवर्धिन्यः स्वप्रेम्णा रागोद्दीपिन्यः, कोमलाः मृद्वङ्ग्यः, कोकिलासदृशगिरः असितेक्षणाः तरुण्यः आश्लिष्यन्ते। आकर्ण्यन्ते श्लिष्यन्ते इति क्रिये अविरुद्धे॥ ३१७॥

३. भिन्नक्रियो यथा-**मधुरा** इति। अत्र आकर्ण्यन्ते श्लिष्यन्ते च इति क्रियापदद्वयस्य प्राधान्यतः समुच्चयेन उपात्तस्य मधुराः इत्यादिश्लिष्टपदैः कोकिलागिरः इति असितेक्षणाः इत्यपि विशेष्यैकपदवर्जं पर्यायतः सम्बन्धो भवतीति भिन्नक्रियो नाम श्लेषविशेषः॥ ३१७॥

१. विरुद्धक्रियमुदाहरति—

**रागमादर्शयन्नेष वारुणीयोगवर्धितम्।**
**तिरो(परा)भवति घर्मांशुरङ्गजस्तु विजृम्भते॥ ३१८॥**

एष घर्मांशुरादित्यः पराभवमिति (मेति। अथ वा पराभवति) तिरोधत्ते अस्तमुपयाति। किं कुर्वन् रागं रक्ततामादर्शयन्। पराभवविजृम्भणक्रिययोर्विरुद्धत्वात् विरुद्धकर्मा॥ ३१८॥

२. विरुद्धक्रियमुदाहरति—रागमिति । वारुणीयोगवर्धितं प्रतीचीसम्बन्धवर्धितं, रागं लौहित्यं, आदर्शयन् घर्मांशुः तिरोभवति । तस्मिन् काले वारुणीयोगवर्धितं मधुपानवर्धितं, रागं रतेषु इच्छाम्, आदर्शयन् जनयन्, अङ्गजो विजृम्भते । तिरोभवति विजृम्भते इति क्रिये विरुद्धे ॥ ३१८ ॥

३. विरुद्धकर्मा यथा— रागमिति । अत्र विरुद्धक्रियत्वं नाम वारुणीयोगवर्धितस्य रागस्य प्रदर्शने तुल्येऽपि, सूर्यलक्षणस्य वस्तुनः तिरोभवनं स्मरलक्षणस्य तु विजृम्भणम्, इति विरुद्धस्य क्रियाद्वयस्य दर्शनात् विरुद्धकर्मा नाम श्लेषविशेषः । रागो वर्णविशेषः कामश्च, वारुणी दिक् सुरा च ॥ ३१८ ॥

१. नियमवन्तं श्लेषमुदाहरति—

**निस्त्रिंशत्वमसावेव धनुष्येवास्य वक्रता ।**
**शरेष्वेव नरेन्द्रस्य मार्गणत्वञ्च वर्तते ॥ ३१९ ॥**

खड्ग एवास्य राज्ञो निस्त्रिंशत्वं नान्यत्र ; निस्त्रिंशः क्रूर उच्यते ; धनुष्येव वक्रता नान्यत्र ; वक्रस्वभावता कुटिलता । शरेष्वेव मार्गणत्वं नान्यत्र ; मार्गणत्वं याचकत्वं व्यवस्थितमिति नियमवान् श्लेषः ॥ ३१९ ॥

२. नियमश्लेषं दर्शयति—निस्त्रिंशत्वमिति । अस्य नरेन्द्रस्य असावेव निस्त्रिंशत्वं न परिजने ; निस्त्रिंशत्वं क्रूरत्वम् । धनुष्येव वक्रता अनृजुत्वं न मानसे कौटिल्यम् । शरेष्वेव मार्गणत्वं न वाचि फलार्थयाचनम् । निस्त्रिंशत्वादीनाम् अस्यादावेव इति....नियमश्लेषत्वम् ॥३१९॥

३. नियमवदुदाहरणम् निस्त्रिंशत्वमिति । अत्र निस्त्रिंशतादि चित्तादिविषयान्तरात् निवर्त्य खड्गादावेव स्थापितम् इति नियमवान् नाम

श्लेषविशेषः । निस्त्रिंशत्वं मनस्तैक्ष्ण्यम् अन्यत्र कृपाणता । वक्रता अनार्जवं कुण्डलितत्वं च। मार्गणत्वं याचकत्वं सायकत्वञ्च ॥ ३१९ ॥

१. नियमाक्षेपरूपोक्तिमुदाहरति—

**पद्मानामेव दण्डेषु कण्टकस्त्वयि रक्षति।**
**अथवा दृश्यते रागिमिथुनालिङ्गनेष्वपि ॥ ३२० ॥**

पद्मानामेव नालेषु कण्टकस्त्वयि रक्षति । नान्यत्र राजाराजयोः(?) कण्टकाः सन्तीति नियमः तस्याक्षेपोऽथवा दृश्यते । रागिमिथुनालिङ्गनेष्वपि कण्टको रोमहर्ष इति नियमनिषेधा(त्) नियमाक्षेपरूपोक्तिः श्लेषः ॥३२०

२. अनियमश्लेषं दर्शयति—पद्मानामिति । पद्मानां दण्डेषु नालेषु कण्टकः तीक्ष्णाग्रः अवयवः ; रागिमिथुनालिङ्गनेषु कण्टको रोमाञ्चः । त्वयि रक्षति सति न राज्ये कण्टकः क्षुद्रशत्रुः भवति । पद्मानामेव इति कृतस्य नियमस्य भङ्गात् अयं नियमाक्षेपरूपः श्लेषः ॥ ३२० ॥

३. नियमाक्षेपोदाहरणम्—पद्मानामिति । कण्टकः प्रसिद्धः, कदाचित् चोरादिः । पद्मदण्डेष्वेव नियमितकण्टकसद्भावस्य अथ वेति आक्षिप्य रागिमिथुनालिङ्गनेष्वपि सद्भावकथनात् नियमाक्षेपो नाम श्लेषः । आलिङ्गनेषु कण्टकशब्देन रोमाञ्चः अभिधीयते ॥ ३२० ॥

१. अविरोधिनं श्लेषमुदाहरति—

**महीभृद्भूरिकटकस्तेजस्वी नियतोदयः।**
**दक्षः प्रजापतिश्चासीत्स्वामी शक्तिधरश्च सः ॥ ३२१ ॥**

महीभृत् पर्वतः राजा च । भूरयः कटका(अ)धित्यका यस्य तथा भूरिकटकः । तथा तेजस्वी तेजोऽस्यास्तीत्यादित्यः । तथा तेजः प्रतापः तद्वान् । नियतोऽवश्यंभावी उदय उद्गमोऽभ्युदयश्च (यस्य)। दक्षः कुशलः प्रजानां चतुर्वर्णाश्रमलक्षणानां पतिर्नाथः । तथा दक्षः गौर्याः पिता

प्रजापतिर्नाम। स्वामी कार्तिकेयः कुमार(:) स्वामिन्निति ऐश्वर्ये निपात्यते। तेन स्वामी (शक्तिः) प्रधानमाद्या प्रकृतिः तथा शक्तिस्त्रीमुखमाधुर्य(?)तान् (तां) धारयति शक्तिधरः। तथा प्रभुमन्त्रोत्साहलक्षणास्तिस्रः शक्तयः ता धारयतीति शक्तिधरः स्व[श्च] आदि[सी]दित्यविरोधी। महीभृद्भूरिकटकादीनां विरोधाभावात् ॥ ३२१ ॥

२. अविरोधिश्लेषमुदाहरति—महीभृदिति। महीभृत् राजा भूरिकटकः विस्तीर्णनगरः, गिरिः विपुलनितम्बः; तेजस्वी बलवान् नियतोदयः अभङ्गुरार्थोदयः, रश्मिमान् नियमेन उदेति; दक्षः क्षिप्रकारी प्रजापतिः प्रजापालकः। दक्षो नाम प्रजापतिषु एकः। स्वामी जगतः ईशः शक्तिधरः बलवान् शक्तिरूपायुधधरः इति विशेष्यविशेषणे परस्परानुकूले आरोप्येते इति अविरोधिश्लेषः ॥ ३२१ ॥

३. अविरोध्युदाहरणम्—महीभृदिति। भूरिकटकत्वादयो महीभृदादीनां अविरुद्धाः इति अविरोधी नाम श्लेषविशेषः। महीभृत् पर्वतो राजा च। भूरिकटकः अनेकसानुः अनेकमूल्यकटकः। तेजस्वी दीप्तिमान् नियतोदयः एकत्र सूर्योदयो गृह्यते, अन्यत्र व्यवस्थितसमृद्धिः; सूर्यादीनां उदयः प्रादुर्भावः नियमेन। दक्षः समर्थः दक्षप्रजापतिः। प्रजानां अधिपः प्रजापतिः इति च केषांचित् सामान्याभिधानम्। स्वामी नाथः स्कन्दश्च। शक्तिधरः प्रभुमन्त्रोत्साहशक्तिधरः आयुधविशेषधरश्च॥ ३२१ ॥

१. विरोधिनमुदाहरति—

अच्युतोऽप्यवृषच्छेदी राजाप्यविदितक्षयः।
देवोऽप्यविबुधो जज्ञे शङ्करोऽप्यभुजङ्गवान् ॥ ३२२ ॥

अच्युतोऽपि वृषं वृषभदानवमुच्छिनत्तीति वृषोच्छेदी न वृषोच्छेदी अवृषोच्छेदी। यः ति [कि] लाच्युतो हरिः स वृषमुच्छिनत्ति। अयं

पुनः अच्युतोऽपि न वृषोच्छेदनशीलः इति विरोधाभावः [सः] द्वितीयः [अर्थः]। च्यवते स्मर[इ]ति च्युतः अकर्मकत्वात् कर्तरि क्तः। [न च्युतः] अच्युत [तः] वृषं धर्मं नोच्छिनत्तीत्यवृषोच्छेदी। तथा चन्द्रोऽप्यविदितः अननुभूतः अस्ता[ज्ञा]तः क्षयो येनासौ अविदितक्षयः। स हि दक्षप्रजापतिशापात् (कृष्ण?) पक्षो[क्षे?] क्षयं व्रजति। अयं पुनः राजा नृपः अविदितक्षयः। तथा देवोऽप्यविबुधः। यः किल देवः स विबुधः। देवा विबुधा उच्यन्ते। अयं पुनर्देवोऽपि इन्द्रानिलयमार्काग्निवरुणसोमवित्तेशांशैर्निर्मितत्वात् देवः तथाऽप्यविबुधः विगताः बुधाः पण्डिताः यस्मादसौ विबुधः न विबुधः अविबुधः। तथा यः किल शङ्करो हरः स भुजङ्गवान् सर्पवान् [अयं पुनः शङ्करः क्षेमङ्करः तथाऽप्यभुजङ्गवान्] भुजङ्गा विटास्तस्य सन्तीति भुजङ्गवान् विटनिरतो न भवति, किं तु विशिष्टनिरत इति विरोधी॥

२. विरोधिश्लेषमुदाहरति—अच्युत इति। अच्युतः कृष्णः वृषरूपधरम् असुरं हतवान् इति अवृषच्छेदित्वं विरुद्धम्, प्रस्तुतो राजा अच्युतः स्वधर्मात् परिभ्रष्टो न भवति। राजा चन्द्रः अविदितक्षयः प्रतिमासं क्षीयमाणत्वात् अविदितक्षय इति विरुद्धम्। प्रस्तुतो लोकरञ्जको विभवक्षयानभिज्ञः। इत्यारोप्यमाणविरुद्धविशेषणयोगात् विरोधिश्लेषः॥

३. विरोध्युदाहरणमाह—अच्युत इति। अत्र अच्युतादीनाम् अवृषच्छेदित्वादि विरुद्धम् इति विरोधी नाम श्लेषः। अच्युतः कृष्णः वृषभान् सप्त जघान, तेन अवृषच्छेदित्वं विरुद्धम्। राजा चन्द्रः; स खलु विदितक्षय एव, अविदितक्षयत्वं तस्य विरुद्धम्। देवः सुरः, तस्य अविबुधता विरुद्धा। शङ्करो भुजगभूषणः प्रसिद्धः, अभुजङ्गता तस्य विरुद्धा। वर्णनीयपक्षे तु च्युतिरहितो धर्मानुच्छेदी रञ्जकः क्षयरहितः स्वामी बुधजनसहितः सुखकरो धूर्तरहितश्चेति। अविबुधः विगतबुधो न भवतीत्यर्थः॥ ३२२॥

इति श्लेषचक्रम्।

१. विशेषोक्तिलक्षणमाह—

गुणजातिक्रियादीनां यत्तु वैकल्यदर्शनम् ।
विशेषदर्शनायैव सा विशेषोक्तिरिष्यते ॥ ३२३ ॥

गुणजातिक्रियाणामादिशब्दात् द्रव्यस्य च विकलस्य भावो वैकल्यं अपारिपूर्णता तस्य दर्शनमुपन्यासः किमर्थमित्याह—विशेषदर्शनायैव विशेषपर(स्य)ख्यापनाय सा विशेषोक्तिरुच्यते अलङ्कारः ॥ ३२३ ॥

२. विशेषोक्तिं लक्षयति—गुणेति । गुणजातिक्रियाद्रव्याणां तत्तत्कार्यहेतूनां तत्कार्यशक्त्यतिशयद्योतनार्थं स्वरूपवैकल्यं यत् कथ्यते सा विशेषोक्तिः ॥ ३२३ ॥

३. गुणेति । आदिशब्देन द्रव्यादिवैकल्यं गृह्यते ; विशेषदर्शनाय अतिशयदर्शनाय । अवधारणेन अतथारूपो व्यावर्त्यते ॥ ३२३ ॥

१. तां उदाहरति—

न कठोरं न वा तीक्ष्णमायुधं पुष्पधन्वनः ।
तथापि जितमेवासीदमुना भुवनत्रयम् ॥ ३२४ ॥

न देवकन्यका नापि गन्धर्वकुलसम्भवा ।
तथाप्येषा तपोभङ्गं विधातुं वेधसोऽप्यलम् ॥ ३२५ ॥

न बद्धा भ्रुकुटिर्नापि स्फुरितो दशनच्छदः
न च रक्ताभवद्दृष्टिर्जितञ्च द्विषतां कुलम् ॥ ३२६ ॥

न रथा न च मातङ्गा न हया न च पत्तयः ।
स्त्रीणामपाङ्गदृष्ट्यैव जीयते जगतां त्रयम् ॥ ३२७ ॥

न क(ठो)रं नवा तीक्ष्णमायुधं पुष्पधन्वनः । अनेन मन्मथबाणानां कठोरता तैक्ष्ण्यं (इति) यदायुधगुणद्वयं तस्य वैकल्यमुक्तम् । यद्यप्येतस्यायुधमेवंविधं तथाप्यमुना मन्मथेन जगत्त्रयं जितमेव न(ना)जितमिति अत्यन्तायोगव्यवच्छेदं दर्शयति । क्रियया सहैवकारः प्रयुक्तः । विशेषदर्शनमेव[वं] स्मरस्य विशेषोक्तिरिति गुणवैकल्यं दर्शितम् ॥ ३२४ ॥

२. गुणवैकल्यं दर्शयति—नेति । कठोरत्वतैक्ष्ण्यविरहितेनापि अस्त्रेण शूरस्य त्रिभुवनजयकार्ये शक्त्यतिशयो दर्शितः ॥ ३२४ ॥

३. गुणवैकल्यं यथा—नेति । आयुधेन कठोरत्वतीक्ष्णत्वविकलेन पुष्पधन्वा त्रीण्यपि जगन्ति जितवान् इति तस्य प्रभावातिशयः प्रतीयते । सेयं गुणवैकल्यवती विशेषोक्तिः ॥ ३२४ ॥

१. न देवकन्यकेत्यादिना देवादिजातिवैकल्यं प्रदर्श्यते । तथाऽप्येषा तपोभङ्गं विधातुं वेधसोऽप्यलम् इति विशेषदर्शनम् । जातिवैकल्यविशेषोक्तिरियम् ॥ ३२५ ॥

२. जातिवैकल्यकार्यातिशयं दर्शयति—नेति । देवादिजातिवैकल्येऽपि कस्याश्चिद्वेधसोऽपि तपोभङ्गकरणं कार्यातिशयः ॥ ३२५ ॥

३. जातिवैकल्यं यथा—नेति । अत्र देवकन्यकात्वादिप्रकृष्टजातिवैकल्येऽपि वेधसोऽपि तपोभङ्गम् इयं विधत्ते इति वर्णनीयायाः रूपातिशयः प्रतीयते । इयं जातिवैकल्यवती विशेषोक्तिः ॥ ३२५ ॥

१. न बद्धा भ्रुकुटिरित्यादिना क्रियावैकल्यं प्रदर्श्य(ते) ॥३२६॥

२. नेति । भ्रुकुटिबन्धादिक्रियावैकल्येऽपि भूपेन द्विषतां कुलम् हतम् इति कार्यातिशयः ॥ ३२६ ॥

३. क्रियावैकल्येन यथा—नेति । भ्रूभङ्गादेः क्रियायाः वैकल्येऽपि द्विषन्तो विजिताः इति वर्णनीयस्य प्रतापातिशयः प्रतीयते । सेयं क्रियावैकल्यवती विशेषोक्तिः ॥ ३२६ ॥

१. 'स्त्रीणामपाङ्गदृष्ट्यैव जीयते जगतां त्रयमि'त्यनेन जगत्त्रयजयातिशयप्रदर्शनात् द्रव्यवैकल्यविशेषोक्तिरुक्ता ॥ ३२७ ॥

२. नेति । रथादिद्रव्यवैकल्येऽपि स्त्रीणां अपाङ्गदृष्ट्यैव जगतां त्रयं जीयते इति कार्यातिशयः ॥ ३२७ ॥

३. द्रव्यवैकल्येन यथा—नेति । अत्र रथादिद्रव्यवैकल्येऽपि स्त्रीणाम् अपाङ्गालोकनं त्रीण्यपि जगन्ति विजयते इति द्रव्यवैकल्यवती विशेषोक्तिः ॥ ३२७ ॥

**एकचक्रो रथो यन्ता विकलो विषमा हयाः ।**
**आक्रामत्येव तेजस्वी तथाऽप्यर्को नभस्तलम् ॥ ३२८ ॥**

**सैषा हेतुविशेषोक्तिस्तेजस्वीति विशेषणात् ।**
**अयमेव क्रमोऽन्येषां भेदानामपि कल्पने ॥ ३२९ ॥**

१. एकं चक्रमस्येत्येकचक्रो रथस्तावत् इति चक्रवैकल्यम् । न च तस्य मनागपि गमनं सम्भवति । तदुक्तं 'चक्रमेकं न वर्तते' 'तार्हि ए(न ह्ये)कचक्रेण रथः प्रयाती'ति । तथा यन्ता सारथिः सोऽपि विकलः ऊरुरहितः । तथा विषमाः हयाः सप्त । इति रथादीनां वैकल्यं प्रदर्शितम् । 'आक्रामत्येव तेजस्वी तथाऽप्यर्को जगत्त्रयम् । ' इति हेतुविशेषोक्तिरियम् ॥ कुत इत्याह—तेजस्वीति विशेषणात् । तेजस्वीत्यादि आ(स्वित्वादा)क्रामतीति तेजो जगत्त्रयाक्रमणहेतुः न सामग्री । यु(उ)क्तमन्यैरपि—'क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे' । अयमेव क्रमोऽन्येषामनुक्तानां भेदानां वि(मपि) कल्पने ॥ ३२८-३२९ ॥

२.एकेति । एतद्व्याचष्ट—सैषेति ॥ ३२८-२९ ॥

३. द्रव्यस्य अङ्गादिवैकल्येन यथा—एकेति । अत्र रथादीनां अवयवादिवैकल्येऽपि जगत्त्रयजयेन सवितुः अनुभावातिशयः प्रतीयत इति द्रव्याङ्गादिवैकल्यवती विशेषोक्तिः । तेजोविशिष्टस्य सूर्यलक्षणस्य द्रव्यस्य अनुभावप्रदर्शनार्थं रथाद्यवयववैकल्यकथनात् हेतुविशेषोक्तिश्च । इदमाह—सैषेति । उक्तेन प्रकारेण परेऽपि विशेषोक्तिभेदा द्रष्टव्याः ॥ ३२८-२९ ॥

इति विशेषोक्तिचक्रम् ॥

१. तुल्ययोगितालक्षणमाह—

**विवक्षितगुणोत्कृष्टै(-त्कर्षै)र्यत्समीकृत्य कस्यचित्।**
**कीर्तनं स्तुतिनिन्दार्थं सा मता तुल्ययोगिता ॥ ३३० ॥**

विवक्षितः वक्तुमिष्टः गुणानामुत्कर्षः आधिक्यं येषां ते (विवक्षित) गुणोत्कर्षाः तैः सह समीकृत्य समतां आपाद्य यत्कीर्तनं कस्यचित्। किमर्थमित्याह स्तुतिनिन्दार्थं स्तुत्यर्थं निन्दार्थं च सा स्मृता तुल्ययोगिता। तुल्यैः सदृशैः योगः एककार्येऽभिसम्बन्धः तुल्यानां वा योगः तुल्ययोगः स एषामस्ति ते तुल्ययोगिनः तेषां भावः तुल्ययोगिता ॥ ३३० ॥

२. तुल्ययोगितां लक्षयति—**विवक्षितेति** ॥ ३३० ॥

३. तुल्ययोगितालङ्कारमाह—**विवक्षितेति**वक्तुमिष्टस्य गुण[स्य]ाश्रयतया प्रसिद्धैः समीकृत्य कस्यचित् अप्रसिद्धस्य कीर्तनं स्तुतिनिन्दासिद्ध्यर्थं तुल्ययोगिता ॥ ३३० ॥

१. तामुदाहरति—

**यमः कुबेरो वरुणः सहस्राक्षो भवानपि।**
**बिभ्रत्यनन्यविषयां लोकपाल इति श्रुतिम् ॥ ३३१ ॥**

यमादिभिर्लोकपालनं प्रति विवक्षितगुणोत्कर्षे [र्षै] राज्ञः कस्यचित् समतामापादयति। स्तुत्यर्थमेतत्। भवांश्च लोकं पालयन्ती (न्ती) ति लोकपाला[ल] इति [श्रुति]रभिधानं नाम तद्भवतोऽपि समानमेव। अविद्यमानो युष्मद्व्यतिरेकेणान्योऽपि [?] विषयोऽभिधेयो यस्याः साऽनन्यविषया श्रुतिः तां बिभ्रति दधतीति स्तुत्यर्थकीर्तनम् ॥ ३३१ ॥

२. स्तुत्यर्थां तुल्ययोगितां दर्शयति **यम** इति ॥ ३३१ ॥

३. उदाहरति **यम** इति। अत्र यमादयः पञ्च भवन्तो लोकपालाः इत्युक्ते, अनुक्तमपि तुल्ययोगितयैव कस्यचित् लोकपालैः सादृश्यं प्रतीयते, इति तुल्ययोगिता स्तुत्यर्था ॥ ३३१ ॥

१. इदानीं निन्दार्थमाह—

**सङ्गतानि मृगाक्षीणां तटिद्विलसितानि च।**
**क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम्॥ ३३२॥**

(सं)गतानि सङ्ख्या [सख्यानि] मृगाक्षीणां तथा तद्धि (टि)तां विद्युतां विधासि[लसितानि] च क्षणद्वयं क्षणादूर्ध्वं न तिष्ठन्ति। विद्युद्विलसितानि घनैर्मेघैरारब्धानि मृगाक्षीणां सङ्ग(त)ानि घनं गाढमारब्धानि स्वयमिति विद्युद्विलसितेन सह स्त्रीसङ्गतस्य समतापादनं निन्दार्थमिति तुल्ययोगिता॥ ३३२॥

२. निन्दार्थां तुल्ययोगितां दर्शयति—सङ्गतानीति॥ ३३२॥

३. निन्दार्थामुदाहरति—सङ्गतानीति। अत्र चञ्चलतया प्रसिद्धैः क्षणद्युतिभिः समीकृत्य मृगीदृशां सङ्गतानि निन्दार्थम् अभिहितानि। सेयं निन्दार्थतुल्ययोगिता॥ ३३२॥

इति तुल्ययोगिता॥

१. विरोधलक्षणमाह—

**विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम्।**
**विशेष(विरोध)दर्शनायैव स विरोधः स्मृतो यथा॥ ३३३॥**

द्वि(वि?)विधो हि विरोधो भावानां सहानवस्थानलक्षणः परस्परपरिहारस्थितिर्नाम। इह यथासम्भवं ग्राह्यः। तेन आलिङ्गिता विरुद्धाः। तेषां पदार्थानां जातिगुणक्रियाद्रव्याणां संसर्गदर्शनं संसर्गस्य संयोगसमवायादेव (देर्यद्)दर्शनं उपलब्धिः स विरोधो नामालङ्कारः। किमर्थं पुनर्विरुद्धानां सम्पद[पदा]र्थानां संसर्गदर्शनमित्यत्राह—विशेषदर्शनायैव। विशेषोऽसाधारणो धर्मो व्यतिरेकस्तदर्थमेव। यथेत्युदाहरति॥ ३३३॥

२. विरोधोक्तिं लक्षयति—विरुद्धानामिति। विरुद्धानां क्रियार्थानां गुणानां संसर्गप्रकारः[?] विरोधदर्शनायैव विरोधप्रतिभासायैव, विरोधः॥

३. विरोधालङ्कारमाह_विरुद्धानामिति । विरुद्धानां संसर्गाभावात् संसृष्टवद्वदता स(-वदवभास)मानतैव उपचारवृत्त्या संसर्ग इत्युच्यते । विरोधदर्शनाय इत्यत्रापि उपचारेण विरोधाभासः प्रतिपाद्यते । उक्तं च वामनादिभिः 'विरुद्धाभासत्वं विरोधः' इति । अवधारणेन आत्यन्तिकविरोधो निवर्त्यते । यदाश्रयो विरोधाभासः स विरोधः इति तत्रापि उपचारः ॥ ३३३ ॥

कूजितं राजहंसानां वर्धते मदमञ्जुलम् ।
क्षीयते च मयूराणां रुतमुत्क्रान्तसौष्ठवम् ॥ ३३४ ॥

१. उत्क्रान्तं गतं सौष्ठवमस्येति । अनेन शरत्समये हंसमयूराणां कूजितरुतयोर्वर्धनक्षययोर्विरोधिन्यो(नो)ऽसंसर्गो दर्शित इति विरोधालङ्कारः॥३३४

२. कूजितमिति । अत्र वृद्धिक्षययोः क्रिययोः विरुद्धा[रोधा]भासः॥

३. उदाहरणानि—कूजितमिति । ऋतुसन्धिवशेन जायमान(ना)-कालविशेषव्यवस्थितोल्लासयोः हंसमयूरालापयोः संसृष्टिः विरोधाभासं जनयतीति, सहानवस्थानलक्षणो विरोध एषः ॥ ३३४ ॥

प्रावृषेण्यैर्जलधरैरम्बरं दुर्दिनायते ।
रागेण पुनराक्रान्तं जायते जगतां मनः ॥ ३३५ ॥

१. प्रावृषि भवः[ाः] प्रावृषेण्य[ाः] तैर्जलधरैः कृत्वाऽम्बरं आकाशं दुर्दिनायते दुर्दिनं करोति । सुदिनदुर्दिननीहारेत्यादिना क्यङ् । रागेण पुनराक्रान्तं व्याप्तं जायते जगतां मनः । दुर्दिनगगन[राग]योः परस्परविरुद्धयोः संसर्गदर्शनाद्विरोधः ॥ ३३५ ॥

२. प्रावृषेण्यैरिति । दुर्दिनशब्देन श्यामत्वं लक्ष्यते । अत्र श्यामत्वरक्तत्वयोः विरोधः ॥ ३३५ ॥

३. प्रावृषेण्यैरिति । समवायिकारणस्य हि कार्येण सह अवस्थानं दृश्यते । तत्कारणान्तरेऽपि उपचारादारोप्यमाणं समवायिकारणभावस्य

जलधरस्य कार्यभूतस्य रागस्य च सहानवस्थानं विरोधाभासः । इति सहानवस्थानलक्षणो विरोधः । पूर्वत्र तु कार्यद्वयस्य । अत्र कार्यकारणयोः इति भेदः ॥ ३३५ ॥

तनुमध्यं पृथुश्रोणि रक्तोष्ठमसितेक्षणम् ।
नतनाभि वपुः स्त्रीणां कं न हन्त्युन्नतस्तनम् ॥ ३३६ ॥

१. अनेनैकत्रैव स्त्रीशरीरे तनुत्वपृथुत्वयोः रक्तत्वकृष्णत्वयोः नतत्वोन्नतत्वयोरन्योन्यविरुद्धयोः संसर्गदर्शनाद्विरोधः ॥ ३३६ ॥

३. तन्विति । अत्र तनुत्वादीनां पृथुत्वादीनामेकद्रव्याश्रयेण विरोधाभासः इति गुणनिबन्धनः प्रागुक्तविरोधः ॥ ३३६ ॥

मृणालबाहु रम्भोरु पद्मोत्पलमुखेक्षणम् ।
अपि ते रूपमस्माकं तन्वि तापाय कल्पते ॥ ३३७ ॥

१. मृणालप्रभृतीनां निसर्गशिशिराणां तापकरणं विरुद्धमिति विरोधः । शेषमृजु ॥ ३३७ ॥

३. मृणालेति । कारणगुणप्रक्रमेण कार्ये गुणारम्भः इति हि प्रसिद्धिः । अत्र मृणालादित्वेन रूपितैः अवयवैः उपेतस्य शैत्यगुणाश्रयकारणभूतस्य रूपस्य विसदृशं कार्यं स्वविषये जातमिति कामिना व्याहृतत्वात् विरोधाभासः । इति विसदृशकार्यकारणलक्षणो विरोधः ॥ ३३७ ॥

उद्यानमारुतोद्धूताश्चूतचम्पकरेणवः ।
उदश्रयन्ति पान्थानामस्पृशन्तोऽपि लोचने ॥ ३३८ ॥

१. चूतचम्पकतरूणां पुष्पाणीति तस्यावयव इत्यागतस्याणः फले लुगित्य(त्र)पुष्पाचेति वक्तव्यमिति लुक् । तेन चूतचम्पकरेणव इति गम्यन्तो (सम्यगेव) । पान्थानां लोचने उद्गताश्च कुर्वन्ति दर्शयान्ति(उदश्रयन्ति) (अ)

स्पृशन्तोऽपि दर्शनपथवर्तिनोऽपि पान्थाः(न्) अश्रु विमोचयन्तीत्यस्पृशतामश्रुविमोचनकारित्वं (त्वात्) विरोधः ॥ ३३८ ॥

३. उद्यानेति। पांसूनां स्पर्शनद्वारा बाष्पजनकत्वं स्वभावः । अत्र उद्यानचम्पकरेणवः स्पर्शराहित्येऽपि पान्थैर्बाष्पहेतवः इति विरोधाभासः । स्वभावविरोधलक्षणलक्षणो विरोध एषः ॥ ३३८ ॥

**कृष्णार्जुनानुरक्ताऽपि दृष्टिः कर्णावलम्बिनी ।**
**याति विश्वसनीयत्वं कस्य ते कलभाषिणि ॥ ३३९ ॥**

१. दृश्यतेऽनयेति दृष्टिः । करणसाधनः क्तिन् । दृक्शक्त्यधिष्ठानं चक्षुः कृष्णा कृष्णवर्णा श्वेतार्जुनेति अनुरक्ता ताम्र(ा) कृष्णाव (च) सा अर्जुनाव(च) सा अनुरक्ता च सा कृष्णार्जुना(नु)रक्तेति विशेषणसमासः । कर्णं श्रवणमवलम्बते इति कर्णावलम्बिनी कर्णान्तविश्रान्ता । सा कस्य हे कलभाषिणि मधुराभिधायिनि विश्वसनीयत्वं याति । विरोधः पुनः कृष्णो वासुदेवोऽर्जुनः पार्थः तयोरनुरक्ताऽपि कर्णं राधेयं तयोर्विपक्षभूतं आलम्बते । तदा (?) न विश्वासयोग्या स्यादिति ॥ ३३९ ॥

२. कृष्णेति । अत्र विरुद्धपक्षपातित्वं विरोधः; कृष्णपार्थयोः रक्ता या श्रूयते सा कर्णपक्षपातिनी न भवेत् । कृष्णा धवला रक्ता च कर्णान्तायता च दृष्टिः इति श्लेषोपहितो विरोधः ॥ ३३९ ॥

३. कृष्णेति । अत्र श्लेषद्वारेण विरोधाभासः इति श्लेषानुविद्धो विरोध एषः ॥ ३३९ ॥

१. इदानीं प्रकृतमुपसंहरन्नाह–

**इत्यनेकप्रकारोऽयमलङ्कारः प्रतायते ।**

इत्यनेकप्रकारोयमलङ्कारो विरोधः प्रतायते विस्तार्यते । 'तनोतेर्यकी'ति नकारस्यात्वम् ॥

३. उपसंहरति—इतीति ॥

इति विरोधालङ्कारः ।

१. अप्रस्तुतस्तोत्रमलङ्कारं निर्दिशति-

**अप्रस्तुतप्रशंसा स्यादप्रक्रान्तेषु(पि) या स्तुतिः ॥ २४० ॥**

अप्रस्तुतमिति लक्ष्यनिर्देशः अप्रक्रान्ताऽपि(?) या स्तुतिरिति लक्षण-निर्देशः ॥ २४० ॥

२. अप्रस्तुतप्रशंसां लक्षयति—अप्रस्तुतेति ॥ २४० ॥

१. तदुदाहरति-

**सुखं जीवन्ति हरिणा वनेष्वपरसेविनः ।**
**अन्नैरयत्नसुलभैस्तृणदर्भाङ्कुरादिभिः ॥ २४१ ॥**

१. स्वयं विवृणोति

**सेयमप्रस्तुतैवात्र मृगवृत्तिः प्रशस्यते ।**
**राजानुवर्तनक्लेशनिर्विण्णेन मनस्विना ॥ २४२ ॥**

सेयमप्रस्तुतैवाप्रक्रान्तैवात्र मृगाणां रुरुप्रभृतीनां प्राणयात्रा प्रशस्यते । केनापि सेवानिर्विण्णेन सेवोद्विग्नेन मनस्वि[ना म]नोऽभिमानः मानिनेति ॥

२. उदाहरति—सुखमिति । एतद्व्याचष्टे—सेति ॥ २४१-२४२ ॥

इति अप्रस्तुतप्रशंसा ।

१. व्याजस्तुतिलक्षणमाह-

**यदि निन्दन्निव स्तौति व्याजस्तुतिरसौ स्मृता ।**
**दोषाभासा गुणा एव लभन्ते ह्यत्र सन्निधिम् ॥ २४३ ॥**

निन्दां कुर्वन्निव न तु परमार्थेन निन्दन् यदि कश्चित् कमपि स्तौति तदा निन्दास्तुतिरिति स्मृता आचार्यैः । दोषवदाभासन्ते दोषाभासाः न तु परमार्थेन दोषाः किं तु गुणा एवात्र व्याजस्तुतौ सन्निधिं लभन्ते ॥

२. व्याजस्तुतिं लक्षयति—यदीति ॥ ३४३ ॥

१. तामुदाहरति—

**तापसेनापि रामेण जितेयं भूतधारिणी ।**
**त्वया राज्ञाऽपि सैवेयं जिता मा भून्मदस्तव ॥ ३४४ ॥**

तापसेनापि रामेण जितेयं भूतधारिणी पृथ्वी । त्वया राज्ञाऽपि सता सैव जिता नाधिकेति मत्वा मा भून्मदो गर्वस्तव ॥ ३४४ ॥

२. उदाहरति—तापसेनेति । परशुरामेण यावती भूमिः जिता सा सर्वा त्वया जिता इति प्रशंसा ॥ ३४४ ॥

३. उदाहरति—तापसेनेति । चतुरङ्गबलशून्येनापि रामेण विजिता भूतधारिणी । चतुरङ्गबलयुक्तेनापि राज्ञा सैव जिता । इति निन्दामुखेन वर्णनीयस्य महीयसा रामेण साम्योपपादनं स्तुतिः भवति इति व्याजस्तुतिः ॥

**पुंसः पुराणादाच्छिद्य श्रीस्त्वया परिभुज्यते ।**
**राजन्निक्ष्वाकुवंशस्य किमिदं तव युज्यते ॥ ३४५ ॥**

१. पुंसः पुरावृत्तादाच्छिद्य (श्री)स्तु (स्त्व)या परिभुज्यते । हे राजन् इक्ष्वाकुवंशस्य किमिदं तव युज्यते । वृद्धान् (त्) पुंसोऽपहृत्य तत्(-प) ल्युपभोगो दोषवदाभासते । न च तथा यतः पुंसः पुराणाद्धरेराच्छिद्य स्त्री-(श्री)परिग्रहः शौर्यातिशयव्यावर्णनमिति निन्दास्तुतिः ॥ ३४५ ॥

२. पुंस इति । पुरुषोत्तम इव त्वयि लक्ष्मीः आसक्ता इति स्तुतिः । उदाहरणद्वयं व्याप्तिप्रदर्शनार्थम् ॥ ३४५ ॥

३. पुंस इति । परदारापहारलक्षणानिन्दाव्याजेन वर्णनीयविषयायाः स्तुतेः विहितत्वात् व्याजस्तुतिः ॥ ३४५ ॥

**भुजङ्गभोगसंसक्ता कलत्रं तव मेदिनी ।**
**अहङ्कारः परां कोटिमारोहति कुतस्तव ॥ ३४६ ॥**

१. भुजङ्गो विटस्तस्य भोगो मुहुरास(से)वा भुजङ्गभोगः तस्मिन् संसक्ते (क्ता) मेदिनी तव कलत्रं पत्नी ततोऽहङ्कारः परां कोटिमारोहतु कथं तवेति दोषवदवभाति । न च तथा यतो भुजङ्गो नागराजः शेषस्तस्य भोगाः सहस्रसंख्याः फणाः भुजङ्गभोगाः तेपु संसक्ता उपरि स्थिता या मेदिनी सा तव कलत्रमिति निन्दास्तुतिः ॥ ३४६ ॥

२. श्लेषानुविद्धव्याजस्तुतिं दर्शयति—भुजङ्गेति । त्वद्भुजः शेषधृतामखिलां भुवं बिभर्ति इति स्तुतिः ॥ ३४६ ॥

३. भुजङ्गेति । धूर्तभोगनिरता मेदिनी तव भार्या इति निन्दाव्याजेन शेषशिरसा धार्यमाणा भूतधात्री तव कुटुम्बिनी इति स्तुतिः व्याजस्तुतिः । एषा श्लेषायत्ता ज्ञातव्या ॥ ३४६ ॥

**इति श्लेषानुविद्धानामन्येषां चोपलक्ष्यताम् ।**
**व्याजस्तुतिप्रकाराणामपर्यन्तः प्रविस्तरः ॥ ३४७ ॥**

१. इति श्लेषानुविद्धानां श्लेषालङ्कारसङ्गिनामुभयार्थवाचिनामन्येषामप्येवंप्रकाराणामपर्यन्तोऽत्र व्याजस्तुतावलङ्कारे विस्तरः प्रपञ्चः ॥ ३४७॥

२. व्याजस्तुतिमुपसंहरति—इतीति ॥

३. अनेन प्रकारेण श्लेषानुविद्धा बहवो व्याजस्तुतिप्रकारा ज्ञातव्या इत्याह—इतीति ॥ ३४७ ॥

इति व्याजस्तुतिः ।

१. निदर्शनालङ्कारमाह—

**अर्थान्तरप्रवृत्तेन किञ्चित्तत्सदृशं फलम् ।**
**सदसद्वा निदर्श्येत यदि स्यात्तन्निदर्शनम् ॥ ३४८ ॥**

अर्थान्तरे प्रमेयान्तरे प्रवृत्तेन कविना किञ्चित् किमपि तत्सदृश-

मिति दिशता(दर्शिता)र्थान्तरानुरूपं फलं सत् शोभनं असद्वा तद्विपरीतं वा यदि प्रदर्श्यते तदा तन्निदर्शनमित्यलङ्कारः स्यात् ॥ ३४८ ॥

२. निदर्शनं लक्षयति–अर्थेति । एकमर्थविशेषं वर्णयता तत्सदृशं अभ्युदयरूपमनर्थरूपं वा यदि निर्दिश्यते तन्निदर्शनम् ॥ ३४८ ॥

१. तमुदाहरति—

**उदयन्नेव सविता पद्मेष्वर्पयति श्रियम्।**

सविता आदित्यः उदयमासादयन्नेव पद्मेषु श्रियमर्पयति एतानि मदमभ्युदयमभिलषन्तीति । किं कुर्वन्नित्याह—

**विभावयितुमृद्धीनां फलं सुहृदनुग्रहम् ॥ ३४९ ॥**

ऋद्धीनां सम्पदां फलं विभावयितुं जनेभ्य इति वाक्यशेषः । कथंभूतमृद्धीनां फलं विभावयितुमिति प्रश्ने सत्याह सुहृदनुग्रहं सुहृदो मित्राणि अनुगृह्यन्तेऽनेनेति सुहृदनुग्रहः(म्?)तदिति । तदुक्तमन्यैरपि 'लक्ष्म्या लक्ष्मी तां लोके विकासिन्या विकसन्त्या(?)। बन्धुभिश्च सुहृद्भिश्च विस्रब्धं या न भुज्यते' । इति सदुदाहृतम् ॥ ३४९ ॥

२. सन्निदर्शनं दर्शयति–उदयन्निति ॥ ३४९ ॥

३. उदाहरति–उदयन्निति । समर्थेन सुहृदां अनुग्रहः कर्तव्यः इत्येतत्, अर्थान्तरप्रवृत्तेन निदर्शितं किञ्चित् तत्सदृशं फलम् । सूर्यः अभ्युदयमानः सुहृत्सु पद्मेषु श्रियं अर्पयतीति प्रक्रान्तसदृशस्य फलस्य प्रदर्शनात् उक्तलक्षणं निदर्शनमेतत् ॥ ३४९ ॥

१. असदुदाहरति—

**याति चन्द्रांशुभिः स्पृष्टा ध्वान्तराजी पराभवम्।**

चन्द्रकिरणैः स्पृष्टान्धकारततिर्याति पराभवम् । किं कुर्वतीत्याह—

सद्यो राजविरुद्धानां सूचयन्ती दुरन्तताम् ॥ ३५० ॥

राजा चन्द्रो नृपश्चोच्यते। (ते)नान्येषामपि राजापथ्यकारिणां एवंविध एव विपाकः कटुरिति निदर्शनम् ॥ ३५० ॥

२. असन्निदर्शनं लक्षयति—यातीति । राजविरुद्धानामिति श्लेषानुविद्धम् ॥ ३५० ॥

३. यातीति । अत्र राजविरोधो न कर्तव्यः इति अर्थान्तरे प्रवृत्तेन, चन्द्रांशुभिः स्पृष्टा ध्वान्तराजी पराभवं यातीति, पराभवे तस्य राजशब्दवाच्यचन्द्रविरोधः कारणत्वेन अभिहितः । इति श्लेषमुखेन प्रक्रान्तसदृशस्य फलस्य प्रदर्शनात् उक्तलक्षणं निदर्शनमेतत् । श्लेषमुखेनापि निदर्शनं प्रतिपाद्यमिति यावत् ॥ ३५० ॥

इति निदर्शनचक्रम् ।

१. सहोक्तिलक्षणमाह—

**सहोक्तिः सहभावस्य कथनं गुणकर्मणाम् ।**
**अर्थानां यो विनिमयः परिवृत्तिस्तु सा यथा ॥ ३५१ ॥**

गुणा रूपादयो द्रव्याश्रयाः निर्गुणाः । कर्माणि उत्क्षेपणादीनि शास्त्रे परिभाषितानि वैशेषिक(कैः) । लौकिकाश्च गुणाः कान्तिशोभादयः । कर्माणि च क्रियाः । तेषामिहोभयेषां सम्भवतो ग्रहणम् । गुणानां कर्मणां च सहभावस्य यत् कथनं सा सहोक्तिरिष्यते । परिवृत्तेर्लक्षणं करोति अर्थानां (यो) विनिमयः परिवृत्तिस्तु सा। अर्थादीनां द्रव्यादीनां यो विनिमयः प्रतिदानं परिवृत्तिस्तु सा । यथेत्युदाहरणम् ॥ ३५१ ॥

२. सहोक्तिपरिवृत्ती लक्षयति—सहेति । गुणस्य कर्मणो गुणकर्मणोर्वा द्वयोः सहभावकथनं सहोक्तिः ॥ ३५१ ॥

३. सहेति । किञ्चित् दत्त्वा ततः तत्सदृशस्य कस्यचित् आदानं विनिमयः । सहभावस्य कथनं गुणकर्मणाम्–इत्यस्य गुणक्रियाणां कर्त्रादिभिः सहभावकथनमित्यर्थः ॥ ३५१ ॥

१. तत्र सहोक्तिमुदाहरति–

**सह दीर्घा मम श्वासैरिमाः सम्प्रति रात्रयः ।**

इमा रात्रयो दीर्घ(र्घा)मदा[दी]यैः श्वासैः सहेत्यत्र रात्रीणां श्वासानां च दैर्घ्यस्य सहभावाभिधानात् सहोक्तिः । एवं सर्वत्र योज्यमुत्तरत्रापि ।

न केवलं मम श्वासैः सहेमा रात्रयो दीर्घाः । तथा—

**पाण्डुराश्च ममैवाङ्गैः सह ताश्चन्द्रभूषणाः ॥ ३५२ ॥**

चन्द्राभरणं (णानां) निशानामङ्गानां च पाण्डुरत्वस्य सहाभिधानात् सहोक्तिः ॥ ३५२ ॥

२. गुणसहोक्तिं दर्शयति—सहेति ॥ ३५२ ॥

३. अत्र रात्रयो दीर्घाः पाण्डुराश्च इति दीर्घपाण्डुरगुणयोः श्वासैः अङ्गैश्च समावेशो दृश्यत इति सहोक्तिः ॥ ३५२ ॥

**वर्धते सह पान्थानां मूर्छया चूतमञ्जरी ।**

१. चूतमञ्जरी पथिकानां मूर्छया सह वर्धते । यथायथा सहकारतरुकुसुममञ्जरी वसन्तसमये वर्धते तथा (तथा) पथिकानां मूर्छाऽपि वर्धत इति चूतमञ्जरीमूर्छयोर्वर्धनक्रियायाः सहभावः ॥

**वह(पत)न्ति च समं तेषामसुभिर्मलयानिलाः ॥ ३५३ ॥**

१. तेषां पथा(पान्था)नां असुभिः प्राणैः सह मलयानिलाः पत(वह)-तीत्यत्र मलयमारुतानां पथिकासूनां च पत(वह)नक्रियायाः सहभावः ॥

२. क्रियासहोक्तिं दर्शयति—वर्धेते इति ॥ ३५३ ॥

३. वर्धेते इति। अत्र चूतमञ्जरी पान्थमूर्छनया सह वर्धनक्रियायां मलयानिलः असुभिः समं वहनक्रियायां, सम्बद्धौ इति क्रियोपज्ञेयं सहोक्तिः ॥ ३५३ ॥

कोकिलालापसुभगाः सुगन्धिवनवायवः।
यान्ति सार्धं जनानन्दैर्वृद्धिं सुरभिवासराः ॥ ३५४ ॥

१. कोकिलालापैः सुभगाः सुगन्धयो वनवायवो येषु ते सुरभिवासराः वसन्तसमयदिवसाः जनानन्दैः सह वृद्धिं यान्तीत्यनेन वसन्तादीनां [-दिनानां] जनानन्दानां च सहभावोऽभिहित इति सहोक्तिः ॥ ३५४ ॥

२. गुणक्रियासहोक्तिं दर्शयति—कोकिलेति। वृद्धिरूपस्य गुणस्य व्याप्तिरूपस्य कर्मणश्च तुल्यतया वचनात् एषा गुणक्रियासहोक्तिः ॥

३. कोकिलेति। अत्र सुरभिवासराः जनानन्दैः सह वृद्धिक्रियायामेकस्यां निविष्टा इति सहोक्तिभेदः। पूर्वस्मिन् एकस्य क्रियाद्वये निवेशः ॥

१. उपसंहरन्नाह—

इत्युदाहृतयो दत्ताः सहोक्तेरत्र काश्चन।

३. इतीति । सहोक्तेः अनेकाः प्रकाराः ; केचिदेवंप्रकारा दर्शिताः ॥

इति सहोक्तिः।

क्रियते परिवृत्तेश्च किञ्चिद्रूपनिरूपणम् ॥ ३५५ ॥

शस्त्रप्रहारं ददता भुजेन तव भूभुजाम्।
चिरार्जितं हृतं तेषां यशःकुमुदपाण्डरम् ॥ ३५६ ॥

१. तव भुजेन शस्त्रप्रहारमरातीनां ददता यशो हृतमिति शस्त्रप्रहारयशसोर्दानादानाभ्यां परिवर्जनं कृतमिति परिवर्तनं परिवृत्तिः ॥ ३५६ ॥

२. परिवृत्त्युदाहरणं दर्शयति— इत्यादि । सुबोधमतत् ॥३५६॥

इति परिवृत्तिः ।

१. आशिषोऽलङ्कारस्य लक्षणं करोति—

**आशीर्नामाभिलषिते वस्तुन्याशंसनं यथा ।**
**पातु नः परमं ज्योतिरवाङ्मनसगोचरम् ॥ ३५७ ॥**

आशीर्नाम अभिलषिते वस्तुनि आशंसनम् । स आशीरलङ्कारः । यथेत्युदाहरति ।

पातु रक्षतु वो युष्मान् परमं प्रकृष्टं ज्योतिराद्या(द्यो)तो ज्ञानमवाङ्मनसगोचरं वाचो मनसश्च यद्विषयो न भवति ॥ ३५७ ॥

२. आशीरिति । अप्राप्तस्य अभीष्टस्य आशंसनं आशीः । सा च अनुकूला अननुकूला इति द्विधा । अनुकूलाशीर्नाम यो यच्छास्त्रमारभते तस्य तच्छास्त्राभिद्योतकार्थाशंसनम् । यथा–

'कोऽसि त्वं मे का वाऽहं ते विसृज विसृज मम वसनं मुखं किमवेक्षसे
न व्यङ्क्ष्याहं जाने ही ही तव सुभग दशनवसनं प्रियादशनाङ्कितम् ।
या ते रुष्टा सा ते नाहं व्रज चपल हृदयनिलयां प्रसादय कामिनीम्
इत्येवं कन्दर्पेणार्ताः प्रणयकलहकुपितपतीन् वदन्ति परस्त्रियः ॥'

इत्यादयः अनुकूला आशिषः । शास्त्रस्याननुकूलार्थाशंसनं यथा—

'आयूंषि श्रियमारोग्यं पुत्रं मित्राणि बन्धुताम् ।
ददद्भक्तिश्च भवतु भवतामीशवन्दनम् ॥ ' इत्यादयः ।

केचित् आदौ मङ्गलशब्दयुक्तां कुर्वन्ति । तद्यथा—

'श्रियं दधतु वः शौरेर्द्वये तुल्यश्रमाः क्रमाः ।
ये चादौ गोष्पदं पश्चात् त्रैलोक्यं कामतश्च ये ॥' इत्यादयः ।

केचित् इतरोपेतामपि आशिषं प्रयुञ्जते । इतरोपेतां नमस्कारोपेतां

इत्यर्थः । यथा—

'नमः शिवाय कल्याणहारिणे भोगिहारिणे ।
संसारसागरोत्तारसेतवे मुक्तिहेतवे ॥' इत्यादयः ।

केचन वर्तमानपदेनापि आशिषमाचक्षते । यथा—

'जयति स भगवान् कृष्णः शेते यः शेषभोगशय्यायाम् ।
मध्ये पयःपयोधेरपर इवाम्भोनिधिः कृष्णः ॥' इत्यादयः ।

एतासु मङ्गलशब्दयुक्तेतरोपेतवर्तमानपदप्रतिपाद्यासु आशीःसु अननुकूलभेदाः द्रष्टव्याः । मङ्गलशब्दयुक्तानुकूलाशीः यथा—

'शिवमस्तु सर्वजगतां परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु शान्तिं सर्वत्र जनः सुखी भवतु ॥'

इतरोपेतानुकूलाशिषि यथा— 'रागादिरोगान् सततानुषक्तान्' इत्येवमादयः । वर्तमानपदाननुकूलाशिषि यथा—

'वरगुरुरबलानां केलिदीक्षाप्रदाने
परमसुहृदनङ्गो रोहिणीवल्लभस्य ।
अपि कुसुमपृषत्कैर्देवदेवस्य जेता
जयति ललितलीलानाटिकासूत्रधारः ॥' इत्यादयः ।

केचित् परहिताशंसनमपि निजहिताशंसनं भवतीति आशिषं प्रयुञ्जते । तद्यथा—

'प्रभातकाले युष्माकमुन्मीलयतु लोचने ।
दिवाकरकरस्ताम्रः सुप्ताब्जं सरसामिव ॥'

केचित् मङ्गलशब्द एव सर्वाशिषमाशास्त इति मङ्गलशब्दमाशंसन्ति । यथा 'अथातो धर्मजिज्ञासा' इत्येवमादयः ॥

इत्याशीः ।

**अनन्वयससन्देहावुपमास्वेव दर्शितौ ।**
**उपमारूपकं चापि रूपकेष्वेव दर्शितम् ॥ ३५८ ॥**

१. न वयम[नन्वनन्वयस] सन्देहोपमारूपकोत्प्रेक्षावयवानामलङ्कारागामत्र लक्षणा(-न)भिधानात् न्यूनमलङ्कारलक्षणम् । तथा हि ।

यत्र तेनैव तस्य स्यादुपमानोपमेयता ।
असादृश्यविवक्षातस्तमित्याहुरनन्वयम् ॥

तस्योदाहरणम्—

'ताम्बूलरागवलयस्फुरद्दशनदीधिति ।
इन्दीवराभनयनं तवेव वदनं तव ॥

इत्यनन्वयः ।

उपमानेन तत्त्वं च भेदं च वदतः पुनः ।
ससन्देहं वचः स्तुत्यै ससन्देहं विदुर्यथा ॥

तस्योदाहरणम्—

किमयं शशी न स दिवा विराजते
कुसुमायुधो न धनुरस्य कौसुमम् ।
इति विस्मयाद्विमृशतोऽपि मे मतिः
त्वयि धीक्षिते (वीक्षिते) न लभतेऽर्थनिश्चयम् ॥

इति(स)सन्देहः । इत्येतावदन[-वन-]न्वय[स]सन्देहालङ्कारौ भामहेन पृथगुदाहृतौ यौ तावदस्मा(-वस्मा-)भिः उपमास्वेव दर्शितौ । तथा हि । अनन्वयः असाधारणोपमा । यदुक्तम्—

चन्द्रारविन्दयोः कक्ष्यामतिक्रम्य मुखं तव ।
आत्मनैवाभवत्तुल्यमित्यसाधारणोपमा ॥

ससन्देहोऽपि सन्देहोपमा । यदुक्तम्—

किं पद्ममन्तर्भ्रान्तालि किं ते लोलेक्षणं मुखम् ।
मम दोलायते चित्तमितीयं संशयोपमा ॥

संशयसन्देहयोश्च पर्यायत्वादभेदः । उपमारूपकलक्षणं यथा—

उपमानेन तद्भावमुपमेयस्य च साधयन् ।
यां वदत्युपमामेतदुपमारूपकं यथा ॥

तस्योदाहरणम्—

समग्रगगनायाममानदण्डो रथाङ्गिनः ।
पादो जयति सिद्धस्त्रीमुखेन्दुनखदर्पणः ॥

एतदप्युपमारूपकं भामहोक्तमस्माभी रूपकेष्वेव दर्शितम् । तथाहि—

इष्टं साधर्म्यवैधर्म्यदर्शनात् गौणमुख्ययोः ।
उपमाव्यतिरेकाख्यं रूपकद्वितयं यथा ॥

तस्योदाहरणम्—

अयमालोहितच्छायो मदेन मुखचन्द्रमाः ।
सन्नद्धोदयरागस्य चन्द्रस्य प्रतिगर्जति ॥

इतीदमुपमा[रूपकं] रूपकेष्वेव दर्शितमिति न पृथगुद्दिश्यते ।
भामहेनोक्तं उत्प्रेक्षावयवलक्षणं यथा—

श्लिष्टस्यार्थेन संयुक्तं किञ्चिच्चोत्प्रेक्षयाऽन्वितम् ।
रूपकार्थेन च पुनरुत्प्रेक्षावयवो यथा ॥

तुल्योदयावसानत्वात् गतेऽस्तं प्रति भास्वति ।
वासाय वासरः क्लान्तो विशतीव तमोगुहाम् ॥ इति ॥३५८॥

उत्प्रेक्षाभेद एवासावुत्प्रेक्षावयवोऽपि च ।

१. उत्प्रेक्षावयवोऽप्युत्प्रेक्षाभेद एव । अयं चोत्प्रेक्षालङ्कारप्रपञ्च-दर्शनेनैवोदाहृत इति न पृथगस्माभिरुद्दिश्यते ॥

२. भामहेन अनन्वयः, सन्देहः, उत्प्रेक्षावयवोऽपि च, त्रयोऽलङ्कारा दर्शिताः । तेषां उपमोत्प्रेक्षयोः अन्तर्भावः इत्याह—अनन्वयेति । त्वन्मुखं त्वन्मुखेन तुल्यम् इत्यनन्वयः ; सा असाधारणोपमेत्युक्ता । ससन्देहः

संशयोपमेत्युक्ता। उत्प्रेक्षावयवः उत्प्रेक्षाभेद एव द्रष्टव्यः ॥ ३५८ ॥

३. अनन्वयेति। अनन्वयससन्देहौ उपमास्वेव दर्शितौ। अनन्वयशब्देन विरोध उच्यते, सन्देहशब्देन संशयः। संशयशब्दः यथार्थज्ञानव्यतिरिक्ततया सन्देहतुल्यः; भ्रम इति यावत्। ससन्देहशब्देन संशयसहितो भ्रमः कथ्यते। उपमास्वेव इत्यत्र बहुवचनेन विरोधसंशयभ्रमाः त्रयोऽपि सूच्यन्ते। विरोधोपमायां विरोधः, संशयोपमायां संशयः, मोहोपमायां भ्रमश्च प्रदर्शितः। उपमारूपकं चापि रूपकेष्वेव दर्शितम्। उपमारूपकयोः सम्भेदो दर्शितः। उत्प्रेक्षेति। अत्र—

'अङ्गुलीभिरिव केशसञ्चयं
　सन्निगृह्य तिमिरं मरीचिभिः।
कुड्मलीकृतसरोजलोचनं
　चुम्बतीव रजनीमुखं शशी ॥'

इतिवत् अस्माभिः अनुदाहृतेषु एवंप्रायेषु उत्प्रेक्षावयवत्वमेव [न ?] सङ्कीर्णता। तस्मात् उत्प्रेक्षावयवोऽपि उत्प्रेक्षाभेद एव। विरोधोपमादयोऽपि उपमाभेद एव। उपमारूपकं च रूपकभेद एव, न तु सङ्कीर्णमित्यभिप्रायः। भ्रमव्युदासाय एवमुक्तम् ॥ ३५८ ॥

१. इदानीं सङ्कीर्णलक्षणं करोति—

**नानालङ्कारसंसृष्टिः संसृष्टिस्तु निगद्यते ॥ ३५९ ॥**

सङ्कीर्णमपि [संसृष्टिरिति] लक्ष्यनिर्देशः नानालङ्कारसंसृष्टिरिति तस्य लक्षणम्। उद्देशे सङ्कीर्णमित्यभिधाय निर्देशे संसृष्टिरित्यभिदधतो न दोषः सङ्कीर्णसंसृष्ट्योरित्ये[र]कार्थत्वात् ॥ ३५९ ॥

२. संसृष्टिं लक्षयति—नानेति ॥ ३५९ ॥

३. संसृष्ट्यलङ्कारमाह—नानेति। अत्र तुशब्देनापि विरुद्धोपमादीनां सङ्कीर्णता निवर्त्यते ॥ ३५९ ॥

**अङ्गाङ्गिभावसंस्थानं सर्वेषां समकक्ष्यता ।**
**इत्यलङ्कारसंसृष्टेर्लक्षणीया द्वयी गतिः ॥ ३६० ॥**

१. तस्यालङ्कारस्य संसृष्टेर्द्वौ भेदौ भवतः । तथा हि । अङ्गाङ्गिभावेनावस्थानमेकस्याङ्गभावोऽपरस्याङ्गिभावः गुणप्रधानभावस्तेन अवस्थानम् । तथा सर्वेषामलङ्काराणां समकक्ष्यता नैकस्यापि गुणप्रधानभावः किं तु सर्वेषामेकत्रोपात्तानामलङ्काराणां स्वतन्त्रता ॥ ३६० ॥

२. अलङ्कारसंसृष्टिद्वैविध्यमाह—**अङ्गेति** ॥ ३६० ॥

१. तदुदाहरति—

**आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम् ।**

इत्युपमा ।

**कोशदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥ ३६१ ॥**

कोशो द्रव्यं दण्डश्चतुरङ्गबलं ताभ्यां समग्राणां परिपूर्णानां किं दुष्करमरविन्दानास्ये[मे]षाम् । अरविन्दानां च कोशो मकरन्दास्पन्द [दं] गर्भः । दण्डो नालमिति शे[श्ले]षः ।

न च [नु] खल्वर्थे षष्ठी प्रतिषिद्धा । ततः कर्तरि तृतीयायां किमेभिर्दुष्करमिति भवितव्यमिति चेन्न । कर्तृकारक[का]विवक्षायां शेषषष्ठीत्यदोषः । पूर्वोक्तार्थसमर्थनपरत्वादर्थान्तरन्यासोऽयमिति संसृष्टिः ॥ ३६१ ॥

२. संसृष्टिमुदाहरति—**आक्षिपन्तीति** । मुग्धे अरविन्दानि ते मुखश्रियं आक्षिपन्तीत्युपमा, कोशदण्डसमग्राणामेषां किं दुष्करम् इत्यत्र अर्थान्तरन्यासश्च समकक्ष्यौ । कोशदण्डसमग्राणां इत्यत्र मुकुलनालसनाथानां इत्यर्थः, सधनबहुबलानां इत्यर्थश्च श्लिष्टौ । बलवतां किं दुष्करमस्तीति श्लेषः अर्थान्तरन्यासस्य अङ्गभावेन अवतिष्ठते । ननु एषां दुष्करमित्यत्र कर्तरि षष्ठी न प्राप्नोति, 'न लोकाव्यय—'इति प्रतिषेधात् इति

चेत्, नेयं कर्तरि षष्ठी, येन प्रतिषेधः स्यात्; किं तु अत्र सम्बन्धमात्रे षष्ठी, एषां सम्बन्धि कृत्यं किं दुष्करम् इति। अत्र सा श्लेषस्य अङ्ग-भावं द्योतयति ॥ ३६१ ॥

३. उदाहरति—आक्षिपन्तीति। अत्र श्लेषोपसर्जनः अर्थान्तर-न्यासः। भवन्ति च अरविन्दानि कोशदण्डसमग्राणि; तेन तेषां न कि-ञ्चिदशक्यम्। इति श्लेषद्वारेण अर्थं समर्थयन्तं अर्थान्तरन्यासं प्रति प्रस्तुत-साध्यवस्तुविशेषकतया स्थिताया उपमायाः अङ्गिभावो ज्ञायते। सम-कक्ष्यताया अपि उदाहरणमन्यत्र द्रष्टव्यम्। तच्च ईदृशम्—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥

अत्र उत्प्रेक्षाया उपमायाश्च समकक्ष्यतैव ॥ ३६१ ॥

**श्लेषः सर्वासु पुष्णाति प्रायो वक्रोक्तिषु श्रियम्।**
**भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम् ॥ ३६२ ॥**

१. (श्लेषः)सर्वासुपमादिषु वक्रोक्तिषु मध्ये श्रियं शोभां पुष्णाति। तदेव सर्वं वाङ्मयं द्विधा भिन्नं द्विप्रकारं भवति [स्वभावोक्तिः वक्रोक्तिश्चे-ति] ॥ ३६२ ॥

२. श्लेष इति। स्वव्या(स्वभावा)ख्यानव्यतिरिक्ता सर्वा अलंकृतिः वक्रोक्तिः इति उच्यते ॥ ३६२ ॥

३. श्लेष इति। श्लेषो न केवलं अर्थान्तरन्यास एव, सर्वासु वक्रोक्तिष्वपि श्रियं जनयति। वाङ्मयस्य द्वैविध्यं दर्शयति भिन्नमिति। स्वभावोक्तिः आद्यालङ्कारः; वक्रोक्तिशब्देन उपमादयः सङ्कीर्णपर्यन्ता अल-ङ्कारा उच्यन्ते ॥ ३६२ ॥

१. (भाविकं लक्षयति)-

**भाविकं त(कत्व)मिति प्राहुः प्रबन्धविषयं गुणम्। [ ॥३६३ ॥**
**भावः कवेरभिप्रायः काव्येष्वस्य व्यवस्थितिः (-ष्वासिद्धि यः स्थितः)**

परस्परोपकारित्वं सर्वेषां वस्तुपर्वणाम् ।
विशेषणानां व्यर्थानामक्रिया स्थानवर्णना ॥ ३६४ ॥

व्यक्तिरुक्तिक्रमबलाद्गम्भीरस्यापि वस्तुनः ।
भावायत्तमिदं सर्वमिति तद्भाविकं विदुः ॥ ३६५ ॥

(आचार्याः भाविकत्वमिति) (भाविका)लङ्कारलक्षणनिरूपणार्थमाहुः । प्रबन्धविषयं गुणम् । भावे भवो भावादागतो वा भाविकस्तस्य भावो भा[विकत्वं] .... (प्रब)न्धो विषयो गोचरो यस्यासौ प्रबन्धविषयो यो गुणः कवेस्तद्भाविकविस्त्वमित्युच्यते । अथ भावः क इत्याह—भावः कवेरभिप्रायः कवेः काव्यस्य कर्तुर्यद(योऽ)भिप्रायः स भाव इत्युच्यते केत्याह शास्त्रेषु [?]काव्यादिषु । स किमन्त इत्याह–आसिद्धिर्यः[यः] स्थितः । आदित आरम्य समाप्तिपर्यन्तः कवेर्योऽभिप्रायः तद्भाविकत्वम् । स भाविकोऽलङ्कार उच्यते ।

एतदेवोक्तं भामहेनापि—

भाविकत्वं पुनः प्राहुः प्रबन्धविषयं गुणम् ।
प्रत्यक्षा इव दृश्यन्ते यत्रार्था भूतभाविनः ॥ इति ॥ ३६३ ॥

तथा न केवलं प्रबन्धविषयं गुणमेव भाविकत्वमाहुः । किं तु परस्परोपकारित्वं च वस्तुपर्वणां सर्वेषां यत्तच्च भाविकत्वमाहुराचार्याः । किं ना(कान्ताऽ)भिधित्सितं त(ता क)था वस्तुशब्देनोच्यते । तस्य वस्तुनः पर्वाणि पर्वाणीव पर्वाणि कथावयवास्तेषामन्योन्योपकारकत्वम् । तथा विशेषणानां व्यर्थानां विरुद्धार्थानां विगतार्थानां वाऽक्रिया अकरणमप्रयोगो भाविकत्वम् । तथा स्थानवर्णना स्थाने उचिते प्रस्ताव एव परो (परं) न तु पुनर(क)स्मादेव कस्यचिद्वास्तवस्य [अवास्तवस्य वा]स्तवः । एतच्च भाविकत्वम् । तथा व्यक्तिरर्थव्यक्तिः । उक्तिक्रमबलात् उच्यते अनयेत्युक्तिस्तस्याः क्रमः परिपाटी तस्य बलं अभिधानवृत्तिः तस्मादुक्तिक्रमबलात् गम्भीरस्यापि कथावस्तुनो व्यक्तिः स्पष्टीकरणम् । एतत्सर्वं भावायत्तं कवेरभिप्रायायत्तमिति हेतोस्तद्भाविकत्वं (कं) विदुः ॥ ३६५ ॥

२. भाविकं लक्षयति—भाविकं तमिति । भावः कवेः अभिप्रायः ; तेन निर्वृत्तं प्रबन्धव्याप्तं गुणं भाविकं प्राहुः । काव्योपात्तानां भूधरादिवर्णनानां परस्परानुकूलत्वम्, अकिञ्चित्करस्य विशेषणस्य अकरणम्; अपेक्षितस्थाने विशेषकरणम् , गम्भीरस्य अर्थस्य श्लेषेण प्रकाशनम्—उपलक्षणमेतत् ; लक्ष्मीश्रीशब्दादिबन्धचिह्नम् इत्यादि सर्वं भाविकं विदुः ॥३६३-३६५ ॥

३. भाविकं तमिति । काव्यशरीरगोचरधर्माः कवेः अभिप्रायाधीनाः । भाविकालङ्कारस्तु महाकाव्येष्वेव नियमेनावस्थितः ॥ ३६३-६५॥

१. तथा अत्यल्पमिदमुक्तम् । किं च–

यच्च सन्ध्यङ्गवृत्त्यङ्गलक्षणाद्यागमान्तरे ।
व्यावर्णितमिदं चेष्टमलङ्कारतयैव नः ॥ ३६६ ॥

यच्चागमान्तरे काव्यलक्षणादलङ्कारभावात् [गोचरात्] शास्त्रादन्य आगमः आगमान्तरं भरतशास्त्रं तस्मिन्नागमान्तरे यच्च यच्च (वृत्ति)प्र(वृ)त्त्यङ्गम(सन्धि) सन्ध्य(ङ्ग)लक्षणादि व्यावर्णितं भरतमुनिना तच्चेह काव्यालङ्कारे अस्माकमिष्टम् । अलङ्कारतया (इति वि)शेषः । वृत्तिप्र(वृ)त्यङ्गसलिल(न्धि)-सन्ध्यङ्गानि भरतशास्त्रादेवावगन्तव्यम् (यानि)॥ ३६६ ॥

२. किमियन्त एव अलङ्काराः ? नेत्याह–यदिति । ये मुखं, प्रतिमुखं , गर्भः , अवमर्शः, निर्वहणं , इति पञ्च सन्धयः ; तेषां उपक्षेपपरिकरादीनि अङ्गानि ; कैशिकी , आरभटी , सात्वती , भारती इति चतस्रो वृत्तयः ; तासाम् अङ्गानि नर्मतस्फिञ्जतत्स्फोटादीनि । लक्षणं विभूषणं च अक्षरसंहतिश्च । आगमान्तरे भरते ॥ ३६६ ॥

३. तदुपपादयति यदिति । आगमान्तरे लक्षणान्तरे–मुखं , प्रतिमुखं , गर्भः , अवमर्शः , उपसंहारः, इत्येते सन्धयः ; उपक्षेपादीनि गर्भ-

सन्ध्यङ्गानि , अपवादादीनि अवमर्शसन्ध्यङ्गानि , सन्ध्यादीनि ।
सन्ध्यङ्गानि ; कैशिकी आरभटी , सात्त्वती, भारती चेति चतस्रो वृ
नर्मनर्मस्फिञ्जनर्मस्फोटनर्मगर्भाः कैशिक्यङ्गानि ; संक्षिप्तकः, अवपातः,
स्थापनं, संस्फोटः, इति आरभट्यङ्गानि ; उत्थापिकः, परिवर्तकः, संघात
इति सात्वत्यङ्गानि ; प्ररोचना, प्रस्तावना, वीथी, प्रहसनम् इति भारत्यङ्गानि
आदिशब्देन पताकादीनि गृह्यन्ते । तत् अलङ्कारतया इष्टम् इत्यर्थः ।
च-शब्देन शास्त्रान्तरसिद्धः रसविषये वृत्तिनियमोऽपि भूषणतया ग्राह्यः इत्य-
र्थः । वृत्तिनियमोऽपि एवम्—

शृङ्गारे चैव हास्ये च वृत्तिः स्यात् कैशिकी तथा ।
सात्वती चापि विज्ञेया वीराद्भुतरसाश्रया ॥
रौद्रे भयानके चैव वृत्तिरारभटी भवेत् ।
बीभत्से करुणे चैव भारती वृत्तिरिष्यते ॥ ३६६ ॥

१. इदानीं प्रकृतमुपसंहरन्नाह—

**पन्थाः स एष विवृतः परिमाणवृत्त्या**
**संक्षिप्य विस्तरमनन्तमलंक्रियाणाम् ।**
**वाचामतीत्य विषयं परिवर्तमाना-**
**नभ्यास एव विवरीतुमलं विशेषान् ॥ ३६७ ॥**

अलङ्काराणां पन्था मार्गो वैदर्भगौडीयभेदभिन्नः स एव चिरन्तनै-
राचार्यैरुक्तोऽस्माभिर्विवृतः श्लेषप्रसादादिरूपेण । तथा स एव पन्थाः उपमा-
दीनां भाविकपर्यन्तानामलंक्रियाणां विवृतः । कथं विवृतः इत्याह—संक्षि-
प्त(प्य) विस्तर(रं) व्यासमनन्त(म)पर्यन्तं प्रतिकाविस्थितं संहृत्य । तदुक्तम्—

इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् ।
तथाऽपि न तदाख्यातुं सरस्वत्याऽपि शक्यते ॥

कथा विवृत इत्याह—परिमाणवृत्त्या। परिमाणमियत्ता। तथा हि—वैदर्भमार्गस्य दश प्राणाः अर्थालङ्काराश्चोपमादयो नापरे इति। ये पुनः प्रतिपुरुषाभिप्रायभिन्ना विशेषा वाचां विषयं गोचरमतीत्य अतिक्रम्य स्थिता अवागोचरास्तान् विशेषान् विवरीतुमभ्यास एवालं समर्थो न पुनराचार्योपदेशः। तदुक्तम्—

'वहुशो बहुशो(लो ?)पायं कालेन बहुनास्य (थ ?) च।
गच्छन्त्यत्र(भ्या ?)सतस्तस्य गुणदोषाः प्रकाशताम्॥

इति दण्डिकृतालङ्कारस्य
टीकायां
वादिजङ्घालविरचितायां
द्वितीयः परिच्छेदः समाप्तः।

---

२. पन्था इति। उपमारूपकाक्षेपादिदर्शितप्रपञ्चन्यायेन अन्येष्वपि अलङ्कारेषु अन्तर्भेदाः ऊहनीयाः। तल्लक्षणाभ्यास एव तान् विवृणोति॥ ॥ ३६७॥

इति तरुणवाचस्पतिकृतायां काव्यादर्शटीकायां
द्वितीयः परिच्छेदः।

---

३. एते स्थूलरूपा एव दर्शिताः; सूक्ष्माः पुनरलङ्काराः अभ्यासवशेन ज्ञायन्ते इतीदमाह—पन्था इति। उक्तेषु लक्षणान्तरेषु दर्शितानामन्येषाम् अन्तर्भावः इति यावत्।

इति दण्ड्यलङ्कारव्याख्याने हृदयङ्गमे अर्थालङ्कारविभागो नाम
द्वितीयः परिच्छेदः।

---

## तृतीयः परिच्छेदः ।

अथ शब्दालङ्काराः ।

[विवृत(बुध):श्रीधरं नत्वा सत्यवाक्यं जगत्पतिम् ।
दण्डिनोऽलंकृतेष्टीकां कुरुते वादिजङ्घलः ॥] *

वैदर्भगौड(डीय)मार्गविभावनापरिच्छेदे माधुर्यमाचिख्यासुनाचार्येण 'तद्रूपा हि पदासत्तिः सानुप्रासा रसावहे'त्यनुप्रासप्रसङ्गेन [तल्लक्षणमुक्तम्]–

'वर्णावृत्तिरनुप्रासः पादेषु च पदेषु च ।'

इति । अनुप्रासविशेषण एव यमकम् । (यदुक्तम्)–

'आवृत्तिमेव सङ्घातगोचरां(रं) यमकं विदुः ।'

इति । अनुप्रासलक्षणाधिकारे प्रसङ्गतो यमकमप्युद्दिष्टम्—

तत्तु नैकान्तमधुरमतः पश्चाद्विधास्यते ।

इति न प्रपञ्चितम् । त[दि]दानीं असाधारणं श्लेषादि साधारणं च स्वभावाख्यानाद्यलङ्कारजातमुपवर्ण्य अवसरप्राप्तमव्यपेतेत्यादिना यमकलक्षणं निर्दिशति—

**अव्यपेतव्यपेतात्मा व्यावृत्तिर्वर्णसंहतेः ।**
**यमकं तच्च पादानामादिमध्यान्तगोचरम् ॥ १ ॥**

वर्णानामक्षराणां संहतेः सङ्घातस्य विशेषेण पदपादाद्यनुलोमप्रतिलोमादिना या आवृत्तिः आवर्तनं पुनःपुनरुक्तिः किंभूता अव्यपेतव्यपेतात्मा । अव्यपेतः पदपादादिना अव्यवहितः व्यपेतो व्यवहितः आत्मा स्वभावो यस्याः सा अव्यपेतव्यपेतात्मा व्यावृत्तिर्वर्णसंहतेः यमकमित्यनेन यमकलक्षणमुक्तम् । इदानीं तच्चेत्यादिना तस्य विषयं निरूपयति । पादानामिति । वृत्तस्य

---

* अयं श्लोकः क्वचिन्न पठ्यते ।

जातेर्वा आदिश्च मध्यं चान्तश्च गोचरो विषयः प्रदेशः स्थानं यस्य तत् पादानामादिमध्यान्तगोचरम् ॥ १ ॥

२. प्रथमपरिच्छेदे वर्णावृत्तिरूपानुप्रासकथने—'आवृत्तिं वर्णसङ्घात-गोचरां यमकं विदुः । तत्तु नैकान्तमधुरमतः पश्चाद्विधास्यते'—इत्युक्तम् । द्वितीयपरिच्छेदे एतद्व्यतिरिक्ताः सर्वे अलङ्कारा दर्शिताः । अवसरप्राप्तोऽयमलङ्कारः प्रपञ्च्यते । यमकं लक्षयति—अव्यपेतेति । अत्र विभिन्नार्थायाः वर्णसंहतेः आवृत्तिः भवति यमकम् । विभिन्नेति विशेषणाभावे लाटानुप्रासे अतिव्याप्तिः स्यात् । विशेषणयोगेऽपि एकवर्णावृत्तिपरम्परायां अव्याप्तिः स्यात् ; यथा—

विविधधववना नागगर्धधनाना-
  विविततगगना नाममज्जज्जनाना ।
रुरुशशललना नाववन्धुन्धुनाना
  मम हि हिततनानाननखस्वनाना ॥

इत्येकवर्णावृत्तिरूपस्य यमकस्य विद्यमानत्वात् । वर्णसंहतेः आवृत्तिरिति प्रयोगबाहुल्यात् उक्तमिति न अव्याप्तिः । वर्णान्तरैः अव्यवहिता अव्यपेता । वर्णान्तरैः व्यवहिता व्यपेता ॥ १ ॥

१. इदानीं तत्प्रभेदानाह—

**एकद्वित्रिचतुष्पादयमकानां विकल्पनाः ।**
**आदिमध्यान्तमध्यान्तमध्याद्याद्यन्तसर्वतः ॥ २ ॥**

एकः[श्च] द्वौ च त्रयश्च चत्वारश्च । ते च पादाश्च । तेषु यानि यमकानि, तेषां या विकल्पनाः । कति भवन्तीत्याह—'आदिमध्यान्तमध्यान्त-मध्याद्याद्यन्तसर्वतः' भवन्ति । आदिश्च मध्यश्चान्तश्च मध्यान्तौ च मध्यादी चाद्यन्तौ च सर्वतश्च सर्वेषु सर्वत्र त्रिष्वपि स्थानेष्विति । तथा हि । पादादि-

यमकमेकम् , अन्यत्पादमध्यम् , (ध्ये) अपरं पादान्ते , पादस्य मध्यान्तयो-रन्यत् , मध्याद्योरन्यत्, आद्यन्तयोश्चापरं, पादस्यादौ मध्ये चान्ते चान्य-दिति ॥ २ ॥

२. स्थानविकल्पनानि आह—एकेति । प्रथमपादे द्वितीयपादे तृतीयपादे चतुर्थपादे इति एकपादादियमकाः चत्वारः । प्रथमद्वितीययोः प्रथमतृतीययोः प्रथमचतुर्थयोः द्वितीयतृतीययोः द्वितीयचतुर्थयोः तृतीयचतु-र्थयोः इति द्विपादादियमकभेदाः षट् । प्रथमद्वितीयतृतीयेषु प्रथमद्वितीय-चतुर्थेषु प्रथमतृतीयचतुर्थेषु द्वितीयतृतीयचतुर्थेषु इति त्रिपादादियमकभेदाः चत्वारः । चतुष्पादादियमकं एकम् । इति पादादिभेदस्य पञ्चदश भेदाः । एवं मध्ययमकस्य अन्तयमकस्य आदिमध्ययमकस्य आद्यन्तयमकस्य मध्या-न्तयमकस्य आदिमध्यान्तयमकस्य च । इति सप्तानां प्रत्येकं पञ्चदशेति पञ्चाधिकशतम् अव्यपेतस्य । तथा व्यपेतस्य ॥ २ ॥

**अत्यन्तबहवस्तासां भेदाः संभेदयोनयः ।**
**सुकरा दुष्कराश्चैव वर्ण्यन्ते तत्र केचन ॥ ३ ॥**

१. एवमेकद्वित्रिचतुष्पादानां आदिमध्यान्तभेदेन मध्यान्तमध्याद्या-द्यन्तसर्वतश्च पादपदा(व्यवहित)व्यवहितोभयसङ्कीर्णभेदतोऽत्यन्तबहवः । तेषां यमकानां भेदा विकल्पाः सम्भेदः साङ्कर्यं योनिरुत्पत्तिस्थानं येषां ते संभेदयोनयः । तेषु च यमकेषु केचित् सुखेन क्रियन्ते सुकराः दुःखेन क्रियन्त इति दुष्कराः तेषु उभयेषु प्रदर्श्यन्ते केचन । तथा हि—दिङ्-मात्रप्रदर्शनार्थं सुकरा अव्यवहिताः मानेनेत्यादयः , सुकरा व्यवहिताः मधु-रेणेत्यादयः, व्यवहिताव्यवहिताः नयानयेत्यादयः, सङ्कीर्णा धराधरेत्यादयः, दुष्कराः अव्यवहितव्यवहितोभयसङ्कीर्णरूपाश्च स्थिरायत इत्यादयः ॥ ३ ॥

२. अत्येति । तासां सम्भेदयोनयः परस्परमिश्रणेन जाताः भेदाः

वक्तुं न शक्यन्ते । तत्र अव्यपेतव्यपेतयोः, अव्यपेते व्यपेते च, सुकराः दुष्कराश्च क्वचन वर्ण्यन्ते ।

यत्स्यादपुनरुक्ताय पुनरुक्तमनन्तरम् ।
पदानामक्षराणां वा स्यात्तद्यमकलक्षणम् ॥

तदादिमध्यान्तसमानपादव्युत्क्रान्तसामुद्गसमाह्वयानि ।
आद्यन्तमन्तादि च काव्ययोगेष्वष्टौ समासाद्यमकान्युशन्ति ॥ ३ ॥

१. तत्राव्यपेतं प्रथमपादादियमकमाह—

**मानेन मानेन सखि प्रणयो भूत्प्रिये जने ।**
**खण्डिता कण्ठमाश्लिष्य तमेव कुरु सत्रपम् ॥ ४ ॥**

इति । गर्वेणानेन एवंविधः[-धेन] प्रणयः सम्बन्धः सखि मा भूत् । मानमेवंविधं प्रियतमविषयं मा कार्षीः इति काचित् कान्तं प्रति कुपिता मानिनी सख्यैवमनुनीयते, हे सखि, त्वं खण्डिता, त्वं विप्रलब्धा तस्य कण्ठमाश्लिष्य आलिङ्ग्य तमेव प्रियं सत्रपं सलज्जं कुरु । इयं साध्वी मया वञ्चिताऽपि स्वभावादनुरक्ता । अननुनीताऽपि स्वयमागता । अहं पुनर्निर्घृणः कृतापराधोऽपि न तामनुनयामीति मत्वा त्वयि गतायां स दयितः सलज्जः स्वयं भविष्यतीति । [खण्डिता(त)मिति पाठः । तदा खण्डितं नखेन व्रणितं कण्ठमुपगुह्येत्यर्थः । ]

२. एकपादादियमकानि चतुर्भिरुदाहरणैर्दर्शयति_मानेनेति। सखि प्रियजने सापराधे अनेन मानेन सह प्रणयो मा भूत् । तस्मिन् अन्यासक्ते ज्ञातेऽपि, तत् अनादृत्य स्वयमेव कण्ठमाश्लिष्य तमेव सत्रपं कुरु, इति प्रसादिता सख्या नायिका ॥ ४ ॥

१. द्वितीयपादाद्यव्यपेतं यमकमुदाहरति—

**मेघनादेन हंसानां मदनो मदनोदिना ।**
**नुन्नमानं मनः स्त्रीणां सह रत्या विगाहते ॥ ५ ॥**

घनगर्जितेन, किंभूतेन, हंसानां मदनोदिना मदं नुदति निरस्यत्येवंशीलं यत्तेन नुन्नमानं मनः स्त्रीणां नुन्नः निरस्तः मानो गर्वः कापो वा [यस्य] तन्मदनः स्मरः रत्या स्वभार्यया सह विगाहते सकुटुम्बः अध्यास्त ॥ ५ ॥

२. मेघेति । हंसानां मदनोदिना हर्षहारिणा मेघनादेन प्रेरितमानं स्त्रीणां मनः सह रत्या मदनो विगाहते । प्रावृषि मानिन्यः त्यक्तमानाः स्वयमेव रत्यै प्रवृत्ताः इत्यर्थः ॥ ५ ॥

१. तृतीयपादाद्यव्यपेतं यमकमाह—

**राजन्वत्यः प्रजा जाता भवन्तं प्राप्य संप्रति ।**
**चतुरं चतुरम्भोधिरशनोर्वीकरग्रहे ॥ ६ ॥**

शोभनो राजा यस्यां सा [यासां ता]राजन्वत्यः । का इत्याह प्रजाः लोकाः । संप्रति इदानीं भवन्तं त्वां प्राप्य । किंभूतं चतुरं कुशलं, कस्मिन्, चतुरम्भोधिरशनोर्वीकरग्रहे । चत्वारः अम्भोधय एव रशना मेखला यस्याः सा तथाभूता । सा च (सा)उर्वी च पृथ्वी तस्याः करः धान्यषड्भागादिः पाणिश्च । तस्य ग्रहे ग्रहणे इति ॥ ६ ॥

२. राजन्वत्य इति । अत्र राजन् इति पदमध्याहार्थम् ॥ ६ ॥

१. चतुर्थपादाद्यव्यपेतं यमकमाह—

**अरण्यं कैश्चिदाक्रान्तं कैश्चित् सद्म दिवौकसाम् ।**
**पदातिरथनागाश्वरहितैरहितैस्तव ॥ ७ ॥**

विपिनं कैश्चिदेकैराक्रान्तः(म्) गतम् । अन्यैरपरैः दिवौकसाममराणां सद्म वेश्माक्रान्तम् । एतदुक्तं भवति कैश्चिद्विपिनं यातं, कैश्चिन्मृतमिति । पदातिरथनागाश्वमिति सेनाङ्गत्वात् द्वन्द्वैकत्वम् । तेन रहितैः विकलैः अहितैस्तवारिभिरिति ॥ ७ ॥

२. अरण्यमिति। सुगमम् ॥ ७ ॥

१. एवं पादादिविकल्पाश्चत्वारः। प्रथमद्वितीयपादयोरादियमकमाह—

मधुरं मधुरम्भोजवदने वद नेत्रयोः।
विभ्रमं भ्रमरभ्रान्त्या विडम्बयति किन्नु ते ॥ ८ ॥

मधुरं रम्यं, मधुर्वसन्तः। हे अम्भोजवदने पद्ममुखि! वद ब्रूहि। ते तव नेत्रयोः चक्षुषोः, विभ्रमं विकासं, भ्रमरभ्रान्त्या भ्रमराणां भ्रान्तिः तया भ्रमरभ्रान्त्या, विडम्बयति अनुकरोति। किं नु इति वितर्के ॥ ८ ॥

२. द्विपादादियमकानि षड्भिरुदाहरणैर्दर्शयति—मधुरमिति। हे अम्भोजवदने तव नेत्रयोः मधुरं विभ्रमं भ्रमरभ्रान्त्या मधुमासो विडम्बयति किन्नु? वद। किमिति आक्षेपे; अनुकर्तुं न शक्नोतीति प्रियचाटुः ॥८ ॥

१. प्रथमतृतीयपादयोरादियमकमाह—

वारणो वा रणोद्दामो हयो वा स्मर दुर्धरः।
न यतो नयतोऽन्तं नस्तदहो विक्रमस्तव ॥ ९ ॥

हस्ती वारणे (णः) संग्रामे उद्गतं दाम बन्धनं यस्याः सा(-स्यासौ) उद्दामः उच्छृङ्खलः। अथ च वारणोद्दामो वारणोद्धत इति। वाशब्दः पक्षान्तरे समुच्चये वा। हयः तुरङ्गमो वा, दुर्धरः अप्रधृष्यः। किं कुर्वतः नयतः किमन्तं नाशं नः अस्मान् यतः यस्मात्, अहो विस्मये। विक्रमस्तवेति। दुःखेन ध्रियते यो वारणः तुरङ्गमो वा स ते स्मर न विद्यते। तथाऽपि त्वमस्मान् जयसि इत्येकाकिनो विजयित्वमाश्चर्यहेतुरित्यर्थः ॥ ९ ॥

२. वारण इति। हे स्मर अस्मान् अन्तं नयतः प्रापयतः तव रणोद्दामो वारणो वा, दुर्धरो हयो वा, नास्ति। वाशब्दश्चार्थे। यतः यस्मात्,तत् तस्मात्, तव विक्रमः अहो विस्मयनीयः ॥ ९ ॥

१. प्रथमचतुर्थपादादियमकमाह—

राजितैराजितैक्ष्ण्येन जीयते त्वादृशैर्नृपैः ।
नीयते च पुनस्तृप्तिं वसुधा वसुधारया ॥ १० ॥

राजितैः शोभितैः आजौ संग्रामे तैक्ष्ण्येन तीव्रत्वेन जीयते रिपुहस्ताद् आच्छिद्यते त्वादृशैर्नृपैः। केवलं न जीयते नीयते च पुनः पुनरपि तृप्तिं वसुधा पृथ्वी वसु वित्तं तस्य धारा दानप्रवाहः। तया। अत्र वसुधास्थाः प्राणिनः वसुधाशब्देनोच्यन्ते। तात्स्थ्यात् ताच्छब्द्यम्। मञ्चाः क्रोशन्तीति यथा॥ १० ॥

२. राजितैरिति। आजितैक्ष्ण्येन समरपाटवेन राजितैः शोभितैः त्वादृशैर्नृपैः वसुधा जीयते; पुनः वसुधारया तृप्तिं नीयते च। इति कस्यचित् समरवीरस्य दानवीर्यकथनम्॥ १० ॥

१. द्वितीयतृतीयपादयोरादियमकमाह—

करोति सहकारस्य कलिकोत्कलिकोत्तरम्।
मन्मनो मन्मनोऽप्येष मत्तकोकिलनिःस्वनः॥ ११ ॥

करोति कुरुते। कलिका मञ्जरी। कस्य सहकारस्य चूतस्य सम्बन्धिनी। उत्कलिका उत्कण्ठा। तया उत्तरं समधिकं मम मनः मन्मनः मच्चित्तम्। न केवलं सैव मन्मनोऽत्यन्तमधुरः मधुरतरोऽप्येष मत्तकोकिलनिस्स्वनः। मत्तश्चासौ कोकिलश्च। तस्य निस्स्वनः शब्दः स चेत्यपिशब्दस्यार्थः। स चौत्सुक्यमधिकं करोतीत्यर्थः॥ ११ ॥

२. करोतीति। सहकारस्य कलिका मञ्जरी मन्मनः मच्चित्तम् उत्कलिकोत्तरम् उत्कण्ठाबहुलं करोति; मन्मनः मथने मन्यमानः पीडाकर इत्यर्थः; एष मत्तकोकिलनिस्स्वनश्च करोति॥ ११ ॥

१. द्वितीयचतुर्थपादयोरादियमकमाह—

> कथं त्वदुपलम्भाशाविहताविह तादृशीम् (शी) ।
> अवस्था नालमारोढुमङ्गनामङ्गनाशिनी ॥ १२ ॥

कथमाक्षेपे । त्वदुपलम्भाशा, तत्रोपलम्भः प्राप्तिःसङ्गः तत्र कांक्षा । तस्या विहतिः विघातः । तस्यां विहतौ विघाते सति इह अवसरे तादृशी अवस्था (नालं न समर्था) अपि तु समर्थैव आरोढुं आक्रमितुं कामङ्गनां स्त्रियं अङ्गनाशिनी अङ्गं नाशयत्येवंशीलं या(यस्याः)सा इति । तादृशीमिति पाठः । तदा सुकुमारहृदयामङ्गनामङ्गनाशिन्यवस्था कथमारोढुन्नालमित्यर्थः । कश्चित् सुभगः कयाचित् दूत्याऽभिधीयते ॥ १२ ॥

२. कथमिति । इह वसन्ते त्वत्प्राप्त्याशायाः विहतौ विघाते तादृशीं स्मरार्ताम् अङ्गनां अङ्गनाशिनी अवस्था कथं नारोहेत् ? सा मरिष्यत्येवेत्यर्थः ॥ १२ ॥

१. तृतीयचतुर्थपादयोरादियमकमाह—

> निगृह्य नेत्रे कर्षन्ति बालपल्लवशोभिना ।
> तरुणा तरुणान् कृष्टानलिनो नलिनोन्मुखाः ॥ १३ ॥

निगृह्य परिभूय, नेत्रे चक्षुषी, केन तरुणा पादपेन, कथंभूतेन बालपल्लवशोभिना अभिनवकिसलयभ्राजिष्णुना । तरुणान् यूनः । कृष्टान् पीडितान् अलिनः भ्रमराः कर्षन्ति बाधन्त इति । किंभूता अलिनः । नलिनोन्मुखाः पद्माभिमुखाः । क्लिष्टानिति पाठः । तत्र बाधितानित्ययमर्थो ग्राह्यः । एवं द्विपादादिविकल्पाः षट् ॥ १३ ॥

२. निगृह्येति । बालपल्लवशोभिना तरुणा चूतादिना, आकृष्टान् स्वाभिमुखीकृतान् तरुणान्, नलिनोन्मुखाः कमलवनचारिणः अलिनः भृङ्गाः नेत्रे निगृह्य, कर्षन्ति स्वाभिमुखान् कुर्वन्ति ॥ १३ ॥

१. त्रिपादादियमकविकल्पेषु प्रथमद्वितीयतृतीयपादादियमकमाह–

**विशदा विशदामत्तसारसे सारसे जले।**
**कुरुते कुरुतेनेयं हंसी मामन्तकामिषम् ॥ १४ ॥**

विशदा श्वेता हंसी कुरुते विदधाति, कं मां, किं अन्तकामिषं अन्तकस्यामिषं मांसम्। ग्रासं प्रभूतं वा। केन कुरुतेन कुत्सितं रुतं कूजितं, तेन। कुत्सितत्वं च विरहिजनमनःप्रातिकूल्यात्। क? जले सारसे। सरस इदं सारसम्। तत्र किंविशिष्टे? विशदामत्तसारसे विशन्त आमत्ताः (सारसाः) यस्मिन्। सारसो नाम पक्षिविशेषः ॥ १४ ॥

२. त्रिपादयमकानि चत्वारि दर्शयति—**विशदेत्यादिना**। अन्तः प्रविशदामत्तसारसपक्षिणि सारसे सरःसम्बन्धिनि जले स्थिता, विशदा इयं हंसी, कुरुतेन श्रवणपरुषेण रवेण मामन्तकामिषं कुरुते; पीडयति इत्यर्थः ॥

१. प्रथमद्वितीयचतुर्थपादादियमकमाह–

**विषमं विषमन्वेति मदनं मदनन्दनः(नम्)।**
**सहेन्दुकलयापोढमलया मलयानिलः ॥ १५ ॥**

विषं दुःसहं, विषं विषकार्यकारित्वेनाभेदोपचारात् मदनो विषमुक्तः। तमन्वेत्यनुव्रजति। मदनं कामम्। किंविशिष्टं मदनन्दनम्। नन्दनं नन्दयति सुखयति इति नन्दन आनन्दनो ममानन्दनो मदनन्दनः तं मदनन्दनं मत्पीडाकरम्। कोऽसौ मलयानिलः दक्षिणः पवनः। किमेकाकी नेत्याह। सहेन्दुकलया। चन्द्रलेखया सह। किंविशिष्टया वीतलाञ्छनया ॥ १५ ॥

२. विषममिति। विषमं तीक्ष्णं, विषं सन्तं मदनं स्मरं; मदनन्दनः मम अनन्दनः अप्रियो मलयानिलः, अपोढमलया त्यक्तकलङ्कया

इन्दुकलया सह, अन्वेति । मदनो मलयानिलश्चन्द्रकला च विषवत् बाधन्ते इत्यर्थः ॥ १५ ॥

१. प्रथमतृतीयचतुर्थपादादियमकमाह—

**मानिनी मा निनीषुस्ते निषङ्गत्वमनङ्ग मे ।**
**हारिणी हारिणी शर्म तनुतां तनुतां यतः ॥ १६ ॥**

मानिनी मे शर्म सुखं तनुतां तनोतु । किं चिकीर्षुः निनीषुः नेतुमिच्छुः । निषङ्गत्वमिषुधित्वं अनङ्ग काम (मा)मामित्यर्थः । किंविशिष्टा हारिणी हारोऽस्या अस्तीति हरणशीला हारिणी रमणीया, किं कुर्वतः तनुतां यतः व्रजतः ॥ १६ ॥

२. मानिनीति । हे अनङ्ग, मानिनी प्रिया, हारिणी हारवती, हारिणी मनोहारिणी, मा मां, ते तव, निषङ्गत्वं बाणतूणत्वं, निनीषुः नेतुमिच्छुः, तनुतां विरहकार्श्यं, यतः प्राप्नुतः, मे मम शर्म सुखं, तनुतां कुरुताम् । प्रणयकलहेन विमुखीं सतीं प्रियां मयि प्रसन्नां कुरु इत्यर्थः ॥ १६ ॥

१. द्वितीयतृतीयचतुर्थपादादियमकमाह—

**जयता त्वन्मुखेनास्मानकथं न कथं जितम् ।**
**कमलं कमलंकुर्वदलिमद्दलि मत्प्रिये ॥ १७ ॥**

जयता अभिभवता केन त्वन्मुखेन कानस्मान्,अकथं अस्तीत्यकथं(?) अकथं न विद्यते कथा शब्दो यस्मिन् तदकथम्,नेति प्रतिषेधे। कथमाक्षेपे। न कथं जितं अपि तु जितमेव। किं कमलं पद्मम् । किं कुर्वन् (त्)करक-(कमुदक)मलंकुर्वन्(त्)भूषयन्(त) । अलिमद्भ्रमरवत् दलान्यस्य सन्तीति दलि (मम प्रिया मत्प्रिया) अपि तु अलय एव मद्दलानि अलिमद्दलानि । मद्दलं वाद्यभेदः । तदस्यास्तीति अलिमद्दलि । मम प्रिय कान्ता मत्प्रिया ।

तस्याः सम्बोधनं हे मत्प्रिये । एतदुक्तं भवति सकथानस्मान् जयता त्वन्मुखेन कथारहितं कमलं सुतरामेव जितमिति । यो द [धृ]ष्टे सति सम्प्रभाषते तमप्यभिभवतः इतराभिभवनं सुकरमेवेति इति त्रिपादादियमकाश्चत्वारः ॥ १७ ॥

२. जयतेति । मत्प्रिये, अस्मान् जयता त्वन्मुखेन, अलिमत् नेत्रस्थानीयभृङ्गं, दलि कपोलस्थानीयदलं, कं जलम् अलङ्कुर्वत्, अकथं मूकं, कमलं कथं न जितम् । मूकत्वात् हीनतया जितमेव ॥ १७ ॥

१. सर्वपादादियमकमाह—

**रमणी रमणीया मे पाटलापाटलांशुका ।**
**वारुणीवारुणीभूतसौरभा सौरभास्पदम् ॥ १८ ॥**

रमणी कान्ता रमणीया रम्या मे मम, पाटल्याः पुष्पं पाटलं, पाटलमिवापाटलं, आपाटलमीषद्रक्तम् अंशुकं वस्त्रं यस्याः सा पाटलापाटलांशुका । केव वारुणीव । वरुणस्येयं वारुणी दिगिवारुणीभूता रक्ता । सूर्यस्येयं सौरी भा दीप्तिः यस्याः सा अरुणीभूतसौरभा । सुरभेर्भावः सौरभं सौगन्ध्यं तस्यास्पदं स्थानं सौरभास्पदम् । किञ्चित् [कश्चित्]कामी प्रियामेव [वं] वर्णयति । सर्वपादादिविकल्पः एक एव ॥ १८ ॥

२. चतुष्पादयमकं दर्शयति—रमणीति । पाटलापाटलांशुका पाटलकुसुमवदरुणांशुका रमणीया मे रमणी, अरुणीभूतसौरभा सायन्तनसमये अरुणीभूतसूर्यप्रभा, वारुणीव प्रतीचीव, सौरभास्पदं रम्यताभाजनं भवति ॥

१. एवमत्राव्यपेतयमकविकल्पान् पञ्चदशाभिधायोपसंहरन्नाह—

**इति पादादियमकमव्यपेतं विकल्पितम् ।**
**व्यपेतस्यापि वर्ण्यन्ते विकल्पास्तस्य केचन ॥ १९ ॥**

इति । एवं पादादियमकमव्यपेतं अव्यवहितं विकल्पितं विभक्तम् । तत्र ये (ते) षु यमकेषु व्यपेतस्यापि केचन विकल्पाः कतिपयविभागा वर्ण्यन्ते कथ्यन्ते । [मानेन]मानेनेति निरन्तरमावृत्त्या यमकस्याव्यपेतत्वं सान्तरमावृत्त्या व्यपेतत्वम् ॥ १९ ॥

२. अव्यपेतं पादादियमकमुपसंहृत्य व्यपेतं पादादियमकं प्रदर्शयितुमुपक्रमते—इतीति । व्यपेतयमके एकपादयमकं न सम्भवति, आदिमध्यान्तयमकत्वप्रसङ्गात् ॥ १९ ॥

१. इदानीं व्यपेतं पादादियमकमुदाहरति–

**मधुरेणदृशां मानं मधुरेण सुगन्धिना ।**
**सहकारोद्गमेनैव शब्दशेषं करिष्यति ॥ २० ॥**

मधुः चैत्रः एणः हरिणः तस्यै(स्ये)व दृशो यासां ताः एणदृशः मृगलोचनाः तासां मानं गर्वं शब्दशेषं नामावशेषं करिष्यति । केन सहकारोद्गमेन । किंभूतेन मधुरेण सुरमणीयेन सुगन्धिना सुरभिणा । प्रथमद्वितीयपादादियमकं व्यपेतपादादियमकं एकस्मिन् पादे न सम्भवतीति भिन्नपादमेवोदाह्रियते । एकपादे हि मध्यान्तयमकमाद्यन्तयमकं वा स्यादिति । एवं सर्वत्र व्यपेतयमकगतिरुन्नेया ॥ २० ॥

२. ततो द्विपादयमकानुदाहरति—मधुरिति । मधुः मधुमासः मधुरेण दृष्टिहारिणा सुगन्धिना सहकारप्रसवेनैव एणदृशां मानं शब्दशेषं करिष्यति ॥ २० ॥

१. प्रथमतृतीयपादादियमकमाह—

**करोऽतिताम्रो रामाणां तन्त्रीताडनविभ्रमम् ।**
**करोति सेर्ष्यं कान्ते च श्रवणोत्पलताडनम् ॥ २१ ॥**

करः हस्तः अतीव ताम्रः अतिताम्रः । अतिरक्तः । कासां रामाणां तन्त्रीताडनविभ्रमं करोति । तन्त्री वीणा तस्याः ताडनं तेन विभ्रमं विलासं करोति विधत्ते । न केवलं तमेव करोति । सेर्ष्यं यथा भवति तथा कान्ते श्रवणोत्पलेन कर्णावतंसोत्पलेन ताडनं हननं च करोति । करोति सेर्ष्यं कान्ते वा इति पाठः । तदा वाशब्दः समुच्चये । अथ वा (वा-)शब्द औपम्ये वर्तते । तेन कान्ते श्रवणोत्पलताडनमिव वीणावादनविभ्रमं करोति ॥ २१ ॥

२. कर इति । रामाणामतिताम्रः करः तन्त्रीताडनविभ्रमं वीणावादनविभ्रमं करोति ; सागसि प्रिये सेर्ष्यं श्रवणोत्पलताडनं च करोति ॥

१. प्रथमचतुर्थपादादियमकमाह–

**सकलापोल्लसनया कलापिन्यानुनृत्यते ।**
**मेघाली नर्तिता वातैः सकलापो विमुञ्चति ॥ २२ ॥**

सह कलापोल्लासनेन बर्होल्लासनेन वर्तत इति सकलापोल्लसना तया कलापिन्या मयूर्या अनु पश्चात् नृत्यते । मेघाली जलधरमाला । किंभूता नार्तिता नर्तितेव नर्तिता । अमि[ता] कैः वातैः पवनैः सकला निश्शेषा आ[अ]पः पानीयानि विमुञ्चतीति । अथ वा सकलेति मेघालीविशेषणम् । निश्शेषा मेघपंक्तिरित्यर्थः । उत कलः मधुरध्वनिः । तेन सह वर्तत इति सकला । तदानीमपि मेघालीविशेषणम् । [सकला (?) ननु[तु] सकलेत्येव [-त्यव]विशेषणम् । एकत्र सन्ध्यभावः । अन्यत्र मयूरध्वनिरिति [ऋक्पूरब्धूरिति] समासान्तप्रसङ्गतश्च सकलापा इति स्यात् । मेघसमय आयातो न पयोऽप्यापीति ज्ञापयितुं सर्वानेवमाह [?] ॥ २२ ॥

२. सेति । वातैः नर्तिता सकला मेघाली अपो विमुञ्चति; सकलोपाल्लसनया–कलापानां बर्हाणां उल्लसनेन मण्डलीकरणेन सहितया–

कलापिन्या बर्हिण्या अनुनृत्यते च ॥ २२ ॥

१. द्वितीयतृतीयपादादियमकमाह—

स्वयमेव गलन्मानकलि कामिनि ते मनः।
कलिकामिह नीपस्य दृष्ट्वा कां न स्पृशेद्दशाम् ॥ २३ ॥

स्वयमेव आत्मनैव हे कामिनि ते तव मनः।चित्तम्, किंभूतं गलन्मानकलि, मानो गर्वः कलिः कलहः गलन्तौ मनाक् नश्यन्तौ मानकली यस्मात् तत् गलन्मानकलि। अथ वा मान एव कलिः कलिरिव दुःखहेतुत्वात् गलन्नपसरन् यस्मात्। अथ वा मानेन कृतं(तः) कलिः क्रोध इति मध्यमपदलोपो समासः। इदानीमेव तवेत्थंभूतं मनो वर्तते। पुनर्नीपस्य कदम्बस्य कलिकां दृष्ट्वा विलोक्य कान्न स्पृशेद्दशां कामवस्थामासादयेदिति। सर्वामेवावस्थां स्पृशेदिति यावत्।

काचित् प्रियं प्रति क्रुद्धा। वर्षासमये अभ्युपगते क्रोधरहितां तां दृष्ट्वा सखी वदति॥ २३॥

२. स्वयमेवेति। गलन्मानकलि प्रवसत्प्रणयकलहम्॥ २३ ॥

१. द्वितीयचतुर्थपादादियमकमाह—

आरुह्याक्रीडशैलस्य चन्द्रकान्तस्थलीमिमाम्।
नृत्यत्येष चलच्चारुचन्द्रकान्तः शिखावलः ॥ २४ ॥

शिखावलः मयूरः नृत्यति नर्तनं करोति। किंभूतः लसच्चन्द्रकान्तः चन्द्रकाणामन्ताश्चन्द्रकान्ताः लसन्तः चारवः चन्द्रकान्ता यस्य तथा। किं कृत्वा आरुह्य। कां चन्द्रकान्तस्थलीम्। चन्द्रकान्त(ा) मणिविशेषाः। तेषां स्थलीं(ली)। तामिति सम्बन्धनीयम्। (ताम्। किंसम्बन्धिनी इयम्।) आक्रीडशैलस्य (आ)क्रीडन्ति दीव्यन्ति तस्मिन्निति (आ)क्रीडः। स चासौ शैलश्चेति क्रीडापर्वतः। तस्यां (स्य।) मेघसमय आयातोऽपि

तः । (न) सोऽयापीत्यमुमर्थमनेन सखीं ज्ञापयति ॥ २४ ॥

२. आरुह्येति । चलच्चारुचन्द्रकान्तः—चलन्तः चारवः चन्द्रकान्ताः यस्य सः–शिखावलः आक्रीडशैलस्य उद्यानशैलस्य चन्द्रकान्तस्थलीमारुह्य नृत्यति ॥ २४ ॥

१. तृतीयचतुर्थपादादियमकमाह—

**उद्धृता राजकादुर्वी ध्रियतेऽद्य भुजेन ते ।**
**वराहेणोद्धृता यासौ वराहेरुपरि स्थिता ॥ २५ ॥**

उद्धृता आच्छिन्ना गृहीता । कुतः राजकात् । राज्ञां समूहो राजकम् । तस्मादुर्वी मेदिनी । ध्रियते पाल्यते । अद्य संप्रति । भुजेन बाहुना । ते त्वदीयेन । कथंभूतेन [-यम्] वराहेणोद्धृतायासौ । वराहेण क्रोडवेषधारिणा हरिणा उद्धृता उत्क्षिप्ता । प्रक्षिप्ता प्रलयकाले जलधेः या असाविति । पुनरपि किंविशिष्टा वराहेरुपरि स्थिता । वरः श्रेष्ठः स चासावाहिश्च वराहिरनन्तः । तस्य वराहेरुपरि मस्तके स्थिता यासाविति कश्चित् कञ्चिद्राजानं स्तौति ॥ २५ ॥

२. उद्धृतेति । राजकात् राजसमूहात् उद्धृता अपहृता उर्वी अद्य तव भुजेन ध्रियते । या पूर्वं वराहेण उद्धृता समुद्रात् सा वराहेः शेषस्य उपरि स्थिता स्थापिता । स्थिता इत्यत्र अन्तर्भावितण्यर्थः तिष्ठतिः । पृथिवी सकला त्वया ध्रियत इत्यर्थः ॥ २५ ॥

१. प्रथमद्वितीयतृतीयपादानां आदियमकमाह—

**करेण ते रणेष्वन्तकरेण द्विषतां मनः ।**
**करेणवः क्षरद्रक्ता भान्ति सन्ध्याघना इव ॥ २६ ॥**

करेण बाहुना ते भवदीयेन रणेषु युद्धेषु अन्तं विनाशं करोतीत्येवं शीलः यः तेन । केषां अन्तकरेण द्विषतामरातीनामिति । अत्र सापेक्षत्वेऽपि गमकत्वादुपपदसमासः । देवदत्तस्य गुरुकुलमित्यादि(वद्) द्रष्टव्यम् ।

हताः मारिताः करेणवः गजाः भान्ति सन्ध्याघना इव क्षरत् श्च्योतत् रक्तं रुधिरं येभ्यः ते क्षरद्रक्ताः । अत एव सन्ध्याघनैरुपमीयते ॥ २६ ॥

२. अथ त्रिपादयमकानि दर्शयति करेणेति । सुगमम् ॥ २६ ॥

१. प्रथमद्वि(तृ)तीयचतुर्थपादादियमकमाह—

**परागतरुराजीव वातैर्ध्वस्ता भटैश्चमूः।**
**परागतमिव क्वापि परागततमम्बरम् ॥ २७॥**

वराह(परागः)प्रकृष्टा(ष्टो)यु(योऽ)गः पर्वतः तस्य तरवः । तेषां राजिः [राजी] पङ्क्तिः सा वातैः वन्ते वा(इव ध्वस्ताऽ)धः पातिते(ता) तव हदैः(भटैः) शूरैः चमूर्वाहिनी । वराह(परा)गतमिव प्रव(प)लायितमिव क्वापि परागो धूलिः तेन(त)तं व्याप्तमम्बरं गगनम् ॥ २७ ॥

२. तृतीयपादराहित्येन त्रिपादयमकोदाहरणं पाठेषु न दृश्यते । परेति—परा विपक्षभूता ; अगतरुराजी पर्वतवृक्षपंक्तिः वातैरिव, परा चमूः तव भटैः ध्वस्ता ; परागततं धूलिव्याप्तम् अम्बरं क्वापि परागतमिव नष्टमिव ॥ २७ ॥

१. द्वितीयतृतीयचतुर्थपादादियमकमाह–

**पातु वो भगवान् विष्णुः सदा नवघनच्छविः ।**
**स दानवकुलध्वंसी सदानवरदन्तिहा ॥ २८॥**

पातु रक्षतु । वो युष्मान् । भगवान् पुण्यवान् ज्ञानवान् वा । विष्णुः श्रीधरः । सदा नित्यम् । नवाश्च ते घनाश्चेति नवघनाः, तेषामिव द्युतिः छाया यस्य स नवघनद्युतिः कृष्णवर्णः स इति विष्णुः । किं विशिष्टः दानवकुलध्वंसी । दानवाः हिरण्याक्षकालनेमिकैटभादयः । तेषां कुलं समूहः वंशो वा । तद्ध्वंस(य)त इत्येवंशीलः । पुनरपि किंविशि-

ष्टः सदानवरदन्तिहा । सह दानेन मदेन वर्तत इति सदानः, स चासौ वरदन्ती च तं हतवानिति। स क(कि)लकुवलयापीडं मत्तं करीन्द्रं हतवान् । यद्यपि 'ब्रह्मभ्रूणवृत्रेषु क्विप्' इति ब्रह्मादिष्वेवोपपदेषु हन्तेर्भूते क्विप्। नान्योपपदे। तथा वि(ऽपि)शिष्टप्रयोगदर्शनाद्भवति ॥ २८ ॥

२. पात्विति। नवघनच्छविः कालमेघकान्तिः, दानवकुलध्वंसी असुरवंशघाती, सदानवरदन्तिहा मत्तकुवलयापीडघाती, स भगवान् विष्णुः सदा वः पातु ॥ २८ ॥

१. सर्वपादानामादियमकमाह—

**कमलेः समकेशान्ते कमलेर्ष्याकरं मुखम्।**
**कमलेख्यं करोषि त्वं कमलेवोन्मदिष्णुषु ॥ २९ ॥**

कं शिरः अलेः भ्रमरस्य समाः केशाः यस्य तत् समकेशि(शं)कालकुन्तलइ[मि]त्यर्थः। अलेस्समकेशमित्यत्र यमकत्वात् समासः। देवदत्तस्य गुरुपुत्रादिवत् द्रष्टव्यम्। त्वे[ते] त्वदीयम्। तथा सु(मु)खं कमलेर्ष्याकरं कमलं (अं)भोजं, तस्य ईर्ष्या अभ्यसूयां करोतीत्येवंशीलं तम्[त्]। कं पुरुषमलेख्यं गण्यं करोषि त्वं न कि(क)ञ्चिदन्त(:)पातिनं (न) करोषीत्यर्थः । केषु। उन्मदिष्णुषु उन्मादशीलेषु। के(व)। कमलेव लक्ष्मीरिव या वर्तसे ॥ २९ ॥

२. चतुष्पादयमकमुदाहरति—कमिति। ते तव कं शिरः अलेः भृङ्गस्य समकेशम्। मुखं कमलेर्ष्याकरम्। कमला लक्ष्मीरिव अभिरूपा त्वं कं युवानं उन्मदिष्णुषु अलेख्यं करोषि? शोभातिरेकेण सर्वानुन्मत्तान् करोषीत्यर्थः ॥ २९ ॥

**मुदा रमणमन्वीतमुदारमणिभूषणाः।**
**मदभ्रमदृशः कर्तुमदभ्रजघनाः क्षमाः ॥ ३० ॥**

२. चतुष्पादयमकमेव भिन्नरूपावृत्ति त्रिभिरुदाहरणैर्दर्शयति— मुदेत्यादिना । अन्वीतं सङ्गतम्; ई गतौ इत्यस्मात् कर्तरि निष्ठा। शेषं सुगमम् । अत्र प्रथमद्वितीययोः पादयोः एका आवृत्तिः ; तृतीयचतुर्थयोः एका आवृत्तिः ॥ ३० ॥

१. प्रथमद्वि(तृ)तीययोः द्वितीयचतुर्थयोः पादयोरादियमकमाह—

**उदितैरन्यपुष्टानामारुतैर्मे हृतं मनः ।**
**उदितैरपि ते दूति मारुतैरपि दक्षिणैः ॥ ३१ ॥**

इति । उदितैरुद्भूतैरन्यैः पुष्टानां परभृतानामारुतैरासमन्ततो रुतानि जीवि[शब्दि ?]तानि कूजितानि तैर्मदीयं कृ(हृ ?)तं पीडितं मनः चित्तम् । न परं तैरेव । उदितैरपि जल्पितैरपि । हे दूति त्वदीयैर्हृतं मतं(?) मे मनः तथा मारुतैरपि पवनैरपि दक्षिणैः केरलविषयादाय(ग)तैः॥ ३१ ॥

२. उदितैरिति । वसन्तकाले सापराधः सामदानादिभिः अप्रसादितप्रियः पश्चात्तापवत्या तया प्रेषितां कृतचाटुवचनां दूतीं प्रत्याह— अन्यपुष्टानां कोकिलानाम्, उदितैः जातैः, आरुतैः आरावैः, दूति तव उदितैः वचनैः, दक्षिणैः मारुतैरपि, मे मनो हृतम् । अत्र प्रथमतृतीययोः पादयोः एका आवृत्तिः ; द्वितीयचतुर्थयोरेका आवृत्तिः ॥ ३१ ॥

१. प्रथमचतुर्थयोः द्वितीयतृतीययोरादियमकमाह—

**सुराजितह्रियो यूनां तनुमध्यासते स्त्रियः ।**
**तनुमध्याः क्षरत्स्वेदसुराजितमुखेन्दवः ॥ ३२ ॥**

सुरा(र)या मदिरा(र)या जिता ह्रीर्लज्जा यासां ताः सुराजितह्रियः यूनां तरुणानां तनुः(नुं) शरीरमा(मध्या)सते अधितिष्ठन्ति स्त्रिय(ः। तनु)- कृशा(शं) मध्यं यासां ताः तनुमध्यमाः(?) क्षामोदर्यः । क्षरत्स्वेदसुराजित-

मुखेन्दवः । क्षरंश्चासौ स्वेदश्च क्षरत्स्वेदः । श्च्योतद्धर्माम्भः । तेन सुष्ठु राजिताः शोभित(ा)मुखेन्दवो यासां ताः । इति व्यपेतपादादियमकविकल्पास्त्रयोदश * ॥ ३२ ॥

२. खरेति । सुगममेतत् ॥ ३२ ॥

**इति व्यपेतयमकप्रभेदोऽप्येष दर्शितः ।**
**अव्यपेतव्यपेतात्मा विकल्पोऽप्यस्ति तद्यथा ॥ ३३ ॥**

१. इत्युक्तन्यायेन व्यपेतपादादियमकविकल्पोऽप्येष दर्शितः । अव्यपेतव्यपेतात्मा विकल्पोऽप्यस्ति । अव्यपेतः स्वावयववर्णावृत्त्या, व्यपेतो विजातीयपदपादा [द]व्यवधानात् । अव्यपेतव्यपेता(वा)त्मानौ ये(स्व)-भावौ यस्य स तथाभूतो भेदोऽप्यस्ति तृतीयो राशिरस्ति । यद्यप्ययमव्यपेतयमकविकल्प एवान्तर्भवति तथाऽपि उक्तलक्षणान्तर्गतोऽपि उभयथा व्यपदिश्यते । किञ्चिद्वैधर्म्यदर्शनात् । अस्ति हि लोके ह्य(व्य ?)पदेशः येभि-(पि) प्र(प्रा)सादनिवासिनः ते भूमिनिवासिनोऽपि अभिधीयन्त इति । तद्यथेत्यादिना उदाहरति ॥ ३३ ॥

२. व्यपेतयमकमुपसंहृत्य अव्यपेतव्यपेतादियमकं दर्शयाम इत्याह— इतीति । विकल्पो भेदः ॥ ३३ ॥

१. तत्र व्यपेताव्यपेतं प्रथमद्वितीययोः तृतीयचतुर्थयोः पादयोरादियमकमुदाहरति—

**साऽलं सालम्बकलिकासालं सालं न वीक्षितुम् ।**
**नालीनालीनवकुलानाली नालीकिनीरपि ॥ ३४ ॥**

सालं सालद्रुमं, किं विशिष्टं सालं, सालम्बकलिकासालं सालम्बाश्च

* (मुदारमण) என்ற श्लोकव्याख्यानं त्रुटित மாகையால் 13க்கு 12 தான் காணப்படுகிறது.

ताः कलिकाश्च ता एव सालः प्राकारो यस्या(सौ)सालम्बकलिकासालः। अथवा सालम्बकलिकाभिः सारः उत्कृष्टः तम्। सा आली सखी वीक्षितुं द्रष्टुं नालं न समर्था। न परं सालमेव। तथा नालीन् षट्पदानपि वीक्षितुं अलम्। कथंभूतान्। आलीनवकुलान् आलीन आश्रितो वकुलः केसरतरुः यैस्ते आश्रितवकुलाः तान्। तथा नालीकिनीरपि न सा पद्मिनीरपि द्रष्टुमलमिति। केचित् सपत्नीरपीति। कयाचिद्वसन्तसमयमधिकृत्य काचित् विरहव्यथाकदर्थिता उच्यते। यतो(?)विरहज्वरसम्भूतमनोज्ञारोचकस्य जनस्यैवंविधस्य रमणीयवस्तुदर्शनस्य दुःखहेतुत्वात्। तदुक्तम्। 'दुःखिते मनसि सर्वमसह्य'मिति। सालं सालमिति निरन्तरव्यावृत्त्या अव्यपेतात्मकत्वम्। कलिकेत्यादिना व्यवधानात् पुनः व्यपेतात्मकत्वम्॥ ३४॥

२. सेति। सा, अलं, सालम्बकलिकासालं, सालं, न वीक्षितुम्, न, अलीन्, आलीनवकुलान्, आली, नालीकिनीः, अपि। सा आली सखी सालम्बकलिकासालम् आलम्बमानमञ्जरीश्रेष्ठसहितम्—सालः सारः, रलयोरभेदात्—सालं वृक्षं चूतादिं वीक्षितुं न अलम्। आलीनवकुलान् आश्लिष्टवकुलकुसुमान् अलीन् भृङ्गान् नालीकिनीः पद्मिनीरपि वीक्षितुं नालमिति वाक्यद्वयमेतत्। अत्र प्रथमद्वितीययोः पादयोः एकमव्यपेतव्यपेतं, तृतीयचतुर्थयोः एकमव्यपेतव्यपेतम्॥ ३४॥

१. प्रथमचतुर्थयोः द्वितीयतृतीययोः पादादियमकमाह—

**कालं कालमनालक्ष्यतारतारकमीक्षितुम्।**
**तारतारम्यरसितं कालं कालमहाघनम्॥ ३५॥**

का विरहिणी कालं समयं वीक्षितुं द्रष्टुं अलं न कदा(का)चिदित्यर्थः। किंविशिष्टमित्याह अनालक्ष्यतारतारकं अनालक्ष्याः ताराः उज्ज्वलाः भास्वराः तारकाः ज्योतींषि यस्मिन्नसौ तत्तथा। तारतारम्यरसितं तारं उच्चैःश्रुतिः

तस्य भावः तारता तया रम्यं रमणीयं रसितं गर्जितं यस्मिन् तम् । अथवा तारतयाऽरम्यं अरमणीयं विरहित्वात् । तं(?) कालं(:) कृतान्त(: । तमिव) । मरणात्मकत्वात् । तथा कालमहाघनं कालाः महान्तो घना यस्मिन्निति । ननु(तु) कालशब्दो वर्षापर्यायो व्याख्यातव्यः । तस्यासाधारणविशेषणत्रयोपादानादेव लब्धत्वात् ! अतो यमपर्यायो व्याख्यायते । अन्यथा अर्थादापन्नस्य स्वशब्देन पौ(पु)नर्वचने पौनरुक्त्यदोषप्रसङ्गः ॥३५॥

२. प्रथमतृतीययोरेकमव्यपेतव्यपेतं, द्वितीयचतुर्थयोरेकमव्यपेतव्यपेतमुदाहरणीयम् ; तन्न दृश्यते पाठेषु । केति–का, अलं पर्याप्ता , अनालक्ष्यतारतारकं मेघैः अदर्शितधवलतारकं, तारतारम्यरसितम् उच्चतया अरम्यं दुःसहं रसितं स्तनितं यस्मिन् तं, कालं मृत्युभूतं, कालमहाघनं कृष्णबृहन्मेघम् ; एवंभूतं कालं प्रावृषम्, ईक्षितुं का पर्याप्ता ? सामर्थ्याद्विरहिणीति गम्यते । अत्र प्रथमचतुर्थयोः पादयोरेकमव्यपेतव्यपेतं द्वितीयतृतीययोरेकम् ॥ ३५ ॥

१. सर्वपादादियमकमाह–

याम यामत्रयाधीनायामया मरणं निशा ।
यामयाम धिया स्वार्त्यायामया मथितैव सा ॥ ३६ ॥

हे सखे या(ा) वल्लभामया(म)गताः स(:) किं वपुषेत्याह धिया बुद्ध्या सङ्कल्पनेनेति यावत् । सा वल्लभा मया सह मथितैव बाधितैव । पीडितैव(इति) यावत् । किंभूता सेत्याह अस्वार्त्याया(या)असवः प्राणाः तेषामार्तिः पीडा मद्विरहव्यथा[ता–]समन्तादयते गच्छति अनुसरतीत्यस्वार्त्याया:(या)। पचादिपाठादच् । जलधरादिवत् । अतो न कर्मण्यण् । तस्मिन् सति दोषः । कया मथितेत्याह । निशा रात्र्या। कथंभूतया । यया वयं मरणं यामः(?)। प्रुच्छत्वमाप्नुमः(?)किंविशिष्टयेत्याह याम(त्र)याधीनायामया, यामाः प्रहराः

तेषामाश्रयं(.षां यत् त्रयं) तस्मिन्नधीन आयत्तः आयामो दैर्घ्यं यस्या असौ तथा। तया। कश्चित् परवशः स्वानुरक्तां दयितां सङ्गन्तुं अलभमानः प्रथमं तथाकामा(?)ऽनलज्वालावलीढवपुः कान्तां स्मरज्वरातुरां निशम्य सख्ये कथयति। अथ च यामत्रयाधीनायामया निशा मरणं यामः(म)। नात्रोद्वेगः। स्वार्त्या धिया सुतरां खिन्नेन मनसा यामयाम गतासुः सा अया अप्रा(पा)पा। मन्दबुद्धिः(ना) मयैव मथिता नाशिता। अत्र तूद्वेग इति यावत्। अयमर्थः। अस्मद्विनाशे न खेदः। किं तु खिन्नमनसा यां संस्रामः सा मद्वियोगे न जीवति यतः ततोऽत्रैव खेद इति। मरणस्यात्महेतुत्वान्मयैव मथितेति व्यवहृतिः। संकेतस्थः कश्चित् कामी प्रियामनागतामुपलभ्य एवं खिद्यते। अथ च स्वार्त्या अत्यन्तक्लेशेन कथमपीति यावत्। यां अयां प्राप्तवानस्मि सा मया एवं मथिता खण्डिता। कयेत्याह। अधिया। (धीः)कार्यविवेकक्षमा बुद्धिः। तया रहितत्वादित्यर्थः। शेषं समानम् ॥३६॥

२. यामेति। विप्रोषितः प्रियः प्रावृषि स्वप्रियावस्थां विमृश्य विषीदति। याम प्राप्नुयाम, यामत्रयाधीनायामया प्रहरत्रयाधीनविस्तारया, मरणं मृतिं, निशा रात्र्या—'पद्दन्नोमास्' इत्यादिना अत्र निशाशब्दस्य निश्-भावे सति तृतीयैकवचनम्—याम् यच्छब्दः, अयाम अगच्छाम, धिया बुद्ध्या, अस्वार्त्यायामया—अस्वार्त्यायः प्राणपीडां प्राप्तः आमयो मदनज्वरो यस्याः सा, मथितैव हतैव, सा हृदयं गता वल्लभा। अस्यार्थः—यामिमां धिया अयाम सा यामत्रयाधीनायामया निशा अस्वार्त्यायामया सती मथितैव; ततो वयमपि मरणं याम। अत्र चतुर्षु पादेषु एकरूपावृत्त्या अव्यपेतव्यपेतम् ॥ ३६ ॥

१. इदानीं पादादियमकं(क)विकल्पं व्याख्याय प्रकृतमुपसंहरति—

**इति पादादियमकविकल्पस्येदृशी गतिः।**
**एवमेव विकल्प्यानि यमकानीतराण्यपि ॥ ३७ ॥**

इति पादादियमकविकल्पगतिः इत्थमेव विकल्प्यानि यमकानीतराण्यपि । एवंप्रकारा वा आदियमकविकल्पस्य गतिः प्रक्रिया ईदृशी । एवमेव अनेन क्रमेण विकल्प्यान्यूह्यानि यमकानि इतराण्यपि अन्यान्यपि मध्यादिमध्यान्तसर्वयमकरूपाणि ॥ ३७ ॥

२. इतीति अव्यपेते व्यपेते च पादादियमकभेदा दर्शिताः । एवं मध्ययमकान्तयमकादिमध्ययमकादयः ॥ ३७ ॥

१. कुतः पुनस्तद्भेदा न दर्शिता इत्याह–

**न प्रपञ्चभयाद्भेदाः कात्स्न्र्येनाख्यातुमीह्निताः ।**
**दुष्कराभिमता ये तु वर्ण्यन्ते तेऽत्र केचन ॥ ३८ ॥**

तद्भेदाः कात्स्न्र्येनाख्यातुमीप्सिता (?)प्रपञ्चभयात् ग्रन्थगौरवभयात् भेदाः मध्याद्याद्यन्तविकल्पाः कात्स्न्र्येन सामस्त्येन नाख्यातुमीप्सिताः । दुष्कराभिमता येन(तु) वर्ण्यन्ते तत्र तेषु यमकेषु मध्ये केचन ॥ ३८ ॥

२. नेति । ते सर्वे प्रपञ्चभयात् न कात्स्न्र्येन अभिधीयन्ते, दुष्कराभिमता एव केचन वर्ण्यन्ते ॥ ३८ ॥

१. सर्वपादयमक(मव्यपेत)व्यपेतमुदाहर्तुमाह–

**स्थिरायते यतेन्द्रियो न हीयते यतेर्भवान् ।**
**अमायते यतेऽप्यभूत् सुखाय तेऽयते क्षयम् ॥ ३९ ॥**

स्थिराः अविनश्वराः आयतयः यस्य तस्य राज्ञः आमन्त्रणम् हे स्थिरायते ! यतानि इन्द्रियाणि चक्षुरादीनि मनःषष्ठानि यस्य सः तं यतेन्द्रियम्(?)। अत एव कृतारिषड्वर्गजयः निगृहीतेन्द्रियग्रामो भवान् यतेः तपस्विनः न हीयते । नाभिभविष्यते । न विद्यते माया शाठ्यं यस्यासावमायः । तस्य भावः अमायता । अशठता । इयते इयत्प्रमाणाय सुखाय ते

त्वाभूज्जाता । किंभूताय अयते क्षयं विनाशमगच्छते । शाश्वता-येत्यर्थः ॥ ३९ ॥

२. अव्यपेतव्यपेते सर्वपादमध्ययमकं दर्शयति—स्थिरेति। स्थिरा निश्चला आयतिः प्रभावो यस्य सः सम्बोध्यते, यतेन्द्रियो जितेन्द्रियः भवान् यतेः योगिनो न हीयते । तव अमायता सत्यव्यवहारिताऽपि, क्षयं अयते अप्राप्नुवते, इयते सुखाय अभूत् ॥ ३९ ॥

१. व्यपेतं सर्वपादमध्ययमकमाह—

**सभासु राजन्नसुराहतैर्मुखै-**
**र्महीसुराणां वसुराजितैः स्तुताः।**
**न भासुरा यान्ति सुरान्न ते गुणाः**
**प्रजासु रागात्मसु राशितां गताः॥ ४०॥**

हे राजन् ते गुणाः सुरान् देवान् न न यान्ति यान्त्येव। त्वद्गुणाः स्वर्गमपि व्याप्ता इत्यर्थः । तत्र अमराङ्गनाभिगीतयशा भवानित्यर्थः। किंभूतास्ते गुणाः भासुराः भासनशीलाः। पुनरपि किंभूताः स्तुताः गीताः। कैः मुखैः आननैः । कासु सदस्सु परिषत्सु । पुनरपि किंभूतैः असु-राहतैः। सुरया मदिरया आहतानि दूषितानि न, पुनर[तानि अ]सुराहतानि। त्वयि परिपालनं कुर्वति न कश्चिदपि आकृष्य(अकृत्य)कारीत्यर्थः। [?]तैः वसु वित्तं तेन राजितानि अनुरागवन्ति .... । किंभूता गुणाः प्रजासु चतुर्व-र्णाश्रमलक्षणासु रागात्मस्वनुरागवतीषु राशितां गताः पुञ्जीभूताः॥

२. सर्वपादमध्ययमकमेव व्यपेतमेकरूपं दर्शयति **सभास्विति**। राजन् वसुराजितैः भवद्दत्तवसुहर्षितैः असुराहतैः मद्यपानेन अनुपहतैः वि-शिष्टैरिति यावत्, महीसुराणां द्विजानां मुखैः सभासु गोष्ठीषु स्तुताः, भा-सुराः उज्ज्वलाः, रागात्मसु अनुरागमयीषु, प्रजासु राशितां गताः पुञ्जी-भूताः तव गुणाः सुरान् न न यान्ति, स्वर्लोकेऽपि प्रथन्ते ॥ ४० ॥

१. व्यवहितं सर्वपादान्तयमकमुदाहरति—

**तव प्रियासच्चरिताप्रमत्त या**
**विभूषणं धार्यमिहांशुमत् तया ।**
**रतोत्सवामोदविशेषमत्तया**
**न मे फलं किञ्चन कान्तिमत्तया ॥ ४१ ॥**

हे सच्चरित! सतां पण्डितानां चरितं सच्चरितं तद्यस्य विद्यते स सच्चरितः । तस्यामन्त्रणं हे सच्चरित! अप्रमत्त या प्रमादरहित या प्रिया प्राणवल्लभा तया विभूषणमाभरणं धार्यं धरणीयम् । अथ वा सच्चरिते अप्रमत्तः सच्चरिताप्रमत्तः । हे सच्चरिताप्रमत्त! या प्रिया तया विभूषणं धार्यमित्यर्थः । भवान् खलु कृत्यकरणे सक्तः । तस्मात् तया विभूषणं धार्यम् । अंशुमत् प्रभायुक्तम् । इह किंविशिष्टया रतोत्सवामोदविशेषमत्तया रतं स्मरक्रीडा तदेवोत्सवः तत्र सञ्जातो[सञ्जात आ-]मोदः हर्षः सुरभिगतया [-लता वा] तेन विशेषतो मत्ता तया । न मे नैव मम फलं किञ्चन किमपि कान्तिमत्तया कमनीयतया यतः प्रियेषु सौभाग्यफला हि चारुता । सापराधं प्रियं प्रति रुष्टा काचित् हस्तगतं भूषणमेवमुक्त्वा परित्यजति ॥ ४१ ॥

२. पादान्तयमकमेकरूपं दर्शयति तवेति । हे असच्चरिताप्रमत्त असतां चरितेषु अवहित ; तव प्रिया या रतोत्सवामोदविशेषमत्ता तया इदं अंशुमत् उज्ज्वलं भूषणं धार्यं, कान्तिमत्तया न मे किञ्चिदस्ति फलम्, इति सापराधं आभरणदानेन अनुनयन्तं कान्तं वल्लभा अधिक्षिपति ॥४१॥

१. सर्वपादान्तयमकमव्यपेत[व्यपेत]माह—

**भवादृशा नाथ न जानते नते**
**रसं विरुद्धे खलु सन्नतेनते ।**
**य एव दीनाः शिरसा नतेन ते**
**चरन्त्यलं दैन्यरसेन तेन ते ॥ ४२ ॥**

हे नाथ त्वादृशा उन्नतप्रकृतयः नतेः नम्रतायाः दैन्यस्य रसमनुभवं न जानते न विदन्ति । कुतो न जानते । विरुद्धे विरोधिन्यौ खलु सन्नतेनते सन्नो दीनः इनः प्रभुः तयोः भावः ते सन्नतेनते यतः ततः य एव पुरुषाः दीनाः (ते) शिरसा नतेन नम्रेण चरन्त्वतः [चरन्तु] अलं पर्याप्तं, दैन्यरसेन दीनतापरिग्रहेण न(?)तेन हेतुना ते तव ॥ ४२ ॥

२. पादान्तेऽव्यव्यपेतव्यपेतमुदाहरति भवादृशा इति । नाथ हे स्वामिन् इति वल्लभोपालम्भः, भवादृशाः नतेः प्रणतेः, रसमनुभवितुं न जानते। सन्नतं सन्नतिः, इनता स्वामिता, चेति द्वन्द्वसमासः ; ते द्वे अपि विरुद्धे परस्परविरुद्धे खलु । ये दीनाः कृपणाः त एव नतेन शिरसा चरन्तु कामम् । तेन दैन्यरसेन, ते तव, अलं निषेधे । सापराधं पाद-प्रणामकारिणं कान्तं काचिदुपालभते ॥ ४२ ॥

१. सर्वपादमध्यान्तयमकं व्यपेतमाह—

**लीलास्मितेन शुचिना मृदुनोदितेन**
**व्यालोकितेन लघुना गुरुणा गतेन।**
**व्याजृम्भितेन जघनेन च दर्शितेन**
**सा हन्ति तेन गलितं मम जीवितेन ॥ ४३ ॥**

सा वल्लभा मां हन्ति । तेन हेतुना मम जीवितेन गलितम् । केन हन्तीत्याह । लीलास्मितेन ईषद्धसितेन । शुचिना अनवद्येन । मृदुनो-दितेन पारुष्यरहितेन जल्पितेन । व्यालोकितेन लघुना कटाक्षनिरीक्षितेन । गुरुणा गतेन मन्थरगमनेन । व्याजृम्भितेन जघनेन प्रदर्शितेन॥ ४३ ॥

२. पादमध्यान्तेषु व्यपेतमेकरूपमुदाहरति लीलेति । मृदुना उदितेन भाषितेन । स्पष्टमन्यत् ॥ ४३ ॥

१. प्रथमतृतीययोरव्यपेतं [?] द्वितीयचतुर्थयोश्चाव्यपेतव्यपेतमध्यान्त-यमकमुदाहर्तुमाह—श्रीमानमानित्यादि ।

**श्रीमानमानमरवर्त्मसमानमान-**
**मात्मानमानतजगत्प्रथमानमानम् ।**
**भूमानमानमत यः स्थितिमानमान-**
**नामाननानमतमप्रतिमानमानम् ॥ ४४ ॥**

आत्मानं परमपुरुषम् । असाधारणविशेषोपादानाद्विगुणेनद्वः । तमानमत प्रणमत । यः स्थितिमान् धैर्यवान् । उत्पत्तिविनाशरहितो मर्यादावान् वा । शश्वत् [यश्च] श्रीमान् लक्ष्मीवान् । यश्च अमान् जगत्य-पर्याप्तावकाशः । अमराः देवाः । तेषां वर्त्म मार्गः, आकाशः तेन स-मानं सदृशं मानं परिमाणं यस्यासावमरवर्त्मसमानमानः । तमाकाशवद्व्याप-कमित्यर्थः । अनन्तं (आनतं) च तज्जगच्च तत् तत्र प्रथमाने प्रख्यायमानो मानः पूजा यस्य तमानतजगत्प्रथमानमानम् । भूः पृथ्वी । तां मिमीते स भूमानः । कर्तरि ल्युट् । 'कृत्यल्युटो बहुल'मिति कर्तरि ल्युट् । तं भूमानम् । स किल वामनवेषव्याजेन बलिमथनोद्यतः चक्रवालाचल-परिक्षिप्तां क्षितिं एकपादेनामिमीत । न विद्यते मानं प्रमाणमेषां तान्य-मानानि । अन्य(अ)परिसंख्येयानि नामान्यभिधानानि हरिजनार्दनमधु-सूदनादि[दीनि] यस्यासावमाननामा नं (तम्) आनन्ति जीवन्तीत्या-प्राणिनः तैर्मतः तमानमन्तः [-तम्] । न पुनरा(ना)नां मतमिति [वि]ग्रहः । 'क्तेन च पूजाया'मिति समासप्रतिषेधात् । ....(?) तृतीयाविभक्त्यनुत्पत्तिरिति न मन्तव्यम् । भूतकालसामान्यविवक्षायां निष्ठेत्यनेन क्तप्रत्ययोत्पत्तौ 'न लोकाव्ययनिष्ठाखलर्थतृना'मिति षष्ठ्याः प्रतिषेधात् कर्तरि तृतीया स्यादेव । ननु वर्तमाने लडित्यधिकृत्य मत्वान्य[मत्याद्य]र्थेभ्यो धातुभ्यो वर्तमान एव काले क्तप्रत्ययस्योक्तत्वात् भूतकाले निष्ठेत्यनेन क्तप्रत्ययानुपपत्तेः तृतीयार्थप-त्ति[ऽनुपपत्ति]रिति चेत् सत्यमेतत् । किन्त्वपवादविषये क्वचिदुत्सर्गस्यापि

समावेश इति मन्यादिभ्यो भूतेऽपि निष्ठा भवत्येव। अन्यथा कथमेतदुक्तं भाष्यकारेण—'तैः सूत्रविन्यासोऽपि न ज्ञात'इत्यलमि[म]तिप्रसङ्गेन। ततः स्थितमानैर्मतमानमतमित्यनवद्यम्। अप्रतिमानमान[म्। अ]प्रतिमानो-नुपमो मानोऽभिमानो यस्या[सा]वप्रतिमानमानः। तम्॥ ४४॥

२. पादमध्यान्तेषु अव्यपेतव्यपेतमुदाहरति श्रीति। श्रीमान् अमान्, अमरवर्त्मसमानमानम्, आत्मानम्, आनतजगत्प्रथमानमानं, भूमानम्, आनमत, यः, स्थितिमान्, अमाननामानं, आनमतम्, अप्रतिमानमानम्। श्रीमान् लक्ष्मीपतिः, अमान् अमितः, अमरवर्त्मसमानमानम् आकाशसदृश-प्रमाणम्, आत्मानं परमात्मानम्, आनतजगत्प्रथमानमानम् आनतेषु जगत्सु प्रथमानो मानो बहुमानो यस्य तं, भूमानं भुवो मातारं, आनमत प्रणमत, यः यच्छब्दः, स्थितिमान् जगतः स्थितिकर्ता, अमाननामानं अमितनामधेयम्, आनमतम्—अन प्राणने इत्यस्मात् आङ्पूर्वात् कर्तरि पचाद्यचि आनाः प्राणिनः—तेषां मतं पूजितम्, अप्रतिमानमानम् अनुपमा-हङ्कारम्। आत्मानं आनमत इति सम्बन्धः॥ ४४॥

१. व्यपेतं सर्वपादादिमध्ययमकमाह—

**सारयन्तमुरसा रमयन्ती**
**सारभूतमुरुसारधरा तम्।**
**सारवानुकृतसारसकाञ्ची**
**सा रसायनमसारमवैति॥ ४५॥**

कामस्तत्र (शास्त्र) प्रणेतृवात्स्यायनान्य(द्य)भिहितानि(नेक?)सार-णप्रयोगं प्रयोजयन्तं तं वल्लभं रमयन्ती ममार्ण(रमणे?) प्रेरयन्ती। केन उरसा वक्षसा। का, [सा] रसायनं विधाय (वैद्योप)दिष्टं रसायनं जरामरण-व्याधिध्वंसि असारं फुल्गमवैति मन्यते। किंविशिष्टं तं सारभूतं सं(?)-सारमिव वर्तमानम्। किंविशिष्टा। उरुसारधरा अ(उरु)सारं सुवर्णं

तद्धरति वहति । कनकाभरणभूषिता । पुनरपि किंविशिष्टेत्याह । आरसः शब्दः । तेनानुकृताः सारसाः पक्षिणः यया साऽऽरसानुकृतसारसा सा चासौ काञ्ची च रशना सह तया वर्तत इति या सा सारसानुकृतसारसकाञ्चीति पूर्वेण सम्बन्धः ॥

२. व्यपेतमादिमध्यमुदाहरति—**सारयन्तमिति** । उरुसारधरा विपुलसौन्दर्यधरा, सारवानुकृतसारसकाञ्ची—सारवा सनादा, अत एव अनुकृतसारसपक्षिशब्दा काञ्ची यस्याः—सा, सारभूतं सुन्दरं, उरसा सारयन्तं गाढम् आलिङ्गन्तमित्यर्थः, वल्लभं रमयन्ती काचित् रसायनम् असारं अवैति ॥ ४५ ॥

१. प्रथमद्वि[तृ]तीययोराद्यन्त(यमकं) द्वितीयचतुर्थयोः मध्यादियमक-(मव्यवहित)व्यवहितमुदाहर्तुमाह—**नयानयेत्यादि** ।

**नयानयालोचनयानया कृती-**
**नयानयान्धान्विनयानयाय ते ।**
**न यानयासीर्जिनयानयान्नरा-**
**नयानयांस्तान् जनयानयाश्रितान् ॥ ४६ ॥**

सन्धिविग्रहयानासनसंश्रयद्वैधीभावानां गुणानां याथात्म्येनानुष्ठानं नयन्तु वि(नयस्तद्वि)पर्ययोऽनयः तौ नयानयौ । तयोरालोचनं यस्य (?) विमर्शो यस्यां सा नयानयालोचना दण्डनीतिः । तदुक्तं 'दण्डनीत्यां नयानया'विति । तया नयानयालोचनया दण्डनीत्या अनया प्रत्यक्षमनुभूयमानया । आनो बलं, तद्यातीत्यानया क्षितया (तद्वती आना तया) आनया चतुरङ्गबलानुगामिन्या । अनया न यद्वापि (नयानयान्धान्) नयनयाद्[वु]क्तलक्षणयोः [णौ] तयोरन्धं धान[-रन्धाः] अन्धा इव कार्या-

कार्यविपर्यासितमतयो मूढाः तान्। विनय शिक्षय । हे राजन् इत्यध्याहार्यम् । कथम्भूतः आसमन्ततो नयेनोपायेन आयतिराज्ञा प्रभुता यस्य तस्यामन्त्रणम् हे आनयायते । नीयन्त इति नया अभिप्रायाः। 'पुंसि संज्ञायां घः प्रायेणे'ति । तानयासीद्गमत् भवान् । कथम्भूतान् जिनयानयान् जिनः सुगतः तस्य यानं ज्ञानं तद्याति[न्ती']ति जिनयानयान् [:] तान् । अयः पुण्यं तदस्यास्तीति [?] अर्शादिपाठादच् समासान्तः । तानयान् । अय एव अनः प्राणाः तं यात्यथ वा अयश्चानश्चायानौ। तौ याति । यः असावयानयः तस्यामन्त्रणं हे अयानय । अस्तान् निरस्तान् जनय सम्पादय । कानित्याह अनयाश्रितान् । अनयः उक्तलक्षणः । अयः पुण्यं तत्प्रतिषेधो वा अनयः पापं , तदाश्रितान् पुरुषान् इति । केचिद्व्यपेतमेत(व्यपेत)मादिमध्यमक्रमाहुः । यथा नयेति । नयो युक्तिः । तद्विपरीतोऽनयः । तयोरालोचना विवेचनम् । नयानयालोचना तया । अयः पुण्यं , तस्यानयः प्रापणं अयानयः। तस्मिन्नन्धा नयानयानयान्धाः । अनयाः उपद्रवाः । त एव आयतिः सम्पद्येषां ते तथोक्ताः । जिनो बुद्धः। तस्य यानं मार्गं तद्यातीति जिनयानयाः नयानं अयानं अचलमितियावत् । तद्यातीति अयानयाः। अनयममार्गमाश्रयन्तीत्यनयाश्रिताः । हे कृतिन् बुद्धिमन् अनया नयानयालोचनया अनयानयान्धानयो(न् अनय)यतीन् विनय शान्तान् कुरुष्व । दमयेति यावत् । दुर्दान्तदमनं कथमित्याह। जनयानयास्सुगतमार्गानुसारी अयानया अचलितस्त्वं यान्विधीन् हिंसादिकानायासीः नानुष्ठितवानसि। तवान् (तान्) विधीन् अनयाश्रितां(तान्) पुरुषाणां[?] जनयामार्गगतेषु पुरुषेषु स(ग)तांस्तान् कुर्विति यावत् । सत्ववधात् विरतं कञ्चन धार्मिकं राजानं प्राणिवधे नियोक्तुकामो मन्त्री कोऽप्येवमब्रवीत् ॥ ४६ ॥

२. पादादिमध्येषु अव्यपेतव्यपेतं दर्शयति–नयेति । कश्चिद्राजान-मविनीतान् शिक्षयेति प्रार्थयते । नयानयालोचनया, अनया, कृतीन्, अयानयान्धान्, विनयानयायते, न, यान्, अयासीः, जिनयानयान्, नरान्, अयानयान्, तान्, जनय, आनय, आश्रितान् । नयानयालोचनया न्यायान्यायपर्यालोचनया, अनया एतया, कृतीन् कुशलान्, अयानयान्धान्—अयः पुण्यम्, अनयः अपुण्यम्–तयोः अन्धान् अज्ञान्, विनयानयायते—विनयेन सदाचारेण आनया आनीयमाना आयतिः समृद्धिः यस्य तस्य सम्बोधनं, न—निषेधे, यान्–यच्छब्दः, अयासीः–अगच्छः, जिनयानयान्–जिनः बुद्धः तस्य यानं सिद्धान्तः–तेन यान् गामिनः नरान्, अयानयान् अमार्गान् गतान्, जनय कुरु, आनय जीवय, आश्रितान् । विनयानयायते कृतीन् अनया क्रियमाणया नयानयालोचनया यान् न अयासीः अयानयान्धान् अयानयान् तान् जिनयानयान् जनय–अहिंसापरान् कुरु इत्यर्थः; आश्रितान् आनय जीवय ॥ ४६ ॥

१. चतुर्ष्वपि पादेषु आद्यन्तयमकं व्यवहितमुदाहरति–

**रवेण भौमो ध्वजवर्तिवीरवे-**
  **रवेजि संयत्यतुलास्त्रगौरवे ।**
**रवेरिवोग्रस्य पुरो हरे रवे-**
  **रवेत तुल्यं रिपुमस्य भैरवे ॥ ४७ ॥**

हरेः विष्णोः रवेण ध्वनिना अवेजि उद्विग्नः । कोऽसौ भौमः नरकासुरः । कथम्भूतो हरे[रि]रित्याह ध्वजवर्तिवीरवेः ध्वजवर्ती केतुवर्ती वीरः शूरः विः पक्षी गरुडो यस्य तस्य । क अवेजि, संयति संग्रामे । कथम्भूते अतुलास्त्रगौरवे अनुपमास्त्राणां गौरवं गुरुत्वं यत्र तस्मिन् । रवेरिवोग्रस्य आदित्यस्येव असह्यप्रतापस्यास्य पुरः पुरस्ताद्रिपुं शत्रुमवेमेषस्य तुल्यं सदृशं जानीत । भैरवे भयानके संयतीति पूर्वेण सम्बन्धनीयम् ॥ ४७ ॥

२. आद्यन्तयोः एकरूपं व्यपेतं दर्शयति—रवेणेति। अतुलास्त्र-गौरवे भैरवे संयति, ध्वजवर्तिवीरवेः—ध्वजे वर्तमानः वीरो विः गरुडो यस्य तस्य—हरेः कृष्णस्य रवेण सिंहनादेन भौमः नरकः अवेजि उद्वेजितः त्रासितः; रवेः इव उग्रस्य प्रतापिनः अस्य हरेः पुरः रिपुम् अवेः तुल्यं मेषतुल्यम् अवेत। अस्य हरेः पुरः रिपुं सिंहस्य पुरा मेषमिव बुध्यध्वम् इत्यर्थः॥ ४७॥

१. सर्वपादेष्वव्यवहितमाद्यन्तयमकमुदाहर्तुमाह— मयेति।

**मयामयालङ्घ्यकलामयामया-**
**मयामयातव्यविरामयामया।**
**मयामयार्तिं निशयामयामया-**
**मयामयामूं करुणामयामया॥ ४८॥**

मयः क्षयः, आमयः रोगः, क्षयव्याधिरित्यर्थः। तेन अ(आ)लङ्घ्यः स्ववशीकः [कृतः] कलामयश्चन्द्र एव आमयो रोगो यस्याः सा तथोक्ता। 'मया मयालम्ब्य कलामयामया'मिति पाठः। तदा मयामयः क्षयव्याधिः तेन आलम्ब्यते आश्रीयत इति मयामयालम्ब्यः स चासौ कलामयश्चन्द्रः स एवामयो रोगः यस्याः सा मयामयालम्ब्यकलामयामया तां [अयां] पुण्यवतीम्। अयातव्यः अप्राप्यः विरामो अवसानं मृत्युः येन असावयातव्यविरामः। तस्यामन्त्रणं हे अयातव्यविराम! आयुष्मन् सखे यां वल्लभामहमयां सङ्गमं गतोऽसि किंविशिष्टां अयामयार्तिं, यमनं यामः, तस्य प्रतिषेधोऽयामः अनुपरमः तं यातीत्ययामया। अथ वा यामन्न यातीत्ययामया इति क्रियाप्रतिषेधः। समासस्तु अश्राद्धभोज्यादिषु पाठात् सिद्धः। अविनाशिनी आर्तिः पीडा विरहव्यथा यस्याः सा अयामयार्तिः। तामयामयार्तिम्। कयाहमयां इत्याह निशया रात्र्या हेतुभूतया, किंविशिष्टयेत्याह। अमयामयामया, अमन्ति रुजन्तीत्यमाः।

अमाः यामाः प्रहराः यस्याः सा तया अमयामया । अथवा 'अम गत्यादिषु' । अमन्ति गच्छन्तीत्यमाः । अमाः गच्छन्तः यामाः यस्याः सा अमयामा । विरहित्वाद्रात्रेः दैर्घ्यं द्योत्यते । मया सह आमय संयोजय । अमूं कान्ताम् । हे करुणामय कारुणिक, सखे । किंविशिष्टेन मया । आमो रोगः विरहपीडा । तं याति यस्स आमया इति क्विप् । तेन आमया विरहव्यथाभाजा । ततोऽयं समुदायार्थः । यां वल्लभां पुण्यवतीं गतोऽस्मि सङ्कल्पेन न शरीरेण राच्या हेतुभूतया तां चन्द्रदर्शनव्याधिव्यथात(क)दार्थितामनुपरतविरहव्यथा:[थां] हे सखे कारुणिक मया विरहव्यथाभाजा सह संयोजय इति केनचित् कश्चित् सखा स्वराभितप्तेन प्रियतमासङ्गमं प्रति प्राथ्यंत इति एवं केचित् योजयन्ति । तत्तु न सम्यक् । द्वितीयतृतीयपादयोर्यतिसम्बद्धत्वाद्वियुजोऽवश्यमिति वचनात् । अत्र कथमर्थ इति चेत् निशया राच्या हेतुभूतया मयामयार्तिः मारयतीति मयः । न मारयतीत्यमयः स एवार्तिः पीडा जीवमृतिरित्यर्थः । वल्लभानुपलब्धौ मरणमेव श्रेय इति मन्वानो ब्रूते । [तां] अयां गतवानस्मि । किंविशिष्टया निशयेत्याह । अयातव्यविरामयामया अप्राप्यावसानप्रहरया विरहित्वात्[?] प्रतीतिः । आमयामया आमः व्याधिः यामः आयामः दैर्घ्यमिति यावत् । तं यातीत्यामयामया । तृतीयैकवचनं मया आमयेति । शेषं समानम् ॥ ४८ ॥

२. पादाद्यन्तेषु अव्यपेतव्यपेतं दर्शयति—मयेति । मयामयालङ्घ्यकलामयामयाम् , अयाम् , अयातव्यविरामयामया , मया, अमयार्तिं, निशया , आमयाम् , अयाम् , अय, आमय , अमूं , करुणामय, आमया । मयामयालङ्घ्यकलामयामयाम्—मयः क्षयः , स एव आमयः व्याधिः , तेन अलङ्घ्यः अप्राप्यः , कलामयः चन्द्रः , तेन आमं खेदं यातीति आमयाः—तां , पूर्व[र्ण?]चन्द्रजनितखेदामिति यावत् ; अयाम्—अयः पुण्यम्,

सद्वतीम्, अर्शआदित्वादच्; अयातव्यविरामयामया–अयातव्यविरामः अप्राप्यावासानः, यामः प्रहरः, यस्याः तया; मया स्वेन; अमयार्ति अक्षयपीडां; निशया रात्र्या; आम आगच्छ–अम गत्यादिषु, तस्मात् आङ्पूर्वात् लोण्मध्यमपुरुषैकवचनम्; यां यच्छब्दः; अयाम् अयासिषम्; अय अभिमत दैव; आमय आगमय, संयोजय इति यावत्; अमूं एताम्; करुणामय कृपासागर; आमया–आमः खेदः, तं याता, यातेः विचि तृतीयैकवचनम्। अयमर्थः–करुणामय अय, आम मे सन्निधत्स्व, मयामयालङ्घ्यकलामयामयाम् अयाम् अमयार्तिम् अमूं हृदयाश्रितां दयिताम् आमया मया आमय, अयातव्यविरामयामया अनया निशया याम् अयाम् ॥ ४८ ॥

१. सर्वपादेषु व्यवहितमादिमध्यान्तयमकमाह–

मतान्धुनानारमतामकामता-
मतापलब्धाग्रिमतानुलोमता।
मतावयत्युत्तमताविलोमता-
मताम्यतस्ते समता न वामता ॥ ४९ ॥

हे राजन्! ते तव (मतौ) बुद्धौ अयन(ति) उपभो(ढौ)कते का समता समञ्जसता न वामता न वक्रता। किं कुर्वतः तवेत्याह अका(ता)म्यतः अनाकांक्षतः। कामित्याह उत्तमताविलोमतां उत्तमस्य भावः उत्तमता तस्य विलोमता प्रतिकूलता जघन्यता। तामनभिलषतः। किंभूता सा (स)मतेत्यत आह धुनाना निरस्यन्ती अकामतां निस्पृहतां किंविशिष्टां; मतां सम्मतां; केषां आ समन्ततः अ(?)रमतां विरमतां तपस्विनाम्। पुनरपि किंविशिष्टा समतेत्याह। अतापेन अक्लेशेन लब्धा प्राप्ता अग्रिमतायां पुरःसरतायां अनुलोमता आनुलोम्यं अ(य)यासा अतापलब्धाग्रिम(त)ानुलोमता अथ च ते मतौ समता न वामता अस्ति नास्तीत्यर्थात् गम्यते। कीदृशी समतेत्याह उत्तमताविलोमतामयन्ती उत्तमस्य भावः उत्तमता तस्या अविलोमतामानुकूल्यमयन्ती गच्छन्ती। शेषं पूर्ववत् ॥ ४९ ॥

२. आदिमध्यान्तरेषु एकरूपं व्यपेतं दर्शयति–मतामिति। मतां, धुनाना, आरमताम्, अकामताम्, अतापलब्धाग्रिमतानुलोमता, मतौ, अयति, उत्तमताविलोमताम्, अताम्यतः, ते, समता, न, वामता। मतां इष्टाम्, धुनाना क्षिपन्ती; आरमतां विषयेभ्यो विरमतां योगिनाम्; अतापलब्धाग्रिमतानुलोमता–अतापेन अक्लेशेन लब्धा प्राप्ता, अग्रिमतायाः श्रैष्ठ्यस्य अनुलोमता आनुकूल्यं, यया सा; मतौ बुद्धौ; अयति गच्छति; उत्तमताविलोमतां श्रैष्ठ्यस्य प्रातिकूल्यम्; अताम्यतः अकांक्षतः, तमु कांक्षायाम्; ते तव; समता सर्वभूतमैत्री; न प्रतिषेधे; वामता कचित् प्रतिकूलता। अयमर्थः–आरमताम् अकामतां मतां धुनाना वामता, उत्तमताविलोमताम् अताम्यतः ते, मतौ न; अतापलब्धाग्रिमतानुलोमता समतैव भवति। इति मुमुक्षुं कश्चित् प्रशंसति॥ ४९॥

१. चतुर्ष्वपि पादेषु अव्यवहित(व्यवहित)मादिमध्यान्तयमकमाह—

**कालकालगलकालकालमुखकालकाल**
**कालकालपनकालकालघनकालकाल।**
**कालकालसितकालकाललनिकालकाल**
**कालकालगतु कालकालकलिकालकाल॥ ५०॥**

कालो यमः तस्य कालः विपक्षत्वादनुत्पत्तिविनाशधर्मकत्वाच्च कालकालो महेश्वरः। तस्य गलः कण्ठः। कालो मृत्युः। कालं कृष्णं मुखमाननं यस्यासौ कालमुखो गोलाङ्गूलः कृष्णवानरः कालकालगलश्च कालश्च कालमुखश्चेति द्वन्द्वः। तेषां कालत्वं (कं) कृष्णत्वं द्वन्द्वं मनोज्ञादिभ्यश्चेति वुञ् इति अलमतिशयेन कालं कृष्णं शिरो यस्यासौ अलकालको मयूरः पृषोदरादिपाठादच्। अत्र मोरनुस्वारलोपः। तस्यालपितं विलपितं यस्मिन् असौ अलकालकालपनः। स चासौ कालश्च वर्षासमयः। तत्र कालघनः कृष्णजलदः कालकालगलकालकालमुखकालश्च (-कं च)

अलकालकालपनकालकालघनश्चेति द्वन्द्वः । यद्वा (तद्वत्) अतिशयेन कालाः कालकालाः । कालकाला एव कालकालकाः । ते च ते अलकाश्चेति 'विशेषणं विशेष्येण बहुल'मिति समासः । तेषामालसितं विलसितं तेन कालं कमनीयं कं शिरः यस्याः सा कालकालगलकाल कालमुख कालकालकालकाल (पनकालकाल) घनकालकालकालकालसितकालका इति बहुव्रीहिः ललनैव ललनिका । अलका नाम यक्षपुरी । तस्या आलकः प्रभुः अलकालकः धनदः स इवालकः प्रभुः तस्यामन्त्रणं हे अलकालकालक धनदतुल्य ! आलगतु सङ्गच्छताम् । हे कालकाल वर्षासमय । किं विशिष्ट । कलिकालकाल कलिश्चासौ कालश्च कलिकालः । तद्वत् कालः कृष्णः । तस्यामन्त्रणम् । अथवा कलिकालकालकलिकालो दुर्भिक्षः । तस्य कालः अन्तकः । सस्यनिष्पत्तिहेतुत्वाद्विपक्षः । तस्य सम्बोधनं हे कलिकालकाल । कालकाल वर्षाकाल । अलकालकालक यक्षपुरीनाथवत् समर्थ । एवंविशेषणविशिष्टकालधम्मिल्लभारभासितमस्तका ललनिका आलिङ्गतु । मामिति अध्याहार्यम् ।

अथ च कालो मृत्युः । काला दुर्गा वा । तस्या अयमिति कालः । काल ईश्वरो गलः कण्ठः । गल एव गलकः । संज्ञायां कन् । कालस्य गलकः कालगलकः । आलयो [आलाः] भृङ्गाः आलय [ला]एव आलकाः(?) कालमुखं दिनादिः । कलिरेव कालः स्वार्थिकोऽण् । कालः प्रकृष्टोऽस्यास्तीति कालः युवा । कालं कृष्णं कं शिरो यस्य तथोक्तः । कालको मयूरः कालश्चासौ कालकश्च कालकालकः । युवमयूर इति यावत् । तस्यालपनं कालकालकालपनम् । कालकालकालपनस्य कालः समयः कालकालकालपनकालः । कालकालकालपनकाल एव कालोऽवधिः यस्य स तथोक्तः । कालकालकालपनकालकालश्चासौ घनकालश्च कालकालकालपनकालकाल-

घनकाल(:) । काल एव कालकः । कालेनेव मृतेनेव कालगलकेनेव महादेवकण्ठेनेव आलैरिव भृङ्गैरिव कालमुखेनेव दिनादिनेव कालेनेव कलियुगेनेव कालकालकालपनकालकालघनकालेनेव कालकैः कृष्णैः अलकैरालसितं शोभितं कालकं शिरो यस्याः सा तथोक्ता । सर्वमेतल्ललनिकाविशेषणं विक्षिप्तचित्तप्रयुक्तमिति बहूपमानत्वेऽपि नेदं दुष्यति । शेषं समानम् ।

केचिदेवं योजयन्ति । कालकालगलः (ल) । अत्यन्तनीलकण्ठः [ण्ठ] कालो मृत्युः तस्य कालो नाशहेतुः मुखं वदनं यस्य सः । तस्यामन्त्रणम् । कालकालमुख । काला पृथिवी कृष्णवर्णत्वात् । कालकाल(क): आदित्यः कालमि(इ?)ति निमेषादियुगपर्यन्तः । तं करोतीति कालकारकः आलपनमित्याकाशं शब्दैकगुणत्वात् गुणेन गुणी लक्ष्यते । कालो यजमानः । क इति ब्रह्मा । तस्मै(आलाति) ददातीति कालः । कालघनश्चन्द्रः । कृष्णसारो मृगो यस्मिन् विद्यते स कालघनः । कं जलम् । अनिलो (अलो) वायुः । गत्वरस्वभावत्वात् । कालो वह्निः । के जले लीयत इति कालः । (काल एव कालकः) स्वार्थे कप्रत्ययः । काला च कालकारकश्च आलपनं च कालश्च कालघन(श्च) कं च अलश्च कालश्चेति समाहारद्वन्द्वः । एकवद्भावश्च । अष्टमूर्ते इत्यर्थः । भगवान् । हे (हे भगवन्) ललनिका ललना आलगतु आश्लेषणं करोतु । कीदृग्विशिष्टेत्याह अलकालसितकालका अलकैः ललाटपट्टचुम्बिभिः कचैरालसितं शोभितं कालं कं शिरो यस्याः सा तथोक्ता । किंविशिष्टा अलकालकालक अलका नाम यक्षपुरी तस्या आलकः प्रभुः तस्यालकः सखा यस्य (यः) तस्यामन्त्रणं हे अलकालकालक ! वैश्रवणसख ; कालः कामः । कं सुखं ददातीति कालः । तस्य कालः अन्तकः स कालकालः हे कालकाल कामसूदन ,कलिकाले प्रलयकाले कालः संहारशीलः संहाररुद्रेति

यावत् । कश्चित् कामी प्रियोपलब्धो भगवन्तं महेश्वरं स्तौति तस्या लाभार्थमिति ॥ ५० ॥

२. चतुर्षु पादेषु आदिमध्यान्तयमकम् अव्यपेतव्यपेतं दर्शयति–कालकालेति । प्रियाविरहितः कश्चित् अत्र घनकालं प्रार्थयते । काल-कालगलकाल–कालकालः ईश्वरः, तस्य गलवत् काल ; कालमुखकालकाल मृत्युमुखे कालः क्षपणं, तत्करोतीति कालः, कर्मण्यण्, रलयोरभेदः, विरहिणां पीडाकर इति यावत् ; कालकालपनकालकाल–कृष्णं शिरो येषां ते कालकाः मयूराः, तेषां आलपनस्य कालः कारः करणं, तस्य काल समय; घनकारकाल वर्षाकाल; कालकालकाल–कालकं चेतः, तत् आलातीति आदेव इति आङ्पूर्वात् ला दाने इत्यस्मात् कप्रत्ययः, मनोहरेति यावत् ; यद्वा कालकालसितकालका–का ईषत्, अलकैः आ समन्तात् लसितं शोभितं, कालं कृष्णं, कं मूर्धा, यस्याः सा ; ललनिका प्रशस्तललना, प्रशंसायां कः अलकालकालक—अलका नगरी, तां अलङ्करोतीति अलकालकः वैश्रवणः, तद्वत् अलक समर्थ, सामर्थ्यवाचिनः अलं शब्दात् णिचि ण्वुल् ; आल-गतु आश्लिष्यतु ; कालकाल–काः शब्दः, कै गै शब्दे, भावे क्विप्, कां रातीति कारः कालः, कं जलम् आलातीति कालः मेघः, कारः कालः यस्मिन् तस्य सम्बोधनम् ; कलिकालकाल–कलेः कलहस्य कारं क्षेपं करोतीति, प्रणयकलहशान्तिकरेति यावत् । एवंभूतघनकाल कालकालसित-कालका ललनिका मां आलगतु–इत्यन्वयः ॥ ५० ॥

१. 'आदिमध्यान्तमध्यान्तमध्याद्याद्यन्तसर्वत' इति यदुक्तं यमकं तदुदाहृत्य यमकान्तरं दर्शयितुकाम आह–

सन्दष्टयमकस्थानमन्तादौ पादयोर्द्वयोः ।

सन्दष्टेति । सन्दष्टश्चासौ यमकश्च सन्दष्टयमकः तस्य स्थानं प्रदेशः । पादयोः द्वयोरर्धयोः अन्तादी अन्तश्चादिश्च अन्तादी इति द्वन्द्व(:) यमकलक्षणम् । अन्तपादस्यादिपदं आदिपादस्यान्तपदं यदि यमकरूपं स्यात् तदा सन्दष्टयमकमित्युच्यते ।

ननु च रवेण भौमो ध्वजवर्तिवीरवेरित्यादिषु सन्दष्टयमकलक्षणस्यान्तर्भूतत्वात् पुनः किमिति सन्दष्टयमकलक्षणनिरूपणं पृथगित्याशङ्क्याह—

उक्तान्तर्गतमप्येतत् स्वातन्त्र्येणात्र कीर्त्यते ॥ ५१ ॥

यद्यप्याद्यन्तयमकादिषु अन्तर्भवत्येतत् तथाऽपि विशेषणार्थं पृथग्वर्ण्यत इति ॥ ५१ ॥

२. कञ्चित् पादाद्यन्तयमकभेदं सन्दष्टयमकं नाम दर्शयति–सन्दष्टेति । उक्तान्तर्गतं–मायामयेत्यादौ सन्दष्टयमकत्वमप्यस्ति आद्यन्तयमकत्वमप्यस्ति ; अत्र तु सन्दष्टयमकत्वमेव ॥ ५१ ॥

१. सन्दष्टयमकमुदाहरति–

उपोढरागाऽप्यबला मदेन सा
मदेनसा मन्युरसेन योजिता ।
न योजितात्मानमनङ्गतापिता-
ङ्गतापि तापाय ममास नेयते ॥ ५२ ॥

उपोढो जातः रागो यस्याः सा उपोढरागा अबला मानिनी कृशतनुः केन हेतुभूतेन उपोढरागा सञ्जाता अभिलाषितेत्याह । मदेन मदिराविकारेण तथाऽपि मदेनसा मम एनः पापं तेन मदेनसा मत्पापेन कर्तृणा मन्युः क्रोधः स चासौ रसश्च तेन मन्युरसेन सह योजिता सङ्घटिता । युजिर्योगे इत्यस्मिन् लुटि रूपम् । यद्यपि क्रोधो रौद्ररसस्य स्थायीभावो

न रसः तथाऽप्यभेदोपचारात् कार्यकारणयोः कथञ्चिदेकत्वपरिणामात् क्रोधोऽपि रस एव इति मन्युरसस्य क्रोधव्या(त्वा)ख्याने न दोषः । अत एव न योजिता आत्मानं मया सहेति सामर्थ्यादवसीयते । सम्बन्धस्य द्विष्ठ-त्वादन्यस्य चाश्रूयमाणत्वात् अप्रकृतत्वाच्च । न योजितेत्यादिकर्तरि क्तः। न केवलमेतदेव । तथाऽनङ्गतापितांगताऽपि अनङ्गो मन्मथः तेन तापितं च तदङ्गं च तस्य भावः अनङ्गतापितांगतापि स्मरशरसन्दीपितशरीरतापि मम पूर्वमियते इयत्प्रमाणाय तापाय खेदाय नास न बभूव । यथा संप्रतीति आसे[स्ते]ति स्वरव[सः] प्रयोगः । अस्तेरनुप्रयोगादन्यत्र भूमावस्याधेधातुकेति[?] प्रतिषेधाभावात् । अनङ्गतापितेति पाठः । अनङ्गेन मदनेन तापिता सा अबला गता प्राप्ताऽपि मे इयते तापाय न मरणायैव भवति । मन्युरसेन योजितेत्यत्र मन्युरसेन क्रोधरसेन या उ जिता उ इति समुच्चये । मदेन च मन्युरसेन च या जिता स्वीकृता इत्यर्थः ॥ ५२ ॥

२. तदुदाहरति-उपोढेति । उपोढरागा, अपि, अबला, मदेन, सा, मदेनसा, मन्युरसेन, योजिता, न, योजिता, आत्मानम्, अनङ्गतापितां, गता, अपि तापाय, मम, आस, नेयते । मदेन क्षीबतया, उपोढरागाऽपि धृतरत्यभि-लाषाऽपि, मदेनसा मदपराधेन गोत्रस्खलनरूपेण प्रयोजकेन, मन्युरसेन योजिता, पश्चादनङ्गतापितां स्मरसञ्ज्वरवत्तां, गताऽपि, आत्मानं न योजिता न योजितवती शरीरं मयि नार्पितवती, सा मम नेयते अनियते अपरिमि-ताय, तापाय आस बभूव ॥ ५२ ॥

१. सन्दष्टयमकमप्येवं प्रदर्श्य पुनर्यमकान्तरं दर्शयन् समुद्गयमकलक्षण-माह--

अर्धाभ्यासः समुद्गः स्यादस्य भेदास्त्रयो मताः ।
पादाभ्यासोऽप्यनेकात्मा व्यज्यते स निदर्शनैः ॥ ५३ ॥

जातेः वृत्तस्य वा यदर्धं तस्य यो अभ्यासः आवृत्तिः सः समुद्गः स्यात् भवेत् । तस्य समुद्गस्य भेदाः विकल्पाः त्रयः । व्यवहिताव्यवहितोभयरूपरूपः त्रिविधो यः सः(ऽभ्यासः) समुद्गो भवतीत्यर्थः । न केवलं समुद्ग एव त्रिविधः तथा पादाभ्यासोऽप्यनेकात्मा । पादस्यैकशो द्विस्त्रिश्च योऽभ्यासः सोऽपि व्यवहिताव्यवहितोभयभेदेन अनेकात्मा अनेकरूपः स्यात् । स च व्यज्यते निदर्शनैरुदाहरणैरिति ॥ ५३ ॥

२. एवम् आदिमध्यान्तयमकादीनि प्रदर्श्य अर्धाभ्यासं पादाभ्यासं च प्रदर्शयितुमुपक्रमते अर्धेति । अर्धाभ्यासः पादद्वयाभ्यासः ॥ ५३ ॥

१. तत्र तावत् व्यवहितं समुद्गमुदाहरति—

**ना स्थेयः सत्त्वया वर्ज्यः परमायतमानया ।**
**नास्थेयस्स त्वयावर्ज्यः परमायतमानया ॥ ५४ ॥**

न विद्यते आस्था आदरो यस्याः सा अ(?)नास्था । तस्याः सम्बोधनं अ(?)नास्थे सखि इति । यः त्वया वर्ज्यः परिहर्तव्यः ना पुरुषः । किंविशिशिष्टया । परमायतमानया परमः प्रकृष्टः आयतो दीर्घः मानो हर्षो यस्याःसा परमायतमाना तया त्वया स एव तावदवर्ज्य आराध्यः सेव्यः। (स्थेयः)सत्त्वया-स्थेयः स्थिरतरं सत्त्वमात्मनो बलं यस्याः सा स्थेयस्सत्त्वा तया । परमायतमानया परं आदरवत् आयतमानया प्रयत्नं कुर्वाणया । अथ च त्वया स न वर्ज्यः न त्याज्यः । कीदृग्भूतया त्वयेत्याह आ(अ)स्थेयस्सत्त्वया अस्थिरतरमनोबलया ना पुरुषः आस्थेयः आदृत्यः आ(अ)वर्ज्यश्चावर्जनीय इति । शेषं पूर्ववत् ॥ ५४ ॥

२. प्रथमतृतीययोः द्वितीयचतुर्थयोश्च पादयोः व्यपेताभ्यासं दर्शयति नेति । ना, स्थेयस्सत्त्वया, वर्ज्यः, परमायतमानया, न, आस्थेयः,

सः, त्वया, आवर्ज्यः, परम्, आयतमानया । ना पुरुषः ; स्थेयस्सत्त्वया स्थिरतरचित्तया ; वर्ज्यः परित्याज्यः ; परमश्च आयतश्च मानः प्रणयकलहः यस्याः तया ; नेति प्रतिषेधे ; आस्थेयः विश्वास्यो बहुगुणः ; सः त्वया आवर्ज्यः अङ्गीकार्यः ; परं भृशम् ; आयतमानया प्रयत्नं कुर्वत्या । सापराधेन दयितेन वशीकृता सखी नायिकां प्रति आह– स ना स्थेयस्सत्त्वया परमायतमानया त्वया न वर्ज्यः ; आस्थेयः परम् आयतमानया आवर्ज्य इति ॥ ५४ ॥

१. अव्यवहितं समुद्गमुदाहरति—

नरा जिता माननयासमेत्य
न राजिता माननया समेत्य ।
विनाशिता वैभवतापनेन
विनाशिता वै भवतापनेन ॥ ५५ ॥

हे राजन् येन [ये] नराः जितास्सङ्ग्रामे पराजिताः । कथं कृत्वा भवता पराजिता इत्याह– माननया समेत्य मानना पूजना तया समेत्य संपूज्य[सङ्गम्य] ते नरा न[रा]जिता न शोभिताः किं प्राप्य माननयासमेत्य मानो गर्वः नयो नीतिः । मानश्च नयश्च माननयौ तयोरासो निरासः तमेत्य प्राप्य । ये तावत् सङ्ग्रामे भवता पराजिताः ते न राजिताः । [न] केवलं न राजिता एव विनाशिता मारिता एव । [ये] पुनः भवता मारिताः तेषां का गतिरन्तभाव इत्याह विना गृध्रेण पक्षिणा अशिता भक्षिता वै स्फुटम् । कथंभूतेन वैभवताव[प]नेन । विभोर्भावो वैभवं तत्तापयत्यपनयत्येवंशीलो वैभवताव[प]नः । तेन वैभवताव[प]नेन । रिपुप्रभुत्वापहारिणा । कथंभूतेन विना । आव[प]नेन । आप्नोति व्याप्नोति सम्पत् शिवम् (सम्यक् दिवं) । आपनः तेन ॥ ५५ ॥

२. प्रथमद्वितीययोः तृतीयचतुर्थयोश्च अव्यवहितम् अर्धाभ्यासं दर्शयति नरा इति । नराः, जिताः, माननयासम्, एत्य, न राजिताः, माननया, सम, इत्य, विनाशिताः, वैभवतापनेन, विना, आशिताः, वै भवता अपनेन । अयमर्थः– सम सश्रीक, माननया इत्य मान्य, राजन्, त्वया जिताः, नराः, माननयासं मानस्य नयस्य च असं क्षेपम्, एत्य प्राप्य, न राजिताः नोज्ज्वलाः—पराजिता बभूवुः; वैभवतापनेन—वैभवेन प्रभुत्वेन परेषां तापनेन, अपनेन अकुटिलेन—पन कौटिल्ये इत्यस्मात् पचाद्यच्, भवता विनाशिताः हताः, वै अतः, विना पक्षिणा गृध्रादिना आशिताः भक्षिताः ॥ ५५ ॥

१. व्यवहिताऽव्यवहितं समुद्गमुदाहरति—

**कलापिनां चारुतयोपयान्ति**
**वृन्दानि लापोढघनागमानाम् ।**
**वृन्दानिलापोढघनागमानां**
**कलापिनां चारुतयोऽपयान्ति ॥ ५६ ॥**

शिखण्डिनां वृन्दानि कुलानि चारुतया सुन्दरतया सह उपयान्ति सङ्गच्छन्ते । किंभूतानां कलापिनामित्याह– लापोढघनागमानां, लपनं लापः शब्दः । तेन ऊढः कथितः घनागमः वर्षासमयः यैस्ते लापोढघनागमाः तेषाम् । तथा कलापिनां च कमुदकं तत्र लपन्ति एवंशीलाः कलापिनः हंसाः तेषां चारुतराः(आरुतयः) स्वराः अपयान्त्यपगच्छन्ति क्षीयन्ते । किंभूतानां वृन्दानिलापोढघनागमानां वृन्दानिलो बहुलानिलः । तेनोपोढो निरुद्धो घनो गाढ आगमः आगमनं सञ्चारो येषां ते वृन्दानिलापोढघनागमाः तेषाम् इति ॥ ५६ ॥

२. प्रथमचतुर्थयोः द्वितीयतृतीययोश्च पादयोः व्यवहितम् अव्यव-

हितश्च अर्धाभ्यासं दर्शयति-कलापिनामिति । कलापिनां, चारुतया, उपयान्ति, बृन्दानि, लापोढघनागमानां, बृन्दानिलापोढघनागमानां, कलापिनां, च, आरुतयः, उपयान्ति । लापः शब्दः, तेन ऊढः सूचितः, घनागमः वर्षागमः, यैः तेषां कलापिनां मयूराणां, बृन्दानि चारुतया उपयान्ति ; बृन्दानिलापोढघनागमानां—बृन्दानिलः पुञ्जीभूतः वायुः प्रचण्ड इति यावत्, तेन अपोढः निराकृतः, घनः गाढः, आगमः सञ्चारः, येषां तेषाम् ; कं जलं तस्मिन् लपनशीलाः कलापिनः हंसाः, तेषां च आरुतयः शब्दाः अपयान्ति । इति अर्धाभ्यासाः त्रयो दर्शिताः ॥ ५६ ॥

१. तदेवं त्रिप्रकारमपि समुद्गमुदाहृत्य अवसरप्राप्तं पादाभ्याससमुदाहरति तत्राव्यवहितमेकशः प्रथमपादाभ्यासमाह—

**नमन् दयावर्जितमानसात्मया**
**न मन्दयावर्जितमानसात्मया ।**
**उरस्युपास्तीर्णपयोधरद्वयं**
**मया समालिङ्ग्यत जीवितेश्वरः ॥ ५७ ॥**

नमन् प्रणमन् पादयोः पतन् जीवितेश्वरः मया मन्दया जडप्रकृत्या सत्या न समालिङ्ग्यत नालिङ्गितः । किंभूतया दयावर्जितमानसात्मया दयया करुणया वर्जितः रहितः मानसः तस्या[मानसस्या]त्मा स्वरूपं यस्याः सा तथाभूता तया । पुनरपि किंविशिष्टया । आवर्जितमानसात्मया आवर्जितो मानसात्मा अहंकारः यया सा तथोक्ता तया । कथन्नालिङ्गितः इत्याह । उरस्युपस्तीर्णपयोधरद्वयं उरसि वक्षसि उपस्तीर्णं पयोधरद्वयं स्तनयुगं यस्मिन् तद्यथा भवति तथा । काचित् उपस्थितप्रेमप्रणतप्रियतमसमागमं मानिनी [निराकृत्य?] स्मरहुताशनसन्तप्ततनुरनुशोचति ॥ ५७ ॥

२. पादाभ्यासाः षट्—प्रथमद्वितीयपादयोः प्रथमतृतीयपादयोः

प्रथमचतुर्थपादयोः द्वितीयतृतीयपादयोः द्वितीयचतुर्थपादयोः तृतीयचतुर्थपादयोश्चेति । तत्र प्रथमद्वितीययोः अव्यवहितं पादयमकं दर्शयति— नमन्निति । नमन्, दयावर्जितमानसात्मया, न, मन्दया, आवर्जितमानसात्मया । सापराधं पादप्रणतं प्रियतमम् अवधूय सानुशयायाः नायिकायाः वचनम् । नमन् पादयोः पतन्, दयावर्जितमानसात्मया दयावर्जितमनःस्वरूपया, नेति प्रतिषेधे, मन्दया अज्ञया, आवर्जितमानसात्मया—आवर्जितम् अङ्गीकृतम्, मानस्य प्रणयकलहस्य, सात्म्म् अनुकूल्यं, यया— तया । नमन् जीवितेश्वरः दयावर्जितमानसात्मया आवर्जितमानसात्मया मन्दया मया उरसि उपात्तोर्णपयोधरद्वयं न समालिङ्ग्यत ॥ ५७ ॥

१. द्वितीयपादव्यवहितं प्रथमपादाभ्यासमाह—

**सभा सुराणामबला विभूषिता**
**गुणैस्तवारोहि मृणालनिर्मलैः ।**
**स भासुराणामबला विभूषिता**
**विहारयन् निर्विश सम्पदः पुराम् ॥ ५८ ॥**

सुराणां देवानां सभा आस्थानिका । किंविशिष्टा। अबला। न विद्यते बलः दानवः यस्यां सा अबला । तस्येन्द्रेण व्यापादितत्वात् । अत एव बलभिदुच्यते त्रिदशाधीशः। (पुनः)किंविशिष्टा विभूषिता । विभवः प्रभवः बृहस्पतिप्रभृतयः, तैरुषिता सेविता । या सा सभा । हे राजन् ते तव गुणैः विद्याविनयसत्यत्यागादिभिः आरोहि आरूढा। किंविशिष्टैः । मृणालनिर्मलैः मृणालधवलैः । यस्य सः इत्थंभूतस्त्वं पुरां नगराणां भासुराणां भासनशीलानां अबलाः स्त्रीर्विभूषिताः अलङ्कृताः विहारयन् रमयन् संपदो लक्ष्मीर्निर्विशानुभव ॥ ५८ ॥

२. प्रथमतृतीययोः व्यवहितं पादयमकं दर्शयति—सभेति । सभा,

सुराणाम्, अवला, विभूषिता; सः, भासुराणाम्, अवलाः, विभूषिताः। राजन्, अवला बलासुररहिता, विभूषिता-विभुना इन्द्रेण उषिता अध्यासिता, सुराणां सभा, मृणालनिर्मलैः तव गुणैः आरोहि व्याप्ता; त्वाम् इन्द्रोऽपि सदसि प्रशंसति इत्यर्थः; स त्वम् इह, विभूषिताः अलंकृताः अवलाः तरुणीः विहारयन् रमयन्, भासुराणां उज्ज्वलानां पुरां सम्पदः निर्विश अनुभव ॥ ५८ ॥

१. द्वितीयतृतीयपादव्यवहितं प्रथमपादाभ्यासमाह—

**कलङ्कमुक्तं तनुमध्यनामिका**
**स्तनद्वयी च त्वदृते न हन्त्यतः।**
**न याति भूतं गणने भवन्मुखे**
**कलङ्कमुक्तं तनुमध्यनामिका ॥ ५९ ॥**

त्वदृते त्वां विहाय अन्यं कं जनं न नि(?)हन्ति। किं तु हन्त्येव। किं तदित्याह कलं मधुरं उक्तं भाषितं तथा स्तनद्वयी च स्तनयुग्मं च। किंभूता स्तनद्वयीत्याह—तनुमध्यनामिका तनु-च यत्मध्यं च तस्य नामिकायाः [नामिका] नामनक्रियायाः कर्त्री। अनेन असाधारणजितेन्द्रियत्वमुक्तम्। 'स्त्रीभिः कस्य न खण्डितं भुवि मनः' इत्येतदपि त्वत्तोऽन्यत्र व्याप्रियत इत्युक्तम्। अतो हेतोः भूतं (भूतं) प्राणिनं तनुमच्छरीरिणम्। कलङ्को दोषः। तेन मुक्तं दोषरहितम्। हि स्फुटं अनामिका(या) कनिष्ठिकाया द्वितीयस्थानस्थिता सा अङ्गुली अनामिकेत्युच्यते। सा न याति। क। गणने संख्यानिर्देशे एको द्वाविति कर्तव्ये। भवन्मुखे भवत्प्रधाने ॥ ५९ ॥

२. प्रथमचतुर्थयोः व्यवहितं पादाभ्यासं दर्शयति—कलमिति। अत्र कश्चित् जितेन्द्रियं स्तौति। कलं, कम्, उक्तम्, तनुमध्यनामिका;

कलङ्कमुक्तम्, तनुमत्, हि, अनामिका । कलं मधुरं, कं किंशब्दः, उक्तं वचनं, तनुमध्यनामिका—तनोः कृशस्य मध्यस्य अवलग्नस्य नामिका नमयित्री; कलङ्कमुक्तं कलङ्करहितम्—जितेन्द्रियम् इति यावत् , तनुमत् शरीरि, हि यस्मात्, अनामिका उपकनिष्ठाङ्गुलिः । स्त्रीणाम् इत्यध्याहार्यम् । स्त्रीणां कलम् उक्तम् तनुमध्यनामिका स्तनद्वयी च त्वदृते कं न हन्ति ? सर्वान् बाधते हि यतः, अतो भवन्मुखे गणने प्रस्तुते सति कलङ्कमुक्तं तनुमत् भूतं अनामिका न याति । त्वयि प्रथमं कनिष्ठाङ्गुल्या गणिते द्वितीयाङ्गुलिः त्वत्सदृशं गणयितुं न लभत इति भावः ॥ ५९ ॥

१. अव्यवहितद्वितीयपादाभ्यासमाह—

**यशश्च ते दिक्षु रजश्च सैनिका**
**वितन्वतेऽजोपम दंशिता युधा ।**
**वितन्वतेजोऽपमदं शितायुधा**
**द्विषां च कुर्वन्ति कुलं तरस्विनः ॥ ६० ॥**

यशश्च तथा रजश्च ते तव सैनिकाः दिक्षु वितन्वते विस्तारयन्ति । हे राजन् अजोपम । अजो ब्रह्मा । तेन उपमा यस्य तस्यामन्त्रणं ब्रह्मसमेत्यर्थः (अथवा अजो नाम कश्चिद्राजा इक्ष्वाकुवंश्यः । तेन समेति) दंशिताः कृतसन्नाहाः । कया हेतुभूतया युधा संग्रामेणेति यावत् । किं तदेव तव सैनिकाः वितन्वते । उतान्यदपि कुर्वन्तीत्याह द्विषां शत्रूणां कुलं समूहं च कुर्वन्ति । किंविशिष्टानां तरस्विनां वेगवतां प्रधावनं कुर्वतामित्यर्थः । कथंभूतं कुर्वन्तीत्याह—वितनु विगतशरीरं अतेजः तेजोरहितं अपमदं अपगतगर्वम् । किंविशिष्टास्सैनिका इत्याह—सितायुधाः सितानि निर्मलानि तीक्ष्णानि आयुधानि शस्त्राणि येषां ते तथाविधाः वितन्वते । अजोपमर्द(दं) शितायुधा इति पाठः । तदाऽपि स एवार्थः ॥ ६० ॥

२. द्वितीयतृतीययोः पादयोः अव्यवहितं यमकं दर्शयति—**यश** इति। वितन्वते, अजोपम, दंशिताः, युधा; वितनु, अतेजः, अपमदं, शितायुधाः। हे अजोपम विष्णुसदृश, ते तव सैनिकाः, दंशिताः कवचिताः, शितायुधाः तीक्ष्णायुधाः, तरस्विनः जविनश्च सन्तः, युधा दिक्षु रजश्च यशश्च वितन्वते—धूलीम् उत्थापयन्ति यशश्च प्रथयन्ति; किञ्च द्विषां कुलं, वितनु विशेषेण कृशम्, अतेजः तेजोरहितम्, अपमदं निर्मदं च कुर्वन्ति ॥६०॥

१. व्यवहितं द्वितीयपादाभ्यासमाह—

**विभर्ति भूमेर्वलयं भुजेन ते**
**भुजङ्गमोऽमा स्मरतो मदञ्चितम्।**
**शृणूक्तमेकं स्वमवेत्य भूधरं**
**भुजङ्गमो मा स्म रतो मदञ्चितम् ॥ ६१ ॥**

भुजङ्गमः अनन्तः एषः भूमेः वलयं क्षितितलं विभर्ति दधाति। किमेक एव नेत्याह। ते तव भुजेन बाहुना। अमा सह। त्वद्भुजबल-सहायमन्तरणैकाकी शेषाहिः महीभारं वोढुं समर्थ इति स्मरतः अवधारयतः। तेन तावदञ्चितं पूजितं सुक्तमेकं वचनं शृणु आकर्णय। मदस्मत्तः (मत्तः)। स्मरतः जानत इति मदित्यस्य विशेषणम्। किं तदेकं सूक्तमित्याह स्वं निजं भुजं बाहुं अवेत्य ज्ञात्वा भूधरं भूः पृथ्वी तां धारयतीति भूधरस्तमूढ-भारः रतो हृष्टः तं(त्वं) राजन् मदं गर्वं चितं राशीभूतं मा स्म गमः। मा कार्षीः त्वं गर्वमित्यर्थः ॥ ६१ ॥

२. द्वितीयचतुर्थयोः पादयोः व्यवहितं यमकं दर्शयति—**बिभर्ती-ति**। भुजङ्गमः, अमा, स्मरतः, मत्, अञ्चितम्; भुजं, गमः, मा, स्म, रतः, मदं, चितम्। राज्ञः व्याजस्तुत्या चाटु करोति। स्मरतः विमृशतः, मत् मत्सकाशात्, एकम् अञ्चितं पूजितं उक्तं शृणु; स्वं भुजं भूधरम् अवेत्य बुध्वा, रतः प्रीतः, चितं मदं सञ्चितं गर्वं, मा स्म गमः;

ते भुजेन अमा सह, भूमेः वलयं कश्चित् भुजङ्गमः बिभर्ति। शेषेण यावती भूः ध्रियते, तावती समस्ता तव भुजेन ध्रियते इति भावः ॥६१॥

१. तृतीयपादाभ्यासमाह—

स्मरानलो मानविवर्धितो यः
स निर्वृतिं ते किमपाकरोति।
समन्ततस्तामरसेक्षणे न
समन्ततस्तामरसे क्षणेन ॥ ६२ ॥

स्मरानलः कामाग्निः मानविवर्धितः मानेन कोपेन विवर्धितः संवर्धितः यः सः निर्वृतिं तां प्राक्तनीं प्रियसमागमजनितां हे तामरसेक्षणे पङ्कजलोचने सखि किं ते तव नापकरोति न निरस्यति। समन्ततः समन्तादप[ा]करोत्येव। समं युगपत्ततो विस्तीर्णः। हे अरसे नीरसे क्षणेन झटिति। कांचिद्वयस्यां सञ्जातस्मरज्वरां मानग्रहग्रस्तविग्रहामवलोक्य काचिच्चतुरविलासिनी मर्मस्पृक् नर्मपूर्वकमिदमाह ॥ ६२ ॥

२. तृतीयचतुर्थयोः पादयोः अव्यपेतं पादयमकं दर्शयति स्मरेति। समन्ततः, तामरसेक्षणे, न ; समं, ततः, तामरसे, क्षणेन। यः मानविवर्धितः स्मरानलः सः, हे तामरसे—तामः शरीरग्लानिः, तस्मिन् रसो यस्याः तस्याः सम्बोधनम्—तामरसेक्षणे पङ्कजाक्षि, समन्ततः परितः, समं युगपत, ततः विस्तीर्णः, ते निर्वृतिं क्षणेन किं न अपाकरोति ? अपाकरोत्येव, मानः परित्यज्यतां इति भावः ॥ ६२ ॥

१. अव्यवहितं प्रथमपादाभ्यासं दर्शयति—

प्रभावतो नामन वासवस्य
प्रभावतोऽनाम नवासवस्य।
प्रभावतो नाम न वा सवस्य
विच्छित्तिरासीत्त्वयि विष्टपस्य ॥ ६३ ॥

प्रभावतः प्रभावेन वासवस्याखण्डलस्य तामनन्तमनन्वं (नामननमनं) कारयतीति नामनः तस्यामन्त्रणम्। [नमन-]क्रियाया कारक प्रभावतः (?) प्रभावतः तेजस्विनः वासवस्य नामेति । स्फुटम्। नवः प्रत्यग्रः आसवः सुरा। दुग्धाब्धिमथनोत्थिता यस्य तस्य नामनः । अथवा आसवस्य मद्यस्य नाम न वा आसीत् नैवाभूत्। वाशब्दः एवकारार्थे। कदेत्याह। त्वयि भवति विष्टपस्य जगतः प्रभौ स्वामिनि सति। अतो हेतोः। सवस्य सूयत इति सवः यागः तस्य नासीन्न बभूव। केत्याह विच्छित्तिः विच्छेदः। त्वयि भुवनं रक्षति कदाचित् न यज्ञानां विच्छेदो जात इत्यर्थः । अथ वा किंविशिष्टस्य सवस्य यज्ञस्य नवासवस्य नवः आसवः (स)यस्मिन् स नवासवः। सः कः पौण्डरीकः। पौण्डरीके यागे सुराऽप्यस्ति। यदुक्तम्–

'पौण्डरीके सुरां पिब'

इति। अतः यज्ञविशेषणं नवासवस्येति ॥ ६३ ॥

२. अथ पादस्य द्विरभ्यासेन चत्वारि दर्शयिष्यन् प्रथमं प्रथमद्वितीयतृतीयपादैः उदाहरणं दर्शयति **प्रभावत** इति। प्रभावतः, नामन, वासवस्य; प्रभावतः, अनाम, नवासवस्य; प्रभौ, अतः, नाम, न, वा, सवस्य; विच्छित्तिः, आसीत्, त्वयि, विष्टपस्य। प्रभावतः तेजस्विनः, वासवस्य शक्रस्य, प्रभावतः स्वमहिम्ना, नामन न्यक्कारकर, नवासवस्य नवस्य आसवस्य, अनाम अप्रापक। अमु गतौ इत्यस्मात् आङ्पूर्वात् पचाद्यच्—अमद्यप इति यावत्, त्वयि विष्टपस्य प्रभौ सति, अतः अस्मिन् लोके, सवस्य यज्ञस्य, विच्छित्तिः न वा आसीत्। न-वा-शब्दौ नेत्यर्थे; अनवरतं क्रतवः प्रवर्त्यन्ते इति भावः ॥ ६३ ॥

१. द्वि[?]तीयपादव्यवहितं प्रथमपादाभ्यासं द्विराह–

**परम्पराया बलवारणानां**
**परं पराया बलवारणानाम्।**

धूलीस्थलीर्व्योम्नि विधाय रुन्धन्
परं पराया बलवा रणानाम् ॥ ६४ ॥

परं वैरिणं पराया अगमः गतोऽसि । कथंभूतः त्वं बलवाः बलं शक्तिः तद्वातीति बलवाः वाते(ः) क्विप् । यद्वा बलं वैरिवीर्यं चतुरङ्गं वा वारयति निषेधतीति बलवाः । वारयतेः णिचि क्विप् । रेफस्य विसर्जनीये रूपम् । रन्नानां (रणानां) संग्रामाणां धूलीनां स्थलीः पांसुराशीः व्योम्नि नभःस्थले विधाय कृत्वा रुन्धन् पर[ं]स्वामिनं परायाः प्रकृष्टायाः परम्परायाः घटायाः बलवारणानां बलेन सामर्थ्येन युक्ता ये वारणा हस्तिनः तेषाम् । ....(अथवा बलवारणानां या परम्परा समूहः तां रुन्धन् । कीदृशी परम्परेत्याह पराया प्रकृष्टागमनां प्रचुरागमने(ति) यावत् । अन्यत् समस[-मान]म्) ॥ ६४ ॥

२. प्रथमद्वितीयचतुर्थपादैः यमकं दर्शयति—**परम्परायाः** इति । परम्परायाः, बलवारणानां, परं, परायाः, बलवारणानां, धूलीः, स्थलीः, व्योम्नि, विधाय, रुन्धन्, परं, पराया, बलवाः, रणानाम् । रणानां बलवाः बलज्ञः—वातेः विचि रूपम्—बलवारणानां परबलनिवारणानां, बलवारणानां बलवतां गजानां, परायाः उत्कृष्टायाः, परम्परायाः पङ्क्तेः, परं परतः स्थितं, परं शत्रुं, हयखुरजनिताः धूलीः व्योम्नि स्थलीः विधाय, विश्वं रुन्धन् चक्षुषोः अविषयं कुर्वन् सन्, परायाः अगाः । अनेकगजघटान्तरितं दूरस्थमपि शत्रुं गतवान्, गजांश्च शत्रुं च हतवान् इत्यर्थः ॥ ६४ ॥

१. द्वितीयपादस्य द्विरभ्यासमाह—

न श्रद्दधे वाचमलज्ज मिथ्या-
भवद्विधानामसमाहितानाम् ।
भवद्विधानामसमाहितानां
भवद्विधानामसमाहितानाम् ॥ ६५ ॥

न श्रद्दधे न प्रत्येमि। वाचं गिरं त्वदीयां मिथ्या वितथार्थां अलज्जा (ज्ज)निस्त्रपा (प) भवद्विधानां त्वादृशानां असत्यभाषणानामेवंवादिनः(नां) असमाहितानां न समाहिता असमाहिताः तेषां चपलानाम्। कथंभूतां वाचं भवद्विधानं(नां) भवज्जायमानं विधानं प्रकारो यस्या (स्ताम्) एवंवादिनो भवन्तः किंविशिष्टा इत्याह—असमाहितानां विषमशत्रूणां, पुनरपि किंविशिष्टानामित्याह भवद्विधानां भवे नीलकण्ठे द्विधा भेदो येषां ते तथोक्ताः। अथवा (भवद्)द्विधानां द्वैधीभावः। भव(द्)द्विधानं यस्या[अ]सौ भव(द्)द्विधानां(ना) [भवद्]द्वैधीभावानां(–भावा तां), अथवा भवती जायमाने द्वै(द्वि)धाने सत्यानृतलक्षणे सत्यां[यस्यां] सा भवद्विधानां (-ना ताम्)। पुनरपि किंविशिष्टां वाचमित्याह। असमाहितानां न समः असमः स चासावहिश्च तस्येव तानः प्रपञ्चः यस्याः सा असमाहितानेति। असमाहितानां विषमद्वेषिणाम्। हे अलज्ज त्वादृशानामस्थिरचित्तानां गिरं व्यलीकां जायमानां अप्रयोजनं कुटिलभुजङ्गसमानां जातद्वैधीभावां सत्यानृतसमाश्रयामहं न प्रत्येमीत्यर्थः॥ ६५॥

२. अथ द्वितीयपादं विना त्रिपादावृत्तेः उदाहरणं पाठान्तरेषु अन्वेष्टव्यम्। अत्र प्रथमपादं विना त्रिपादावृत्तिं दर्शयति–नेति। न, श्रद्दधे, वाचम्, अलज्ज, मिथ्याभवद्विधानाम्, असमाहितानां भवद्विधानाम्, असमाहितानां, भवद्विधानाम्, असम, अहितानाम्। हे अलज्ज निर्लज्ज, असम–समः सश्रीकः—असम अलक्ष्मीक; भवद्विधानां—भं नक्षत्रं, भवत् आकाशं, भवतः इव विधा प्रकारः येषां तेषाम्–तुच्छस्वरूपाणामिति यावत्—भवद्विधानां भवादृशानाम्, असमाहितानां प्रमत्तानां, मिथ्याभवद्विधानां मिथ्याभूतप्रकाराणाम्, अहितानां हितेतराणाम्, असमाहितानां विषमभुजङ्गविस्ताराम्—कुटिलामिति यावत्, वाचं न श्रद्दधे। एवंविधानां भवादृशानाम् एवंभूतां वाचं न श्रद्दधे, तेषां मिथ्यावादित्वात्॥

१. प्रथमपादस्य त्रिरभ्यासमाह—

**सन्नाहितो मानमराजसेन**
**सन्ना हितोऽमानम राजसे न ।**
**सन्नाहितोऽमानमराजसेन**
**सन्नाहितोमानमराजसेन ॥ ६६ ॥**

उः ब्रह्मा । तस्य समानः [मानः] उमानः पूजा सन्नाहितः सन्नद्धः । सज्जीकृतः उमानो ब्रह्मपूजा यस्मिन् तस्मिन् (?) सन्नाहितोमानं यथा भवति एवम् । अराजसो रजोगुणेन निर्वृत्तः [राजसः न राजसः] अराजसः सत्त्वप्रकृतिः तस्यामन्त्रणं हे अराजस । इह(न) स्वामिन् । सन्ना नष्टा अहितानामरातीनां उमा कीर्तिः यस्मादसौ सन्नाहितोमः न नमतीत्यनमा राज्ञः सेना चतुरङ्गसैन्यं अनमा अभङ्गा राजसेना यस्यासौ अनमराजसेनः । सन्ना सत्पुरुषः । उमा गौरी, न विद्यते आ(अ)मो रोगो यस्यासावनमः स चासौ राजा च क्षयामयरहितश्चन्द्रः उमा चानमराजश्च उमानमराजौ । आहितौ स्थापितौ अर्धदेहजटाजूटयोरुमानमराजौ येनासावाहितोमानमराजः शिवः । तेन सेनः सह तेन स्वामिना वर्तत इति सेनः । देहार्धमूर्धविधृतगौरीचन्द्रहरसनाथः । (अथवा हिता उमा गौरी यस्य स हितोमः । मा लक्ष्मीः सा न विद्यते यस्य सोऽमः । न अमः अनमः । सश्रीक इति यावत् । अनमो राजा चन्द्रो यस्य सोऽनमराजा । हितोमश्चासावनमराजा च हितोमानमराजा । ईश्वर इति यावत् । इनः स्वामी तेन सह वर्तत इति सेनः हितोमानमराज्ञा सेनः सनाथः हितोमानमराजसेनः । महादेवसनाथ इति यावत् ।) सन्नाहितः कृतसन्नाहः मा प्रतिषेधे । अनमः अकृतप्रणामः उन्नतप्रकृतः राजसे शोभसे नेति द्वितीयायाः (तोयः) प्रतिषेधः । तेनायमर्थः । हे राजन् सत्पुरुषो यः त्वं कृतसन्नाहः मा न राजसे अपि तु राजस एव । सन्नाहितोमान[नं] त्वतः(कृत) ब्रह्मपूजा[जं] यथा भात्येवं हे ध्वस्तारातिकीर्ते अभङ्गचतुरङ्गबल, गौरीचन्द्रधरहरसनाथ, परमेश्वर, रजोरहित, स्वामिन्निति कश्चिदुपश्लोक्यते ॥ ६६ ॥

२. त्रिरभ्यासं महायमकं नाम दर्शयति—सन्नाहित इति । सन्नाहितः, मानम्, अराजसेन; सन्ना, हितः, अमानम, राजसे, न; सन्नाहितः, अमानमराजसेन; सन्, न, आहितोमानमराजसेन। सन्नाहितः, कवचितः; मानम् अभिमानम्; अराजसेन—राजसाः रजोगुणवन्तः, अराजसाः तदितरे, सात्त्विकाः इति यावत्, तेषां इनः स्वामी अराजसेनः, तस्य सम्बोधनम्; सन्ना सत्पुरुषः; हितः गतः; अमानम अमितलक्ष्मीक; राजसे शोभसे; नेति निषेधे; सन्नाहितः सादितशत्रुः; अमानमराजसेन—अमा अमिता, अनमा उन्नता, राजा राजमाना, सेना यस्य तस्य सम्बोधनम्; सन् भवन्; नेति निषेधे; आहितौ प्राप्तौ, उमा गौरी आनमो वक्रः राजा चन्द्रश्च, येन सः—आहितोमानमराजः, तेन सेन सस्वामिक। हे अराजसेन, अमानम, अमानमराजसेन, आहितोमानमराजसेन, मानं हितः सन् सन्नाहितः सन्नाहितः सन्ना त्वं न न राजसे। इति दृष्टादृष्टबलाभ्यां जितशत्रुं राजानमुपस्तौति ॥ ६६ ॥

१. पादाभ्यासमुदाहृत्य प्रकृतमुपसंहरति—

**सकृत् द्विस्त्रिश्च योऽभ्यासः पादस्यैवं प्रदर्शितः।**
**श्लोकद्वयं तु युक्तार्थं श्लोकाभ्यासः स्मृतो यथा ॥ ६७ ॥**

एकशो द्विः द्विशः। त्रिः त्रिशः यः पादस्याभ्यासः आवृत्तिस्स दर्शितः उक्तः इत्यर्थः। एवमनन्तरोक्ति[क्त]न्यायेन श्लोकद्वयन्तु जातेर्वृत्तस्य वा द्वयं युग्मं युक्तार्थमनुरूपार्थं श्लोकाभ्यासः समा[तदा]वृत्तिः स्मृतः चिन्तितः। यथेत्युदाहरति ॥ ६७ ॥

२. एवं पादाभ्यासं दर्शयित्वा श्लोकाभ्यासमुपक्षिपति—सकृदिति। युक्तार्थं परस्परसम्बद्धार्थम्। अनेन पदभेदपठितं व्यावर्तयति ॥

विनायकेन भवता वृत्तोपचितबाहुना।
स्वमित्रोद्धारिणा भीता पृथ्वी यमतुलाश्रिता॥ ६८॥

विनायकेन भवता वृत्तोपचितबाहुना।
स्वमित्रोद्धारिणाभीता पृथ्वी यमतुलाश्रिता॥ ६९॥

हे राजन् पृथ्वीयं मही अतुला निरुपमा। अभीता भयरहिता। भवता त्वया आश्रिता पालयितुमारब्धा। किंविशिष्टेन भवतेत्याह विनायकेन साहसमुख्यो नायकः विशिष्टा नायका यस्यासौ विनायकः तेन विनायकेन। यद्वा विशिष्टसामन्तेन नयतीति नायकः सेनापतिर्वा सहवर्तत इति विनायकः। तेन। वृत्तोपचितबाहुना वृत्तौ वर्तुलौ परिणाहिनावुपचितौ मांसलौ बाहू यस्यासौ वृत्तोपचितबाहुः। तेन। सुष्ठु अमित्रानुद्धराति उत्खनतीति अमित्रोद्धारी तेन। रिपुनिर्मूलकेनेत्यर्थः। अयमेकोऽर्थः। द्वितीयोऽर्थो व्याख्यायते। अरिणा वैरिणा पृथ्वी महती यमतुला यमः कृतान्तः तस्य तुला डोला विचारो वा अभीता अभिमुखमिता प्राप्ता श्रिता [किंविशिष्टा आश्रिता] [?] किंविशिष्टेन अरिणेत्याह विनायकेन विगतनायकेन भवता सता। वृत्तः संवृत्तः उपचितः मृतदहनार्थं पुञ्जीकृतः काष्ठानि चिता तस्याः समीपं[पे] बाहुः यस्यासौ उपचितबाहुः तेन। स्वस्यात्मीयस्य मित्रं बन्धुजनः तदुज्जहाति इति स्वमित्रोद्धाः तेन स्वमित्रपरित्यागिना। स्वमित्रोद्धा इत्युत्पूर्वस्य जहातेः क्वचि [क्विपि] तृतीयैकवचने आतो धातोरित्याकारलोपे हस्य 'झयो होऽन्यतरस्या'मिति पूर्वसवर्णत्वं रूपम्॥ ६८-६९॥

२. तत्र प्रथमश्लोकं दर्शयति—विनायकेनेति। विनाभूतः अयः इष्टदैवं यस्य सः विनायकः, शैषिकः कप्, तेन विनायकेन; भवता सता; वृत्तोपचितबाहुना—उपचितं चितासमीपे, वृत्ताः बाहवो ज्ञातयो, यस्य तेन, बाहुशब्दो लक्षणया ज्ञातिषु प्रयुक्तः, हतज्ञातिना इति यावत्; स्वमित्रोद्धा-

स्वम् आत्मीयं मित्रम् उद्धा उज्झता, ओहाक् त्यागे इत्यस्मात् विचि तृतीयैकवचनम् ; अरिणा शत्रुणा ; भीता त्रस्ता ; पृथ्वी भूः ; यमतुलाश्रिता अन्तकसाम्यभाजा, क्रूरेणेति यावत् । एवंभूतेन शत्रुणा पृथ्वी भीता इति प्रथमश्लोकार्थः । अथ द्वितीयश्लोकार्थ उच्यते । विनायकेन विनेत्रा ; भवता त्वया ; वृत्तोपचितबाहुना सुवृत्तमांसलभुजेन ; स्वमित्रोद्धारिणा–सुष्ठु अमित्रान् उद्धरता निर्मूलयता ; अभीता—भियम् एतीति भीत्, इण् गतौ इत्यस्मात् क्विप्, भीता बिभ्यता, तदन्येन अभीता निर्भयेन ; आश्रिता प्राप्ता ; इयं पृथ्वी भूः ; अतुला निरुपमा अभूत् ॥ ६८-६९ ॥

१. श्लोकाभ्यासमप्येवं प्रदर्श्य महायमकलक्षणं प्रदर्शयितुकाम आह—

**एकाकारचतुष्पादं तन्महायमकाह्वयम् ।**
**तत्रापि दृश्यतेऽभ्यासः सा परा यमकक्रिया ॥ ७० ॥**

चत्वारः पादा यस्य (एकाकाराः तद्) एकाकारः (र) चतुष्पादः (दं) महायमकाह्वयं महायमकमित्याह[ह्व]यो नाम यस्य । कस्यापि[तत्रापि] दृश्यते अभ्यास आवृत्तिः अर्धपादैनैकशो निर्वहणमित्यर्थः सा परा प्रकृष्टा यमकक्रिया यमकरचना ॥ ७० ॥

२. एकेति । एकाकारचतुष्पादं पद्यं महायमकं नाम भवति । एकरूपार्धपादाष्टकात्मकं पद्यं परयमकं नाम ॥ ७० ॥

१. एवं लक्षणं प्रदर्श्य महायमकमाह—

**समानयासमानया समानयासमानया ।**
**स मा न यासमानया समानयासमानया ॥ ७१ ॥**

यानं(यसनं) यासः प्रयत्नः । मानः पूजा । यासश्च मानश्च यासमानौ समानौ सदृशौ ऊनाधिकभावरहितौ यासमानौ यस्याः सा समानयासमाना

तया । अविद्यमाना समाना सदृशी यस्याः सा असमाना तया असमानया निरुपमया । मानो अभिमानो गर्वो वा । सह तेन वर्तत इति समाना । तया । साभिमानया सगर्वया वा । सम आनः प्राणो जीवितं (य)या सा समानप्राणा सह(?) तया समानया प्राणसमया वल्लभया समानय समागमय । समाङ्पूर्वो णीञ् सङ्गमे वर्तते । असमानां(नं) स्वस्मादधिकबलं यातीत्यसमानयः । तस्यामन्त्रणं हे असमानय । असम सखे अनया सह मां स त्वं संयोजयेति कश्चित् केनापि प्रियासमागमं प्रति प्रार्थ्यते । समानप्रयत्नपूजया निरुपमया सगर्वया प्राणसन्निमया वल्लभयाऽनया हे असमानय असम सखे मां योजयेति समुदायार्थः ॥ ७१ ॥

२. तत्र महायमकं दर्शितम्, परयमकं दर्शयति–समानयेति । समानया, असमानया, समानयासमानया, सः, मा, न, या, असमानया, समानय, असम, अनया । समानया सबहुमानया ; असमानया ; निरुपमया ; समानयासमानया––यासः स्वरक्लेशः, समानं यासस्य मानं परिमाणं यस्याः तया, समानुरागया इति यावत् ; सः त्वम् ; मा माम् ; न प्रतिषेधे ; या प्रस्तुता ; असमानया–मानयाभ्यां सहिता समानया, तदन्या असमानया ; समानय सङ्गमय ; असम निरुपम ; अनया एतया । हे असम सखे स त्वं मां समानयासमानया समानया असमानया अनया समानय, या असमानया न भवति ॥ ७१ ॥

१. सङ्कीर्णमुदाहरति–

धराधराकारधरा धराभुजां
भुजा महीं पातुमहीनविक्रमात् ।
क्रमात् सहन्ते सहसा हतारयो
रयोद्धुरा मानधुरावलम्बिनः ॥ ७२ ॥

धराधराकारधराधराभुजामिति प्रथमपादे (आदि)मध्याव्यपेतं(त) यमकं भुजा महीं पातुमहीनविक्रमा इति द्वितीयपादे व्यपेतं मध्ययमकं अहीनविक्रमाः क्रमात् सहन्ते हतारयो रयोद्धुरा इत्यत्र सन्दष्टं रयोद्धुरा-मानधुरावलम्बिनः इत्यत्र व्यपेतं मध्यपादयमकम् । एवमूह्यं (एवमाद्यं, अथ वा, एवं मिश्रम्) एकस्मिन्नेव वृत्ते इत्यतः सङ्कीर्णमुच्यते। अस्यायमर्थः। धरा पृथ्वी। तां धरति बिभर्ति धराधरः शेषः। तस्याकारः आकृतिः। तं धराधराकारम् धरति दधातीति धराधराकारधरा भोगिभोगसदृक्षा इत्यर्थः। धरां भुञ्जन्ति रक्षन्ति इति धराभुजो राजानः। तेषां भुजाः हस्ता महीं पृथ्वीं पातुं रक्षितुं अहीनः अप्रच्युतो विक्रमो वीर्यं येषां ते अहीनविक्रमाः। यद्वा अहयः सर्पाः। तेषामिनः स्वामी शेषः तस्येव विक्रमो येषां ते अही-नविक्रमाः। क्रमात् न्यायात् सहन्ते समर्थयन्ति (र्थां भवन्ति)। सहसा झटिति हता अरयो यैस्ते सहसा हतारयः। * रयो वेगः तेन उद्धता धूर्व्या-पारो येषां ते तथोक्ताः। धीरान् [णां] धुरमवलम्बितुं शीलं येषां ते धीरधुरावलम्बिन इति[?] समुदायार्थः॥ ७२॥

२. अव्यपेतव्यपेतादीनां यमकानां सम्भेदयोनयो बहवो यमकभेदाः इत्युक्तम्; अव्यपेतसन्दष्टयमकानां मिश्रणेन एकमुदाहरणं दर्शयन् प्रस्तुतं यमकम् उपसंहरति—धराधरेति। धराभुजां भूभुजां, धराधराकारधराः

---

* इतः प्रभृति कचिदेवं पाठो दृश्यते—

रयोद्धुराः वेगोत्कटाः मानोऽभिमानः तस्य धूर्मानधुरा हि (-ऽभि)मानाग्रेसरता तामवलम्बन्ते मानराधुवलम्बिनः। इति। शेषा-धरा(-हिवत्) प्रलम्बाः पीथाः (पीवराः) पृथ्वीनाथानां बाहवः पृथ्वीं रक्षितुं क्षमन्ते झटिति विध्वस्तारातयः अप्रच्युतपराक्रमा(ः। अ)तिलङ्घने(-लाघवे)न रणरव(रङ्ग)साहसिका मानाग्रे रसा(-सर-ला)वलम्बिता(न) इति समुदायार्थः।

गिरिसदृशाः—अथवा धरा पृथ्वी धराधरः शेषः तस्य आकारं धारयन्तीति धराधराकारधराः शेषभोगसङ्काशाः, सहसा हतारयो रयोद्धुराः मानधुरावलम्बिनः भुजाः , अहीनविक्रमात् अन्यूनविक्रमात्, क्रमात् व्यापारात्, महीं पातुं सहन्ते क्षमन्ते ॥ ७२ ॥

१. प्रतिलोमयमकलक्षणमाह—

**आवृत्तिः प्रातिलोम्येन पादार्धश्लोकगोचरा ।**
**यमकं प्रतिलोमत्वात् प्रतिलोममिति स्मृतम् ॥ ७३ ॥**

प्रातिलोम्येन प्रातिकूल्येन आवृत्तिः वर्णानां पादार्धश्लोकगोचरा पादश्चार्धश्च श्लोकश्चेति द्वन्द्वः । ते गोचरो विषयो यस्याः सा तथा । तद्यमकं प्रतिलोममिति स्मृतम् वर्णानां प्रतिलोमत्वादिति हेतुपदम् ॥७३॥

२. एवमनुलोमयमकं प्रदर्श्य प्रतिलोमयमकलक्षणमाह —**आवृत्तिरिति** । वर्णानां प्रातिलोम्येन आवृत्तिः प्रातिलोमयमकम् । तत् त्रिविधम्—पादप्रतिलोमम्, अर्धप्रतिलोमम्, श्लोकप्रतिलोमं चेति ॥ ७३ ॥

१. तदुदाहरन् तत्र (पाद)प्रतिलोममाह——

**यामताश कृतायासा सा याता कृशता मया ।**
**रमणारकता तेऽस्तु स्तुतेताकरणामर ॥ ७४ ॥**

'यामताश कृता या सा' इत्येकः पादः । स एव प्रातिलोम्येन पठ्यते ततोऽसावेव द्वितीयः पादो भवति । 'सा याता कृशता मया' । 'रमणारकता तेऽस्तु' इत्यपरः पादः । प्रातिलोम्येन पठ्यमानः 'स्तुतेताकरणामर' इति चतुर्थः पादो भवति । तदेवं पादद्वयं प्रातिलोम्येन पठ्यमानं पादद्वयं भवतीति पादप्रातिलोम्यमुच्यते ॥

अस्यायमर्थः । मता आशा यस्मिन्नसौ मताशः । तस्यामन्त्रणं हे

मताश कल्याणाशेति यावत्। कृतः आयासः खेदो यया सा कृतायासा सा[?] जनितखेदा या सा कृशता सा याता प्राप्ता अतः किं परमधिकं भविष्यतीति। हे रमण कान्त आरकतास्ते (तेऽस्तु) आर्तिं (आरयति) गच्छतीत्यारकः। तस्य भावः आरकता आर्तिता (?)गमनं अस्मद्-गृहात्वयास्तु भवतु। आगमनमस्मदन्तिके तव मा भूदिति। स्तुतं स्तवमेतीति स्तुतेतः तस्यामन्त्रणं हे स्तुतेत स्तवप्राप्त। अकरणामर अविद्यमानं करणं कृतिः येषां ते अकरणाः। अकरणाः (अ) कृत्रिमाः अमर्त्याः अमराः हरिहरादयो देवा यस्य अकरणामरः। हे सत्य-देव। इदं चोपहासपरमीर्ष्यावचनम्—स्तुतेताकरणामरेति। तेनायमर्थः। हे दयित निर्दैवत निन्दाविपयासत्यवादिन् अधार्मिक नास्तिक येन त्वया जनिताशेन मम ईदृशी सम्पादितपरितापा कृता (कृशता) तस्य तव ममा-गारे आगमनं कदाचिदपि मा भूदिति कयाचित् कश्चित् कान्तः कुपितया प्रेमपरवशया सेर्ष्यमभिधीयत इति। (अथ च हे मताश कल्याणाश या सा कृतायासा त्वद्दर्शनं प्रति कृतप्रयत्ना सा याता सा प्रिये(या) गते ति यावत्। अत एव मया कृशता याता कृशत्वं गतम्। हे रमण प्रिय। स्तुतेत स्तुतिप्राप्त अकरण अप्रतिबद्ध अमर देव ते तव आर-कता आगन्तृता अस्तु भवतु। देशान्तरस्था (स्थां-स्थौ वा] मातरं पितरं चोपगतायां बालायामवधिमतिक्रम्यागतं तत्प्रिया सखी ईर्ष्यया काचिदेवं अभिहितवती। मता प्रशस्ता आशा चित्तं यस्य स तथोक्तः। कृतः आ-यासः प्रयत्नो यया सा तथोक्ता। आरकः गतं(तः) तद्भावः आरकता। स्तुतं स्तुतिः। तदितः स्तुतेतः। करणं क्रिया। तन्न विद्यते यस्य स अ-करणः। क्वचिद्व्यापारेऽनियुक्त इति यावत्। अमर इति स्तुतिपरम्। अथ च रमण हे प्रिय ते तव आरकता आगन्तृता(?) अस्तु भवतु। अस्मद् गृहात् कदाचिदपि मा गम इत्यर्थः।

मताश अभिमताश ममेष्टप्रवृत्तिकरेत्यर्थः । मया कृतायासा कृत-प्रयत्ना कृशता प्राप्ता । कथञ्चिदेव जीवामि त्वद्विरहे इत्यर्थः । स्तुतेत स्तुतिप्राप्य अकरणं(ण) निष्प्रयोजनं[न]; यत्र भवान् गन्तुमिच्छति तत्र भवतो न प्रयोजनमित्यर्थः । अमर आयुष्मान् अस्मद्गृहे चिरकालं वस-त्वि[त्वमि]त्यर्थः ॥ ७४ ॥

२. तत्र पादप्रतिलोमं दर्शयति—येति । अन्यत्र अपवाहितनिशं प्रातरागतं वल्लभं दयिता अत्र भर्त्सयति । अमताश–मदनिष्टे आशा यस्य, तस्य सम्बोधनम् ; कृतायासा कृतक्लेशा ; या कृशता कार्श्यं, सा मया याता प्राप्ता ; स्तुतेत प्रशस्तचरित ; अकरण कृतकृत्य; अमर देवभूत–उपालम्भ एषः ; रमण वल्लभ, ते तव आरकता गन्तृता, अस्तु भवतु । यथेष्टदेशं गच्छ इति यावत् ॥ ७४ ॥

१. उक्तं पादप्रतिलोम(म् । अर्धप्रतिलोम) मुदाहरति—

**नादिनो दमना धीस्त्वा न मे काचन कामिता ।**
**तामिका न च कामेन स्वाधीना मदनोदिना ॥ ७५ ॥**

'नादिनो मदनाधी स्वा न मे काचन कामिता' इति श्लोकार्धम् । तदेव प्रातिलोम्येन पठ्यते । ततोऽपरमर्धमुपलभ्यते इत्यर्धप्रतिलोमम् । अ-स्य विवरणम् । नादो ध्वनिः । अताल्वोष्ठपुटव्यापारजनितस्वसमयाहिता-तिशयसूचकः(?) तपःप्रत्यूहहेतुः(–तु)कामाद्युपद्रवविघातहेतुः तस्यैव सिद्धा-न्तोक्तं चिन्तावलम्बनं(नत्वं?) स विद्यते यस्य स नादी विभूतिप्राप्तो योगी तस्य नादिनः योगिनः कामः योषिदभिलाषविषयः स यस्या न विद्यते सा अमदना धीः बुद्धिः स्वा स्वकीया यतोऽतो न मे नैव काचन काचिदपि कामिता रागिता । तथा तामिका तमु कांक्षायां वर्तन्ते(ते) । तमनं

तामिका भावे ण्वुच्। सा च नैव। कामेन हेतुभूतेन किंविशिष्टेन दमनोदिना दम उपशमः तं नुदत्यपनयति तेन मदनोदिना। किंविशिष्टा स्वाधीना स्वायत्ता तेना [अनन्या]यत्ता। तात्पर्यार्थः। योगिनो वीतरागस्य बुद्धिरकाम[ा]यतो [ऽतो] मम न काचन रागिताऽस्ति। न च कामेनोपशमनो[दनं] भवति। मनोभवविषया काचन न तृष्णास्ति; अहो(हं) योगी ततो ग(न)मे कामादिबाधाऽस्तीति कश्चिन्मुनिः चित्तप्रसाधननिमित्तं परिकर्म विरचयति। अथ च नादो ध्वनिः येषां विद्यंत ते नादिनः। मदयतीति मदनः। अमदना धीः बुद्धिः स्वा आत्मीया न परवशेति यावत्। परवशत्वाभावमेव द्रढयितुमाह न मे काचन कामितेति। मम न किञ्चित्कामित्वम्। निस्पृहे मयि कोऽयं अपकारयत्नो भवतामित्यभिप्रायः। अथापि स्यात् स न सिद्धयति भवतामिति दर्शयितुमाह— कामिते[तामिके]त्यादि। दममुपशमन्नोदितुं अपहर्तुं शीलं यस्य स तथोक्तः। स्वाधीना धीः स्वायत्ता बुद्धिः दमनोदिना कामेन मन्मथेन हेतुभूतेन न च कामिताऽपि [तामिका] प्रार्थिता[का] भवति। यत एवमतो गर्जद्भिः भवद्भिः न किञ्चिदपि [इति] अभिप्रायः। वियोगाद्विक्षिप्तचित्तः कश्चित् कामी गर्जतो मेघान् उद्वीक्ष्यैवमवोचदिति ॥ ७५ ॥

२. अर्थप्रतिलोमं दर्शयति–नादिन इति। योगी स्वाम् अवस्थाम् अनुसन्धत्ते। योगाभ्यासबलात् अन्तर्हृदये नादो ध्वनिः उदेति; नादवतो मे मम स्वा स्वीया धीः दमना दमगुणयुक्ता, स्वाधीना च; न मे काचन कामिता, काचित् अर्थस्पृहाऽपि मम नास्ति; मदनोदिना मदवर्धनेन, कामेन स्मरेण, तामिका ग्लानिश्च नास्ति ॥ ७५ ॥

१. श्लोकप्रतिलोममुदाहरति—

यानमानय मा रावि कशोनानजनासना।
यामुदार शताधीनामायामायमनादि सा ॥ ७६ ॥

सादिनामयमायामा नाधीता शरदामुया ।
नासना जनना शोकविरामायनमानया ॥ ७७ ॥

यानमानयेत्ययमेव श्लोकः प्रतिलोमेन पठ्यते । ततोऽपरो भिन्नार्थश्लोको भवति [ेति] श्लोकप्रतिलोमम् । अस्या[स्य] व्याख्या । यानं ज्ञानं यदुक्तं 'हरेर्महायाननयानुयायिनः ।' महाज्ञानानुसारिण इत्यर्थः । ततो याते[:] ज्ञानार्थे वृत्ति[:] मानोऽभिमानार्थः पूजार्थो वा । यानं च मानश्च यानमानौ । तौ यातीति यानमानयः । यद्वा पूज्याश्च मारयतीति मार(?) अवन्ति रक्षन्ति नियमयन्तीति माराविणः । जितेन्द्रियाः । यानमानयाश्च ते माराविणश्च यानमानयामाराविणः तेषामेवंविधानामपि यानमानयामाराविणां कशेव चर्मयष्टिरिव या कान्ता चित्तविरा[-कार]जन[क]त्वेन दुःखहेतुत्वात् । तथा ऊनाननजनासना ऊनो हीनः आनः प्राणः सत्त्वं मनोबलं येषां ते ऊनानाः । ते च ते जनाश्च ऊनानजनाः तेषामासना आ समन्ततः अस्यति निरस्यति पावत [इति यावत्?] इति आसना । अस्यतेराङ्पूर्वस्य नन्द्यादिपाठात् कर्तरि ल्युः । कर्मणि षष्ठीसमासः । यामुदारशताधीनामायां अहमगमं; कां उदाराः प्रभवः तेषां शतानि तेषामायत्तां अधीनां स(ा)मया आयमागमनं अनादि नदिता अभिहिता आहूत[ा] इति यावत् । आयमनादिसेत्यनव(·दतेः) ब्रुविगु(ग)णत्वान्न ते ब्रुविशयासिगणे न च यत्सजते तदकीर्तितमाचरितं कविना इति कर्मकारकः(?) । ततः 'प्रधानकर्मण्यभिधेये (-व्याख्येये) लादीनाहुर्द्विकर्मणि । अप्रधाने दुहादीना'मिति ब्रुविगु(ग)णत्वेन नदतेर्दुहादित्वात् अप्रधाने कर्मणि ल्युः सुब(लुङ्लप)तेः 'चिण् भावकर्मणो'रिति कर्मणश्चिण्यभिहितत्वात् कर्मणि द्वितीया न भवति । प्रातिपदिकार्थमात्रे प्रथमैव । प्रधाने तु कर्मणि आयमित्यत्र द्वितीया भवत्येव । तस्यानभिहितत्वात् । ततोऽयमर्थः । या कान्ता मानाभिमानयुक्तानां जितेन्द्रियाणां चित्तविकारहेतुत्वेन दुःखोत्पादिनी या च मनोनु-

कूलविकलरजोगुणबहुलजनस्य नितरामशर्महेतुः यां च पूर्वमहमेकदा उदार-प्रभुशनायत्तामगमं सा मया मत्सकाशमागच्छेति आहूनेति । इत्यानु-लोम्येन व्याख्याता । तां प्रातिलोम्येन व्याचक्ष्महे । सादिनाम(-य-)मा-यामा इति । या कान्ता आयामा सा दिनामयमायामा नाभि(धी)ता शरदाऽमुया नेति सम्बन्धः । दिनमेवामयो रोगः, तं दिनामयम् । अमुया शरदा अनेन शरत्समयेन हेतुभूतेन (न) नाधीना किं तु अधीतैव प्राप्तैव । किं-विशिष्टा सत्याह आयामा 'अय'गतौ आभिमुख्येन अयते प्राप्यते इत्यर्थः । (.... ?) तथाप्यासनाजनना आसनमासना आसेर्घातोर्भावे युच् । आसनाऽव-स्थानमागमनाभावः तां जनयति आसनाजनना नन्द्यादिपाठा कर्तरि ल्यु । यतस्(स्त)व शोकविरामाय वियोगदुःखापनोदाय न भवति यतश्च मानया मानोऽ(-नम)भिमानमहङ्काराख्यं,यदुक्तमभिमानोऽहङ्कारः, तं यात्यनुसरतीति मानया मानिनी यतः अतो न शोकविरामायेति मानया इति विशेषणमपीदं हेतुत्वेन द्रष्टव्यम् । यथा गुरवो राजमाषा न भक्षणीया गुरुत्वादिति प्रती-यते यथा वा यत्कृतकं तदनित्यमितीद विशेषणमपि कृतकत्वादिति हेतुः तथा मानयेति मानित्वादिति द्रष्टव्यम् । न शोकविरामायेति साध्यनि-र्देशत्वात् (इति?) अलमिति विस्तरेणोक्तोऽयमर्थः । समुदायार्थो व्याख्यायते । यामया मदन्तिकमागच्छेत्याहूता सा अनेन प्रसन्नसलिलाशयसमुत्फुल्लकमल-कुवलयकल्हारहारिवारिणा सत्तच्छदरज पुञ्जपिञ्जरमञ्जुलझङ्कारिकानिरत(?)-झङ्कारिणा व्याधेनेव सन्नद्धवणासनेन जिनपात्रिवचनेनेव प्रबोधितहव्यवन्धु-जीवेन (?) गुणेन्दुनेव प्रसाधितदिगम्बरेण सत्यवाक्येनेवानन्दितविशुद्धपक्षेण शरत्समयेन दिनाभि(भि)धानव्याधिमभिगतवते(त्यै)व, यतो निशि निद्रामुद्रि-तान्तर्बहिष्करणस्य तिरोहितचैतन्यस्य स्वप्नोपलब्धप्रियजनसमागमसुखस्य न तथा विरहव्यथाऽनर्थहेतुः यथाऽह्नीति तथापीयमि(म)तिमनस्विनी प्रकृत्या प्रियतमा न मत्समीपमागमदतो न मे गुरुविरहबाधाविधुरं मनः सुखीभवि-

प्यतीति कश्चिन्मन्मथमथितः सख्ये इदमभ्यधात् । [अथ च सा आदि विधिना ग्रस्ता या एवंभूता ऊना न हीना (न) अधिकेत्यर्थः ।] किंविशिष्टेत्याह मानयमाराविकशा मानो गर्वः तं यातीति मानयः मारः कामः। मानयश्चासौ मारश्चेति मानयमारः, तं अवितुं रक्षितुं कशा चर्मयष्टिः। तुरगप्रहरणविशेषः सा मानयमाराविकशा। पुनरपि किंविशिष्टेत्याह आनजनासना अनन्ति प्राणन्तीत्यान(नाः) जना लोकाः आनाश्च (ते) जनाश्च आनजनाः युवजना इत्यर्थः। प्रकृष्टप्राणत्वात्तेषाम्। असना क्षेपिका उत तानस्यति निरस्यतीति असना विकुर्वाणेत्यर्थ । यामेवंभूतां वयमायाम उ(ना)परमयन्नि(ती)त्ययमनः कर्तरि ल्युट्(ः)। हे अयमन सा अधि(आदि) ग्रस्तेत्यर्थः । उदारशताधीना उदारा उत्कर्षाः तेषां शतेन शतमित्युपलक्षणम्। सहस्रप्रभृति तैरधीना स्वायत्ता ताम्। अयपातामयाम् (अथवा तामयाम्)। अहमगममिति। तदा आयमना आ समन्ततः उपरमणा इति। (यान)मानयमाराविकशा आनजनासना या स्त्री न ऊना न परिहीणा यामुदारशताधीनामुदारशतप्रतिबद्धां आयाम उपगताः स्मः । सा स्त्री आधि(आदि)ग्रस्ता विधिनेत्यर्थात् कश्चिदापद्गतायां बालायामेवमनुशोचेत। कशयाऽभिप्रहरति पीडाकरी यतः (-कर्या। अत)एवेयं वनिताऽपि तरुणा(ण)जनबाधिनी कशात्वेन रूपिता ॥

अस्यैव प्रातिलोम्येन पुनरावृत्तावयमर्थः। अ(आ)यत आगच्छतीत्यायः। आयः प्राप्तः श्रमः खेदः या सा आयामा । अस्यतीत्या(त्य)सना जनप्रतीति(न, न क्षेपिका; न) जनना शोकस्य विरामोपगमः शोकविरामो(मः तस्मै) मानः कोपः तं यातीति मानया कोपवतीति यावत्। अयमर्थः । या स्त्री शोकविरामाय, (क)स्यचिन्ता(न्त्या)सना न क्षेपिका, न जनना कस्याचिदत्यर्थात् सा स्त्री आयामा प्राप्तखेदा । मानया कोपवती। अमुया शरदा अनेन शरत्कालेन दिनामं दिवसव्याधिं न नाधीता न न

गता गतैवेति यावत् । कश्चित् कामी देशान्तरस्थः प्रियासमीपोपगमम-लभमानः शरदमायान्तीं दृष्ट्वा प्रियां संस्मरन्नेवमनुशोचते ॥

अथ च यानं रथमानय प्रापय मा रावि, राविरा(?), मा विषीद इति यावत् । किमर्थमिति चेद्या काऽपि सेना मुदा हर्षेण आर आगता अमुया ऽनया शोकविरामाय दुःखविनाशनार्थं यानमानयेत्यर्थः । सा किं विशि-ष्टेत्याह—कशोना कशा चर्मयष्टिः । तया ऊना परिहीणा । अनेन तुरग-बलरहितेति वक्ति । अस्मत्पक्षे तत्स्वयं (त्वाश्रीयं) भवति । तस्माच्च सा जेतुं शक्या । तथाप्या(आ)नजनासना भीरुजनक्षेपिका आनजनाः प्राणजनाः प्राणरक्षणपरा इति यावत् । तेषां क्षेपिका । या मुदा हर्षेण सिंहनाद कुर्वत्यागता सा शताधीना बहुनायका तस्मादपि च जेतुं शक्या। अस्मत्सैन्ये नायकबहुत्वमपि न ; राक्षसाधिपती रावण एव नायकः । अयं जनोऽपि तस्य आक्षेपवर्ती । अमाया माया नाम कपटव्यापारः । तेन रहिता । सा ह्यस्मास्वस्ति, तेनापि जेतुं शक्या । मा नाम आर प्रापति । अयमना अनुपरमा पुनः पुनरप्यागच्छन्तीति अथवा अयमना यमनो दमनः तेन रहिता एतादृशी चपला नाम स्य(से)ति तस्मादपि च जेतुं शक्या । सा एवंभूता आदि भक्षिता नष्टेत्यर्थः । पुनरपि किंविशिष्टेत्य(त्व) प्रति-लोमार्थो व्याख्यायते । सादिनां पदानां [?] अयमायामा अदम्यमान-बाहुल्या । तस्माद्यानमानयेति सम्बन्धः । [.... ....] एतादृश्यपि कश्चित् कपिसैन्ये छत्रभृङ्गारादिदानेन पूजितो नेत्याह । न मानया माने पूजा तां यातीति मानया न मानया न पूजा प्राप्ता तस्मादपि च जेतुं शक्या। कपिसेनया परिभूतं राक्षससैन्यं दृष्ट्वा मेघनादो ब्रवीति ॥ ७७ ॥

२. श्लोकप्रतिलोमं श्लोकद्वयेन दर्शयति—यानमिति । यानम्,आन-य, मा, रावि, कशा, ऊनानजना, आसना, याम, उदार, शताधीनाम्,

आयामायम, अनादि, सा । यानं रथम्; आनय उपस्थापय; मा रावि मा अभिधायि, माङि उपपदे रुशब्दे इत्यस्मात् कर्मणि लुङ्; कशा–कं सुखं श्यति तनूकरोतीति कशा सुखनाशिनी ; ऊनानजना–अल्पप्रमाणो जनः यस्यां सा , दुर्बलजना इति यावत्; आसना एकाकिका ; यां प्रकृताम् ; उदार दीर्घकालं प्राप्तवानस्मि, ऋ गतौ इत्यस्मात् उत्पूर्वात् लिटि उत्तमपुरुषैकवचनम्; शताधीनाम् अनेकहेत्वधीनाम्; आयामायम्–आयः अर्थायतिः, तस्य आमायं बाधकं, मी हिंसायाम् इत्यस्मात् कर्मण्यण्, क्रियाविशेषणमेतत् ;अनादि अभ्यधायि, नदतेः कर्मणि लुङ् ; सा तच्छब्दः। विजिगीषुः सारथिं प्रत्याह—यानं आनय, कशा ऊनानजना आसना मा रावि, शताधीनां याम् उदार, सा आयामायम् अनादि । इति अनुलोमं दर्शितम् । प्रतिलोमं दर्शयति–**सादिनामिति** । सादिनाम्, अयमायामा, न, अधीता, शरदा, अमुया, न, आसना, जननाशोकविरामायनमानया । सादिनां तुरङ्गारोहिणाम्; अयमायामा—अयमः अनुपरमः, आयामः विस्तारः, यस्यां सा ; नेति प्रतिषेधे ; अधीता कथिता ; शरदा शरत्कालेन ; अमुया अनया ; नेति प्रतिषेधे ; आसना–असु क्षेपणे इत्यस्मात् णिजन्तात् 'ण्यासश्रन्थो युच्' इति युचि, आसना शत्रुक्षेपणा, समरः इति यावत्; जननाशोकविरामायनमानया—जनानां मार्गसञ्चारिजनानाम्, अशोकः अविषादः तदभावः नाशोकः शोक इति यावत्, तस्य जन(-ना-) शोकस्य विरामं अवसानकरं, अयनमानं मार्गप्रमाणं यस्याः तया, पङ्कशोषात् विस्तीर्णमार्गया इति यावत् । अस्यार्थः—जननाशोकविरामायनमानया अमुया शरदा सादिनाम् अयमायामा आसना न न अधीता ; एवंभूता शरत् अस्मान् उद्यं जयति इति भावः ॥ ७७ ॥

**इति यमकचक्रम्।**

---

१. गोमूत्रिकालक्षणमाह—

**वर्णानामेकरूपत्वं यद्येकान्तरमर्धयोः।**
**गोमूत्रिकेति तत् प्राहुर्दुष्करं तद्विदो यथा ॥ ७८ ॥**

वर्णानामक्षराणामेकरूपत्वं यद्येकान्तर[ं] वर्णेन एकेन वर्णा[अ]न्तरितं व्यवहितं जायेत यदि स्यात् भवे। अर्धयोः श्लोकस्य पूर्वार्धपश्चिमार्धयोः तदा गोमूत्रिका सा इति। एवं तं[तद्]यमकमाह [हुः। ] दुष्करं दुर्विरचं तद्विदो दुष्करविदस्सूरयः तदुदाहरन्ति । यथेत्युदाहरणदर्शने ॥ ७८ ॥

२. एवं यमकमप्युपसंहृत्य दुष्करान्तराणि दर्शयिष्यन् गोमूत्रिकालक्षणं तावदाह—**वर्णानामिति**। अर्धयोरुभयोः एकान्तरिताः वर्णाः एकरूपाश्चेत् तदा गोमूत्रिका इति संज्ञा । गोमूत्रवत् गोमूत्रिका, इवार्थे कः। अस्य पूर्वार्धापरार्धयोः पङ्क्तिद्वयेन लिखितयोः, अपरार्धप्रथमवर्णमारभ्य पूर्वार्धाद्वितीयवर्णे द्वितीयार्धतृतीयवर्णे पूर्वार्धचतुर्थवर्णे चेत्येवम् एकान्तरितं पठ्यमाने पूर्वार्धं द्रष्टव्यम्; एवं पूर्वार्धप्रथमवर्णमारभ्य अपरार्धद्वितीयवर्णादौ पठ्यमाने द्वितीयार्धं द्रष्टव्यम् ॥ ७८ ॥

**मदनो मदिराक्षीणामपाङ्गास्त्रं जयेदयम्।**
**मदेनो यदि तत् क्षीणमनङ्गायाञ्जलिं ददे ॥ ७९ ॥**

१. अयं मदनः कामः मदिराक्षीणां विलोललोचनानां अपाङ्गास्त्रं अपाङ्गः कटाक्षनिरीक्षितमेव अस्त्रं आयुधमिव अशेषकामुकजनवश्यतापनयान्मारणात्मकत्वाद्वा यदि जयेत् जेतुं शक्नुयात् मदेनो पत्नात्[मत्पापं]पातकं क्षीणं गतमभवत् । [अपाङ्गास्त्रं जयन् दहेदिति पाठः । तदा अयं मदनः मदिराक्षीणामपाङ्गास्त्रं दहेत् भस्मीकुर्याद्यदि मदनः क्षीणं स ह्यस्मिन् समर्थ एव । जयन्निति सर्वान् स्वीकुर्वन्तु[न्] इत्यर्थः । कुर्वं [अ]स्वीकरणे अपाङ्गदहने का प्रतिपत्तिः] अथ वा मदेनः क्षीणं यद्ययं मदनः

अपाङ्गास्त्रं दहेदिति । किं चैवं यदि स्यात्तदाऽहमनङ्गाय कामाय अञ्जलिं प्रणामं दधे कुर्वे । ददे इति पाठः । तदा ददामीत्यर्थः । कश्चित् कामी कयाचिन्मानिन्या निराकृतः तां कामात् पराजितां कर्तुमिच्छन्निदमाह यदि काम[ः] तस्याः कटाक्षनिरीक्षणं जयेत् । तामनुरक्तां वश्यां कुर्याः [त्] तदाहमेवंविधायात्मद्विपक्षक्षयकारिणे उपकारिणे मदनाय प्रक्षीणदौर्भाग्यदोषसञ्जातपरितोषो ललाटतटघटितकरकमलमुकुलो नमस्कुर्वे ॥ ७९ ॥

२. गोमूत्रिकामुदाहरति–मदन इति । मदेनः मत्पापं क्षीणं यदि मदनः स्मरः मदिराक्षीणाम् अपाङ्गास्त्रं जयेत्–प्रार्थनायां लिङ्–इति अनङ्गाय अञ्जलिं दधे । मां यथा तासाम् अपाङ्गास्त्रं न पीडयेत्, तथा करोत्वित्यर्थः ; ताः मद्वशा भवन्तु इति भावः ॥ ७९ ॥

१. अर्धभ्रमकलक्षणमाह–

**आहुरर्धभ्रमं नाम श्लोकार्धभ्रमणं यदि ।**

श्लोकस्य यद्यर्धेनैव भ्रमणं यदि श्लोकार्धं [श्लोकोऽर्धे] भ्रमति न सर्वतः तदा तमर्धभ्रमण[भ्रम]माहुराचार्याः ॥

१. सर्वतोभद्रलक्षणमाह–

**तदिष्टं सर्वतोभद्रं भ्रमणं यदि सर्वतः ॥ ८० ॥**

यदि सर्वतोऽनुलोमतः प्रतिलोमतस्तिर्यक् च श्लोकस्य भ्रमणं स्यात् तदा सर्वतोभद्रमिष्टं सूरिभिः ॥ ८० ॥

२. अर्धभ्रमकसर्वतोभद्रं लक्षयति–आहुरिति । चतुर्षु पादेषु अधोऽधःपङ्क्तिभिः चतसृभिः लिखितेषु प्रथमवर्णमारभ्य प्रथमपादस्य

चत्वारो वर्णाः अधोमुखं पठ्यन्ते ; द्वितीयवर्णमारभ्य द्वितीयपादस्य, तृतीयवर्णमारभ्य तृतीयपादस्य , चतुर्थवर्णमारभ्य चतुर्थपादस्य च , चत्वारो वर्णाः अधोमुखं पठ्यन्ते । इत्यधोमुखं षोडश वर्णाः पठ्यन्ते । एवं अधस्तनपङ्क्तेः पञ्चमवर्णमारभ्य चतुर्थपादस्य पञ्चमाद्याः चत्वारो वर्णाः ऊर्ध्वं पठ्यन्ते । षष्ठवर्णमारभ्य तृतीयपादस्य पञ्चमाद्याः, सप्तमवर्णमारभ्य द्वितीयपादस्य पञ्चमाद्याः , अष्टमवर्णमारभ्य प्रथमपादस्य पञ्चमाद्याः वर्णाः ऊर्ध्वं पठ्यन्ते । इति ऊर्ध्वमुखं षोडश इत्यर्धभ्रमत्वम् । सर्वतोभ्रमणं यदि तत् सर्वतोभद्रम् । पूर्ववत् चतुर्षु पादेषु क्रमेण चतसृभिः पङ्क्तिभिः लिखितेषु , तेषामेव अधः एष्वेव पादेषु चतुर्षु व्युत्क्रमालिखितेषु , अष्टौ पङ्क्तयः सम्पद्यन्ते । तासु प्रथमपादादयः चत्वारः पादाः यथा आनुलोम्येन पठ्यन्ते तथैव प्रातिलोम्येनापि । तथैव अधोमुख पठ्यन्ते ऊर्ध्वमुख चेति सर्वतोभद्रम् ॥ ८० ॥

१. तत्रार्धभ्रमणं तावदुदाहरति—

**मनोभव तवानीकं नोदयाय न मानिनी ।**
**भयादमेयामामावा वयमेनोमया नत ॥ ८१ ॥**

हे मनोभव चित्तजन्म(न्) मानिनी मानवती या स्त्री सा तवानीकं त्वदीयं सैन्यं सा तव उदयाय विजयाय न न स्यात् स्यादेव । सा च मानिनी त्वत्तो यद्भयं तस्मात् त्वद्भयात् अमेया मातु शक्यो भयः । न मेयः अमेयः आमो रोगो यस्याः सा अमेयामा । अपरिमितो मन्मथव्यथा- भवतु वा माभूद्[ा] [व]यं पुनरेनोमयाः पापमयाः कामार्ताः भवेमैव । नम्यते स्म इति नतः तस्यामन्त्रणम् । [अथ च मनोभव चित्तजन्मन् तव ते अनीकं सैन्यं शशिषट्पदसारसादि तत् न उदयाय न संपदे भवति । देव न मानिनी सा मानवती न च संपदे भवति । भयात् त्वद्भयात् अमेयामा अपरिमितखेदा वयमाहोस्वित् माया [मा वा] खेदराहता वयम् । तत्र किं

तव । वयमेनोमयाः पापमयाः तथाऽपि ते न युक्तम् । दिवा दृष्टे श्वभ्रे रत्न-(तव) कः पतति । नत [न ते] पुराऽपि मानभङ्गो युक्तः । एवमनुश्रूयते । एकदा [मनोभवः] कमपि तपस्यन्तं तपस्विन[स्विनं प्रति] निजशरैः पीडा-मकृत । सोऽपि तं शशाप त्वमनङ्गो भवेति । पुनः पुरन्दरनियोगात् पार्वतीसक्तचित्तं भगवन्तं चिकीर्षु हिमवन्तमागतः तन्नयनाग्निना दग्धः । ततो रतिप्रार्थनया अनङ्ग एव लोकान् पीडयितुं समर्थ इति ॥ ८१ ॥

२. अर्धभ्रममुदाहरति — मनोभवेति । नत निकृष्ट, मनोभव स्मर, तव अनीकं सेनाभूता मानिनी, न न उदयाय जयत्येव मत्पीडनात् एनोमया वयं तद्भयात् अमेयामामावाः—अमेयस्य आमस्य रोगस्य आमा-वः बन्धो येषां ते, मव बन्धने इत्यस्मात् आङ्पूर्वात् घञ्—भवामः इति शेषः । तां मद्वशां कुरु इत्यभिप्रायः ॥ ८१ ॥

१. सर्वतोभद्रमुदाहरति—

**सामायामा माया मासा मारानायायाना रामा ।**
**यानावारारावानाया मायारामा मारायामा ॥ ८२ ॥**

सा रामा आमायामा[-मा] । आमो व्याधिः आम इव आमः विरह-दुःख तस्या याऽऽयामो दैर्घ्यं महत्त्वमायामः त[-म]मतिगच्छत्यनुभवतीति आमायामा [-मा] । अम गत्यादिषु तस्य पचाद्यच् इत्यचि स्त्रियां टाप् । या मासा माश्चन्द्रः तेन मासा चन्द्रमसा मारः स्मरस्तस्यानाया आनायो जल, 'जालमानाय' इति निपातनात् । आनाय इमा(वा)नायः । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येत्यानायशब्दः घञ्[-न्तस्य] 'घञन्त'इति पुंसि प्रसिद्धस्यापि स्त्रीलिङ्गत्वमुन्नेयम् । तेन मदनधीवरस्य कामुकजन-मत्स्यस्य ब(-न्धब-)न्धनोपायभूता इत्यर्थः । यानं गमनं वियोगः तदा (दु अ)रामः दुःखहेतुत्वात् अरमतीयं (अरतिमयं) यस्याः सा यानारामा

यानावारा यानमायानमागमनं आ(अ)वारः आ(अ)वार्यः [अ]प्रतिषेधो यस्याः सा यानावारा अनिषेध्यागमना या ; तदागमनस्य सुखहेतुत्वेन कामिभिरभीष्टत्वात् । या च आरावाना आरावः शब्दः स वानं [अनः] प्राणो यः स[यत्स-]म्बन्धी [शब्दः प्राणः] प्राणा न [प्राणिना] मित्यनेन या मधुरभाषिणीत्युक्तम् । अयः पुण्यं तदस्य अस्तीति अया । अर्शआदिपाठान्मत्वर्थीयोऽच् । पुण्यवतीत्यर्थः । अविद्यमाना[न]माया शाठ्यवर्जिता साध्वी या सा रामा कान्ता मरणं मारः तस्मै माराय मृतये अमा सह । उक्तोऽवयवार्थः समुदायार्थः कथ्यते । या विरहरोगदुःखदैर्घ्यमनुभवति या च मदनधीवरस्य कामुकस्य[-मत्स्य]बन्धजालं यस्याश्च गमनमरम्यं कामिनां, यद्विरहो दुःसह इत्यर्थः । यस्याश्चागमन[म]प्रतिषेद्यं [ध्य] यस्याश्च कोकिलाया इव कलमालपितं प्राणः प्राणिनां या च पुण्यपरमाणुनिचयरचिततनुः या च शाठ्यदोषेण न दूषिता न क्षीणा प्रकृत्या [मा] रामा चन्द्रमेकं सहायमवाप्य कामिनां मरणाय कल्पत इति ।

[अथ च सा, या मायारामा अ[आ]र मासा अमा माराय भवतीति वाक्यार्थः । पदार्थो वर्ण्यते । आमायामा विरहपीडितेत्यर्थः । अमाय[या] न मायावस्तुरि[स्त्वि]ति बुद्धिमापन्ना । सा मायाप्यमायेति प्रतीतिगोचरा । केन सह माराय भवतीत्याशङ्क्य मासा चन्द्रमसा । मारानाया कामवागुरु[रा]भूना । यानारामा यानं गमनं आराममु[?]द्यानं या सा यानारामा जङ्गमोद्यानमित्यर्थः । रमणीयत्वाद् यानावा यानं गमन [नं] [आ]वात्यागच्छतीति यानावा । स्वयं कर्तृ रतिश्रान्तेत्यर्थः(?) आर प्राप । आरावाना आरावः शब्दः तेन सार्धमा(म)नः प्राणो यस्याः सा आरावाना सार्धं (सशब्द) निःश्वाससंयुक्तेत्यर्थः । रतिकालनिष्पन्नत्वा[द्] । या न एवंभूता एवंविशेषणविशिष्टा मायारामा स्वप्ने दृष्टा स्त्री सा माराय कामाय अमा सह भवतीत्यर्थात् कश्चित् प्रियावियुक्तः कामी स्वप्ने प्रियामुपलभ्य पुनर्बुध्वा एवमनुशोचते ।

अपि च या आमायामा दीर्घखेदा मारानायायाना मन्मथवागुराभूतगमना यानावारा गमन[ना?]वारणा अरावा अवचना अनाया अविद्यमानागमना अ(?)माया राना सा रामा सा स्त्री मासा चन्द्रेण सार्धं मम माराय मरणाय भवति ॥ ८२ ॥

२. सर्वतोभद्रमुदाहरति--सेति । सा, अमायामा, मायाः, मासा, मारानायायाना, रामा, यानावारारावानाया, मायारामा, माराय, अमा । सा प्रकृता ; अमायामा—अमम् अमितम्, आयम् अर्थम्, अमति प्राप्नोतीति, अमतः पचाद्यच् ; मायाः लक्ष्म्याः ; मासा चन्द्रेण ; मारानायायाना—मारं स्मरम् ; आनयतीति मारानायम्, मारानायम् आयानम् आगमनं यस्याः सा ; रामा रमणीया ; यानावारारावानाया—यानं पादम् आवृणोतीति यानावारः नूपुरं, तस्य आरावः शब्दः, स एव आनायः जालकं यस्याः सा, हृदयहारिनूपुरशब्दा इति यावत् ; मायारामा आश्चर्यरूपा स्त्री ; माराय मरणाय ; अमा सह । अमायामा, मायाः रामा, मारानायायाना, यानावारारावानाया सा मायारामा, मासा अमा माराय भवति ; इति विग्रहिणो वचनम् । एतत् अनुष्टुभि प्रथमवृत्तं विद्युन्माला नाम ॥ ८२ ॥

१. इति यमकलक्षणमभिधाय सम्प्रति स्वरस्थानवर्णनियममाह—

**यः स्वरस्थानवर्णानां नियमो दुष्करेष्वसौ।**
**इष्टश्चतुष्प्रभृत्येषु दर्श्यते सुकरः परः ॥ ८३ ॥**

स्वरा अकारादय औकारपर्यन्ताः ह्रस्वदीर्घप्लुतोदात्तानुदात्तस्वरितसानुनासिकाननुनासिकभेदभिन्नाः स्थानान्युरःकण्ठशिरोजिह्वामूलतालुदन्तोष्ठनासिकाभिधानानि । वर्णाः कादयो हकारपर्यन्ताः त्रयस्त्रिंशत्। यद्यपि स्वरा अपि वर्णाः तथाऽपि पृथक्स्वरशब्दोपादानादिह वर्णशब्दो

गोवलीवर्दवत् ककारादिषु वर्तते । न पुनरकारादिष्विति । स्वराश्च स्थानानि च वर्णाश्चेति द्वन्द्वः । तेषां नियमोऽवधारणं दुष्करेषु य इष्टः अभिमतः स एव[ष] चतुष्प्रभृति चतुरवधि अवाङ्[प्रभृति]शब्दोऽयं मर्यादायां वर्तते । न चतुर्भ्यः स्वरस्थानवर्णेभ्यः प्रदर्श्यते उदाह्रियते अस्माभिः अतःपरं पञ्चषडादि सुकरं ततो न प्रदर्श्यत इत्यर्थ ॥ ८३ ॥

२. दुष्करान्तरलक्षणमाह—य इति । चतुष्प्रभृतीनि शब्दः अधोमुखप्रवृत्तः । तेन, चतुस्स्वरः, त्रिस्वरः, द्विस्वरः, एकस्वरः ; इति स्वरनियमः ; चतुस्स्थानः, त्रिस्थानः, द्विस्थानः, एकस्थानः, इति स्थाननियमः ; चतुर्व्यञ्जनः, त्रिव्यञ्जनः, द्विव्यञ्जनः, एकव्यञ्जनः इति वर्णनियमः ॥ ८३ ॥

१. तत्र स्वरनियमे चतुर्थ(चतुः)स्वरमाह—

**आम्नायानामाहान्त्या वाग्गीतीरीतीः प्रीतीर्भीतीः।**
**भोगो रोगो मोदो मोहो ध्येयेवेच्छेद्देशे क्षेमे ॥ ८४ ॥**

आम्नायानां ऋग्यजुःसामाथर्वणां वेदानामन्त्या वागुपनिषदाह ब्रवीति । किं तदित्याह ईतीः दैवीः पीडाः अग्न्युदकमरुद्व्यामाधि[-व्याधि]दुर्भिक्षमकरव्यालशलभमूषिकरक्षांसि तथा गीतीः गानं वेदान्तशास्त्राणि (?)भीतीः भयानि पशुमृगपक्षिसरीसृपस्थावरराजतस्करारातिभ्यः उत्पन्नानि । प्रीतिः [तीः]सुखौघ[नि ऐ]कान्तिकात्यन्तिकक्षयातिशययुक्ताः[नि] यद्वा [आम्नायानामन्त्या वाक्] गीतिस्तुतिरीतीरुपसादिवः [गीतीः स्तुतीः रीतीः उपसर्गान्] प्रीतिवि[तीर्वि] षयः[य]सुखानि सांसारिकाणीति भयानि संसारहेतुत्वादाह । तथा भोगो विषयानुभवः स्त्रीसङ्गादि[ः] स रोगो व्याधिरित्याह । मोदो हर्षः संमोहो मदिराजनितो विकार इत्याह । इच्छेन् ध्येये ध्यातव्ये क्षेमे देशे मोक्षे वा व[ा]शब्द एवकारोवधारणे वर्तते । इच्छे देवेति द्वे द्वे इति च

पाठान्तरम् । तस्यायमर्थः इच्छेद्द्वे गीतिः प्रीतिरिति द्वे इच्छे ध्येये धारणीये। अपरे द्वे त्यान्ये(ज्ये) भीति(: ईति-) रिति । वेदान्तवादी कश्चिदेवं शिष्याननुशास्ति ॥ ८४ ॥

२. तत्र चतुस्स्वरमुदाहरति—आम्नायानामिति । आम्नायानामन्त्या वाक् वेदान्तभागः; गीतीः ईतीः आह, प्रीतीः भीतीः आह ; भोगो रोग इति मोदो मोह इति च आह ; इतिरध्याहर्तव्यः ; अतः क्षेमे मोक्षहेतुभूते , ईदेशे —ई लक्ष्मीः, तस्याः देशे—श्रीनिवासे, इच्छा धेया निधेया ; इव एवार्थे । गीत्यादयः संसारसुखहेतवो हेयाः ; अतो मोक्षप्रदे भगवति स्पृहा कर्तव्या इत्यर्थः ॥ ८४ ॥

१. त्रिस्वरमुदाहरति—

**क्षितिविजितिस्थितिविहितिव्रतरतयः परमतयः ।**
**उरु रुरुधुर्गुरु दुधुवुर्युधि कुरवः स्वमरिकुलम् ॥ ८५ ॥**

क्षितिः मही तस्या विजितिः विजयः स्थितिरवस्थानं विहितिः विधानं क्षितिविजितिश्च स्थितिश्च विहितिश्चेति द्वन्द्वः । त एव व्रतमवश्यकर्तव्यत्वात् अपरित्याज्यत्वाच्च । तत्र रतिरास्था येषां ते क्षितिविजितिस्थितिविहितिव्रतरतयः । परोत्कृष्टा गतिश्चेष्टा येषां ते परगतयः कुरवो दुर्योधनादयः स्वमरिकुलं निजं रिपुसमूहं उरु महत् रुरुधुः रुवी(तीक्ष्णा?) ध(श)रासारवर्षेणा(र्षेणा) वृतवन्तः । तथा गुरु यथा भवत्येवं दुधुवुः कम्पितवन्तः । युधि संग्रामे ॥ ८५ ॥

२. त्रिस्वरोदाहरणमाह—क्षितीति । भूविजयस्थितिनिर्माणात्मकव्रतपराः परमतयः कुरवः स्वम् आत्मीयम् उरु अरिकुलं गुरु रुरुधुः, गाढं रुद्धवन्तः ; दुधुवुः कम्पितवन्तश्च ॥ ८५ ॥

१. द्विस्वरमुदाहरति—

श्रीदीप्ती ह्रीकीर्ती धीनीती गीःप्रीती ।
एधेते द्वे द्वे ते ये नेमे देवेशे ॥ ८६ ॥

श्रीश्च दीप्तिश्च, ह्रीश्च कीर्तिश्च, धीश्च नीतिश्च, गीश्च प्रीतिश्चेति द्वन्द्वः। पदार्थस्तु प्रसिद्ध एव। एधेते इमे ; द्वे द्वे इति वीप्सायां द्विर्वचनम् । ते तव । यस्तः त (यतः) इमे द्वे द्वे श्रीः कीर्तिरित्यादिके न(-ञ्) प्रतिषेधे। न विद्यते देवदानवानामीशो विष्णुः तस्मिन्नपि । तवैवैकस्य नान्यस्य नृपतेः तत इत्यर्थः ॥ ८६ ॥

२. द्विस्वरमुदाहरति—श्रीति। श्रीदीप्त्यादयः गुणाः तव द्वे द्वे एधेते, ये इमे गुणाः देवेशे इन्द्रेऽपि न सन्ति। इदं गायत्रीच्छन्दसि प्रथमवृत्तम् ॥ ८६ ॥

सामायामा माया मासा मारानायायाना रामा ।
यानावारारावानाया मायारामा मारायामा ॥ ८७ ॥

१. एकस्वरस्योदाहरणं सर्वतोभद्रम्। तच्च व्याख्यातमेव॥ ८७॥

२. एकस्वरोदाहरणं दत्तमेवेत्याह—सेति ॥ ८७ ॥

१. स्वरनियममुदाहृत्य स्थाननियममुदाहरति—

नयनानन्दजनने नक्षत्रगणशालिनि ।
अघने गगने दृष्टिरङ्गने दीयतां सकृत् ॥ ८८ ॥

हे अङ्गने गगने दृष्टिर्दीयताम्। सकृदेकवारम्। किंविशिष्टे नयने (गगने) नयनयोरानन्दं प्रीतिं जनयतीति तन्नयनानन्दजननम् । तस्मिन् नयनानन्दजनने। नक्षत्राणां गणः तेन शालते विराजते एवंशाली नक्षत्र-

गणशाली । अविद्यमानो घनो यस्मिन् तदघनम् तस्मिन् । कश्चित् शरत्समये निर्मलं नभस्स्थलमवलोकयितुं निशि कान्तां प्रेरयति । अकुहाः कण्ठ्या इति इचुयशास्तालव्या इति ऋटुरषा मूर्धन्या इति लृतुलसा दन्त्या इति चतुस्स्थानमेतत् । अतिरिक्तस्थानवर्णाभावात् ॥ ८८ ॥

२. दन्त्यतालव्यकण्ठ्यमूर्धन्यैश्चतुस्स्थानोदाहरणमाह—**नयनेति** । शरदं वर्णयति । स्पष्टोऽर्थः ॥ ८८ ॥

१. त्रिस्थानमुदाहरति —

**अलिनीलालकलतं कं न हन्ति घनस्तनि ।**
**आननं नलिनच्छायनयनं शशिकान्ति ते ॥ ८९ ॥**

हे घनस्तनि तवाननं मुखं कं कामिनं न हन्ति न खेदयति । किंविशिष्टमाननं अलिनीलालकलतं अलिरिव नीलाऽलकलता धम्मिल्ल(वल्ल)री यस्मिन् तदलिनीलालकलतम् । नलिनं पद्मं तच्छाये पद्मसदृशे नयने यत्र नलिनच्छायं(य) नलि(य)नं शशिकान्ति शशिनश्चन्द्रमस इव कान्तिः यत्र तदिति कण्ठ्यतालव्यदन्त्यस्थानवर्णात्मकं तदपरस्थानाक्षराभावात् ॥ ८९ ॥

२. कण्ठ्यदन्त्यतालव्यैः त्रिस्थानोदाहरणमाह—**अलीति** । दयितायाः चाटु करोति ॥ ८९ ॥

१. द्विस्थानमाह-

**अनङ्गलंघनालग्ननानातङ्का सदङ्गना ।**
**सदानघ सदानन्द नताङ्गासङ्गसङ्गत ॥ ९० ॥**

अनङ्गः कामः तस्य लङ्घनमतिक्रमः । तेन आलग्नसम्बन्धो(-बद्धो) नानातङ्को व्याधिर्विरहज्वरो यस्याः सा अनङ्गलङ्घनालग्ननानातङ्का सती शोभना वा (चा)सावङ्गना सदङ्गना । सदा अनघा(घ) निष्पापा(प) सदा-

नन्द(सदा) आनन्दं(दः) सुखं यस्य । ननमङ्गं येषां ते नघाङ्ग(ताङ्गाः) अस्तब्धाऽपि न ताः (अस्तब्धा विनताः) तैरासङ्गस्सख्यं यस्यासौ नताङ्गा-सङ्गस्तस्यामन्त्रणम् । हे सदानन्दिन् नताङ्गासङ्गसङ्गत सखे सा सदङ्गना अनङ्गलङ्घनालग्ननानातङ्का वर्तते । इति कश्चन युवानं प्रियायामेवानति-(ती)कर्तुं सखी काचिदेवमुक्तवती । कण्ठ्यदन्त्यस्थानद्वयवर्णातिरिक्तवर्णा-भावात् द्विस्थानमेतदिति ॥ ९० ॥

२. कण्ठ्यदन्त्याभ्यां द्विस्थानमुदाहरति अनङ्गेति । सदा अनघ सुकृतिन्, सतः आनन्दयतीति सदानन्दः तस्य सम्बोधनम्—सदानन्द, नताङ्ग प्रश्रयनम्र, असङ्गसङ्गत अस्खलितसौहार्द, सदङ्गना तरुणी, अनङ्ग-लङ्घनालग्ननानातङ्का स्मराभिभवसञ्जातबहुलसन्तापा भवति ॥ ९० ॥

१. एकस्थानमुदाहरति—

**अगा गाङ्गाङ्गकाकाकगाहकाघककाकहा ।**
**अहाहाङ्कखगाङ्कागकङ्कागखगकाकक: ॥ ९१ ॥**

अङ्ग (अगाः) गतवानसि त्वं स्वर्गम् । गङ्गाया इदं गाङ्गं तच्च तत् कं च गाङ्गमुदकं तस्याकः कौटिल्यं तमकतीत्याकः गाङ्गकाकस्याकश्च कुटिलगतिः प्रवाहः तस्या(स्य) गाहको विलोडकः तस्यामन्त्रणं गाङ्गका-का(क)गाहक । अघं पापं अघमेवाघकं तदेव काको गृहबलिभुक् तं हतवान् अघककाकहा । शिष्टप्रयोगदर्शनादिह क्विप् । [हा] हानं हान-(निः) हानिर्नास्तीत्याह (त्यहा) तां जिहीते गच्छतीत्यहाहा(हं) अहाहानि (यानि) तान्यङ्गानि येषां ते अहाहाङ्गाः ते च ते खगाश्च अहाहाङ्गखगाः सौवर्णा ये(?) ते अङ्को लाञ्छनं येषां ते अहाहाङ्कखगाङ्काः । ते च ते अगाश्च मेर्वादयः पर्वतास्तेषु अहाहाङ्कखगाङ्कागेषु मेर्वादिदेवगिरिषु कङ्काश्च ते अगखगाश्च पर्वतपक्षिणः कुरराः काकक....शब्दो यस्यासावहाहाङ्कखगा-

ङ्कागकंकागखगकाकक । हे गाङ्गजलकुटिलप्रवाहाव(व)गाहक पापवायस-ध्वंसक सौवर्णेय(?) पक्षिपरिक्षितमेरुगिरिगुहान्तपर्यन्तविश्रान्तानन्तकीर्तिप्रसमे [-र हे]महाप्रभाव त्वं स्वर्गं गतवानसीति कश्चिच्छ्लोकं भावयति ।

वयं पुनरित्थं व्याचक्ष्महे—

गङ्गाया इदं गाङ्गम् । तच्च तत् कं च तदक्ति(-कति) प्रविशतीति गाङ्गकक(काका) । पचाद्यच् । यमुना तस्याः अकः प्रवाहः तस्या गाहको विलोडकः कैटभारिः । स किल मातुलकंसासुरादेशात् काल(?) कालियदमनार्थं मथुरायां कालिन्दीजलं बाहुभ्यां आलोडितवान् । तस्यामन्त्रणं हे गाङ्गकाकाकगाहक । अघं पापं तदस्यास्तीति अघः अघ एव अघकः । स चासौ काकश्च वायसदानवः । तं हतवानित्यघककाकहा स किल बालभावमुद्वहन् कंसासुरप्रेषितं काकदानवमुत्पाटितचञ्चूपुटं झटिति हतवानिति । अहाहाङ्गखगो गरुडः अङ्कः चिह्नं यस्यासौ अहाहङ्गखगाङ्को गरुडध्वजः । अग इव अगो गिरि(रि)वाप्रकम्प्यधैर्यगुणसम्पन्नः कमुदकं अङ्को येषां ते काङ्के (ङ्काः) जलनिधयः । नन्वकःसवर्णे दीर्घत्वं कस्मान्न भवति । शकन्ध्वादिषु पाठात् पररूपम् । अगाः पर्वताः मेरुगिर्यादयः । खमाकाशंका[क]ङ्काश्चागाश्च खं चेति द्वन्द्वः । तानि गच्छन्तीति का(क] ङ्कागखगाः । काककश्शब्दो या सा अस्ति (शब्दाः यशांसि)यस्यासौ कां[कं]कागखगकाकक । असाधारणविशेषणोपादानादेव हरिरुच्यते । हे कालिन्दीजलप्रवाहावगाहक काकदानवविध्वंसक गरुडध्वज मेरुपर्वतवदप्रकम्प्य जलनिधिकुलाचलनभस्थलव्यापियशःप्रसर हे हरे स्वर्गं गतोऽसि इति केनापि विशोच्यते ।

अथ च कमुदकं रस्यति ककः [?]। कुटिलता आककः । ईषदाककः काककः गङ्गाया अयं गाङ्गः गाङ्गश्चासौ काकश्च गाङ्गकाककः । तस्य गाहकः गाङ्गकाकगाहकः । अघमेव अघकः । कुत्सायां कन् तदेव

काकः अघककाकः। तं हन्तीत्यघककाकहा ओहाङ् गतौ हा (गतिः) तां गातीति(न जहातीति) अहाहं भ्रमत् अङ्गं रथाङ्गं यस्य स तथोक्तः। खगा आदित्यः। अहाहाङ्गश्चासौ खगश्च अहाहाङ्गखगः। सोऽङ्कश्चिह्नं यस्य स तथोक्तः। अहाहाङ्गखगाङ्कश्चासौ अगश्च अहाहाङ्गखगाङ्कागः मेरुरिति यावत्। कङ्को नाम कश्चित्। तत्रागे स्थितः कङ्कः। अहाहाङ्गखगाङ्कागकङ्कः; पर्वतः तस्या-(अगस्य पर्वतस्या)यमागः। आगश्चासौ खगश्चागखगः। पर्वतः तथा (पर्वतस्थः) पक्षीति यावत्। तस्मिन् काकं लौल्यं यस्य तथोक्तः। 'शेषाद्विभाषे'ति कप्रत्ययः। अयमर्थः। हे गाङ्ग काकाकगाहक अघककाकहा अहहाङ्गखगाङ्कागकंकागखगकाकक त्वं गामगा वचनं अबुद्धाः। गाङ्गकाकाकगाह यं वल्लभा क (-गाहक हे वल्लभ) इत्यनेन गङ्गास्नायित्वमुक्तम्। अघककाकहा इत्यनेन पुण्यक्रियारतिरुक्ता। अहाहाङ्गेत्यादिना तादवस्थ्यं कथितम्। काचिदप्सरा एवं स्वाभिप्रायं वल्लभं निवेदयितुं वक्ति।

अथ च हे काकक वायसापशद गां स्वर्गं अगा गतवानसि। कथमिति गङ्गाया इदं गाङ्गं कं जलं गाङ्गकं तस्याकाकमापात्विन्त(-मावर्तस्त)स्मिन् गाहको विलोडकस्तस्य आमन्त्रणं गाङ्गकाकाकगाहकेति। त्वं प्रतिपक्षवायसमहत्वान्मृ(-त्वा मृ-)तोऽहमिति माशुचः। त्वमघककाकहा अघं पापं अघ एवाघकः अघकाख्यं काकं वायसं हतवानसि अघककाकहा पापवायसनाशकः तथा चेदहमेवाशोच्यः बन्धुभिः शोचितुमर्हामीति चेन्न। अहहाङ्ग हाहाङ्गरहित धिक् धिगित्यङ्गरहित कथं तदिति खगाङ्कागकङ्कागखग खगाः पक्षिणो हंसाः, खगशब्दः पक्षिसामान्यवाच्यपि हंसे वर्तते। कथमिति तथा चोक्तं—'सामान्यवाचिनः शब्दा भवन्ति श्रेष्ठगामिनः। वैद्यराङ्कजसामान्ये भिषक्पद्मपरिग्रहा'दिति। खगाः अङ्कश्चिह्नं येषां ते

खगाङ्काः हंसयुक्ताः इत्यर्थः । अगा वृक्षाः पारिजातादयः तत्रापि पूर्ववदगशब्दो मुख्ये वर्तते । कङ्का नाम केचित् कनकमया भूषणविशेषाः मुकुलोन्मीलकाख्याः ता गच्छन्तीति अह(ग)कङ्कागाः खगाः विमानानि खगाङ्का(अ)गकङ्कागखगा यस्य स खगाङ्कागकङ्कागखगः तस्यामन्त्रणम् । अयमर्थः । गङ्गाजलावर्तगाहक पापवायसध्वंसक केनाप्यशोच्यहंसवाह्यमानपारिजातादिविचित्रभूषणसंयुक्तविमानयान वायसापशद त्वं स्वर्गं गतवानसि । कश्चिन्मांसपिण्डार्थं जातवैरयोः वायसयोः गगनस्थितयोः कलहायमानयोस्तयोः कश्चित्(?) गङ्गाजले पतित्वा मृतः । तामवस्थां दृष्ट्वा गङ्गामाहात्म्यं वक्ति । इदमेकस्थानाक्षरवर्ण(-स्थानाकारहकारकवर्ग) विसर्जनीयैरिय(?)न्निष्पन्नत्वादकुहाविसर्जनीयाः कण्ठ्या इति (एकस्थानम्) ॥ ९१ ॥

कण्ठ्यैकस्थानमुदाहरति—अगाः इति । अगाः गमिष्यसि, 'इणो गा लुङि' इति गादेशः, 'आशंसायां भूतवच्च' इति भविष्यति लुङ् ; गां स्वर्गं गाङ्गकाकाकगाहक—कस्य जलस्य आकः प्रवाहः, अक कुटिलायां गतौ इत्यस्मात् घञ्, का ईषदर्थे, ईषद्भूतो जलप्रवाहः काकाकः, गङ्गासम्बन्धिनः काकाकस्य गाहक, गङ्गास्नायिन् इति यावत्; अघककाकहा—अघकं कुत्सितं अघं, तदेव मालिन्यात् काकतया रूपितम्, तं हतवान् अघककाकहा ; अहाहाङ्गखगाङ्कागकङ्कागखगकाकक:— हाः गतिः, तं जहाति त्यजतीति हाहं, तदन्यत् अहाहम्, 'आतोऽनुपसर्गे कः', अहाहाङ्गः गतिशीलः, खगः सूर्यः अङ्के पार्श्वे यस्य गिरेः, तस्मिन् अगे मेरौ, कङ्कानां चलानां—ककि लौल्ये, पचाद्यच्—अगानां वृक्षाणां सम्बन्धिनः, ये खगाः पक्षिणः, तेषां काककः चालयिता—कक लौल्ये इत्यस्मात् ण्वुल् ; हे गङ्गास्नायिन् हतपाप, स्वर्गगमनमार्गस्थितमेरुवृक्षपक्षिचलनकारः अगाः स्वर्गं गमिष्यसि इत्यर्थः ॥ ९१ ॥

१ .तदेवं स्थाननियममभिधाय वर्णनियममुदाहरति—

रे रे रोरुरुरूरोरुगागोगोऽगाङ्गगोऽगगुः ।
किं केकाकाकुकः काकोऽमा मामामाम मा मम ॥ ९२ ॥

रे रे रोरुरुरूरोरुगागोग इत्यधिक्षेपे सम्बोधनम्, अत्यर्थं रौतीति रोरुः स चासौ रुरुश्च मृगस्तस्योरो हृदयं रुक् पीडा सैवागः अपराधः तं गच्छतीति रोरुरुरूरोरुगागोगः तस्यामन्त्रणम् । अगाः तरवः तेषामङ्गानि पत्रपुष्पफलवल्कलानि तानि (गच्छतीत्यगाङ्गगः) । (न) गच्छन्तीगङ्गाभः (-त्यगाः । अगाः) गावो धेनवोऽनड्वाहश्च यस्यासावगगुः । गोपालकः । किमित्येतत् क्षेपे । केका काकुः केकाशब्दो यस्यासौ केकाकाकुकः मयूरः स किं काको वायसोऽपि तु न भवति । किं तु केकाका(?)काकुकः काको ननु(?) मामा इत्यधिके निषेधे । वयममाम पादागमां मामन् (अवागमाम । आमं) मनःखेदमामयते प्रतिद्ददाति यः तस्य सम्बोधनम् । हे रुरुमृगहृदयहननापराधभाक् तरुवल्कनधारिन् तत्फलपुष्पाशिन् गोपालक मयूर(·) केकापराश्री (प्रगादी) । स किं काक इति । सम्भवात् (न भवान्) काकमयूरयोः विशेषं वेद । अत एव न वयमेवंविधं सम्बन्धं कदाऽप्यमामावधारयाम (-यापि अमाम अवाधारयाम)म(-म)दु खकारिन् असम्बन्धाभिधायक इति कश्चित् गोपालकः केनापि मयूरं कामं(कं) अभिदधानो निषिद्धयते ।

(अथ कल्पनानन्तरम्) रे रे इत्यधिक्षेपे । तस्य किं करणमित्यत्रोच्यते रोरुरुरूरोरुगागोगति । रोरुश्च रुरुश्चेति द्वन्द्वः(?)रोरुः रोरूयमाणःव्यापनक्रियां कुर्वाण इत्यर्थः । रुरुः मृगः तस्योरोरु(क्. उ)रो प(व)क्षः तस्य रुक् पीडा मरणमिति यावत् । स एव आगः पापं तं गच्छतीति रोरुरुरूरोरुगागोग मृगमिथुनहननपापग इत्युक्त्वा शापं ददाति अगाङ्ग गमनरहिताङ्ग गमन-

मिति मैथुनं तेन वियुक्तावयव भवान् स्त्रियं गच्छति चेत् मृतो भवेदित्यर्थः । एतत्तवायुक्तम् । कथं गोगगुः गौरिति दिक् । तां गच्छतीति गोगः गौश्शब्दः कीर्तिर्यस्य स गोगगुः तस्मात्तवायुक्तमेव तत् । अथ वा एतत्सर्वमिदानीं व्याधमित्यवगन्तव्यम् । मया खल्वज्ञानेन त्वेतत्कृतमित्युक्ते पुनः सकोपो ब्रवीति । किमिति क्षेपे । केका मयूरध्वनिः तस्याः काकुको निन्दकः । काको वायसः भवान् धर्ममनुशास्तीत्यर्थः । मामेत्यन्तं प्रतिषेधे । मा मामित्यर्थः । अम निःश्रीक । अयं पापविशेषः । पुनरपि शपति अमम ममत्वरहितो भवेत्यर्थः । तदेव न आममदुःखभाक् च भवेत्यर्थः । पाण्डोमृगयाङ्गत्वे (पाण्डुना मृगयां गतेन) मृगाकारमुनिमिथुनस्य (अ)ज्ञानतो भग्ने सति कुपितो मुनिराह ॥

२. चतुर्व्यञ्जनमुदाहरति—रे रे इति । कश्चित् व्याधः स्वमनाहूय मृगयाक्रीडां कृतवन्तं सखायं गर्हति । रे रे, रोरुरुरुरोरुक्, आगोगः, अगाङ्गगः, अगगुः, किं, केकाकाकुकः, काकः, अमा, माम्, आमाम, मा, मम । रे रे सम्बोधनम्; रोरुरुरुरोरुक्; रोरुवः भृशं शब्दायमानस्य रु शब्दे इत्यस्मात् यङ्लुकि रोरुः, 'अन्येभ्योऽपि दृश्यते' इति क्विप्, रुरोः हारिणस्य उरः वक्षः रुजतीति रोरुरुरुरोरुक्; आगोगः अपराधगामी, गाङ् गतौ इत्यस्मात् 'आतोऽनुपसर्गे कः'; अगाङ्गगः—अगस्य पर्वतस्य अङ्गं सानुं गच्छतीति अगाङ्गगः; अगगुः—अगा अप्राप्ता गौः वाणी यस्य सः; किं क्षेपे; केकाकाकुकः केकाप्रकारशब्दः; काकः; अमा समीपे। मां मां; आमाम—आमं खेदम् अमति गच्छति यः, तस्य सम्बोधनम्; मा प्रतिषेधे; मम मे । रे रे अगगुः अगाङ्गगः रोरुरुरुरोरुक् मम आगोगोऽसि; काकः किं केकाकाकुकः? आमाम माम् अमा मा; भवेति वाक्यशेषः ॥ ९२ ॥

१. त्रिवर्णमुदाहरति—

देवानां नन्दनो देवो नोदनो वेद(देव)निन्दिनाम्।
दिवं दुदाव नादेन दाने दानवनन्दिनः ॥ ९३ ॥

देवानामिन्द्रादीनां नन्दनः समृद्धिजननः देवानामिति कर्मणि षष्ठी नन्दन इति कर्तरि ल्युः। देवो दामोदरः नोदनो निरसनः। वेदं निन्दयतः तस्य वेदनिन्दिनो वेदविद्वेषिणः दिवं गगनं दुदाव। उद्वेजितवान्। नादेन सिंहगर्जितेन। कदा। दादे(ने) विदारणे। त(क)स्य दानवनन्दिनः दानवान् नन्दयतीति दानवनन्दी तस्य दैत्याधिपतेः हिरण्यकशिपोरिति। एवमनुश्रूयते। पुरा किल सर्वं विष्णुमयं जगदिति हिरण्यकशिपुनन्दनेन सन्ध्यावनानन्द(-वन्दन)वेलायामभिहित(तो) हरिस्तवामर्षितो दैत्याधिपतिः पार्श्वस्थस्तम्भं भुजेनाजघान। ततः स्तम्भात् सिंहरूपमुद्वहन् हरिराविर्बभूव सन्ध्यासमय एव जानुनोरुपरि दितिसुतमुपनिधाय खरतरनखरप्रकरविदारितोरःस्थलमभितः परिकीर्णान्त्रयन्त्रं विदारयांचकार। सिंहनादपरित्रस्त(स्तां) सुरासुरसमितिं चकोरेति।

(अथ वा दानवनन्दिनो महाबलेः दाने। शेषं समानम्)

२. त्रिव्यञ्जनमुदाहरति—देवानामिति। देवानां नन्दनः आह्लादकः, देवनिन्दिनाम् असुराणां, नोदनः घातकः, देवो नरसिंहः, दानवनन्दिनः हिरण्यस्य, दाने खण्डने, नादेन अट्टहासेन, दिवं दुदाव तापयति स्म ॥ ९३ ॥

१. द्विवर्णमुदाहरति—

**सूरिः सुरासुरासारिसारः सारासिसारसाः।**
**ससार सरसीः सीरी ससूरुः स सुरारसी ॥ ९४ ॥**

सूरिः प्रभुर्विद्वान् सुराश्चासुराश्च सुरासुराः तान् सरति गच्छति

सार उत्कृष्टम वो यस्य स सुरासुरसारिसारः। कर्मण्यण् (?)। सीरी हलायुधः। * सरसीं (सीः) पद्मिनीं(नीः)ससार जगाम किंविशिष्टाः सारससारसा(ः) (आ) रसां (स) आरास(ः) शब्दः सहारासेन वर्तत इति सारसाः सारसाः पक्षिविशेषाः जलचरा यासु ताः। किंविशिष्टः स बलदेवः सूरू शोभने ऊरू सूरू सह ताभ्यां वर्तत इति ससूरूः पीवरजङ्घायुगलः। सुरायाः मद्यविशेषस्य रसः आस्वादः सोऽस्यास्ति सुरारसी॥

२. द्विव्यञ्जनमुदाहरति—सूरिरिति। सूरिः पण्डितः, सुरासुरासारिसारः देवासुराक्रामितबलः, सारासससारसाः—आरासः शब्दः, तेन सहिताः सारासाः, सारासा सारसाः पक्षिणः यासु ताः; ससार अवगाढवान्। सरसीः सरांसि; सीरी बलभद्रः; ससूरुः शोभनोरुसहितः; सः प्रस्तुतः। सुरारसी पीतमधुः। एवम्भूतः सीरी सरसीः ससार॥ ९४॥

१. एकाक्षरमुदाहरति—

**नूनं नुन्नानि नानेन नाननेनाननानि नः।**
**नानेना ननु नानूनेनैनेनानाननिनां निनीः॥ ९५॥**

नूनं निश्चितं नुन्नानि खेदितानि। आननानि वदनानि नोऽस्माकमनेनामुना पुरुषेण अननं बलं तेन अ(न)नेन बलेन ननेति प्रतिषेधद्वयं विधिं गमयति। तेन आ(अ)ननेन बलेन न न ननु नुन्नानि म्लानीकृतानि, अ(नु)न्नान्येव आननानि अस्माकमनेन तेनेत्यर्थः। तथा नायमनेनानपवाहितः नान्विति वितर्के। एनस्तु(?) पापमेकमेव (-युक्त एव) तथा ना पुरुषश्च न नेति। पुरुष एवायं न भवति। कोऽसावित्याह इनः स्वामी। अनूनेन अधिकबलेन एतेन वैरिणा हेतुभूतेन। 'द्वितीयाटौस्वेन' इति एतद् एनादेशः। आनान् प्राणान् (नि)नीः नेतुमिच्छुः। निनीषतेः क्विप्य(क्विपो) लोपे निनीरिति भवति। कश्चिन्मनस्वी भृत्यः स्वामिन-

मरातिनाऽधिकबलेन पराजीयमानमुपलभ्य एवमाह....दिनमनेनानेननास्मन्मुखानि न परं पाल्यमानेन मलिनीकृतानि । तथायं पापं च (-पश्च) न केवलं भवति । पुरुषश्च न भवति । योऽमुनाऽधिकबलेनारातिनाऽसद्दशून् ग्राहयतीति ॥ ९५ ॥

२. एकव्यञ्जनमुदाहरति—नूनमिति । नूनं, नुन्नानि, न, अनेन न, अननेन, अननानि, नः, ना, अनेना, ननु, न, अनूनेन, एनेन, अनानिनां, निनीः । कश्चित् भटः समरे प्रतिभटशौर्यं वर्णयति । नूनं निश्चये ; नुन्नानि ध्वस्तानि ; नेति प्रतिषेधे ; अनेन एनेन ; न प्रतिषेधे ; अननेन बलेन ; अननानि बलानि ; नः अस्माकम् ; ना पुमान् ; अनेनाः अपीडः ; ननु अवधारणे ; न प्रतिषेधे ; अनूनेन अधिकेन एनेन एतेन ; अनानिनां बलवताम् ; निनीः नेता । अयमर्थः—अनेन चक्षुर्गोचरशौर्येण अननेन नः अननानि नूनं न न नुन्नानि, नुन्नान्येव । अनानिनां निनीः यो ना सोऽपि अनूनेन एनेन अनेनाः न ननु ॥ ९५ ॥

इति चित्रचक्रम् ।

१. इतीति प्रकृतमुपसंहरति—

**इति दुष्करमार्गेऽपि कश्चिदादर्शितः क्रमः ।**
**प्रहेलिकाप्रकाराणां पुनरुद्दिश्यते गतिः ॥ ९६ ॥**

इत्यनन्तरोक्तक्रमेण न केवलं सुकरमार्गः परिच्छेदद्वयेनोक्तः । तथा अव्यपेतव्यपेतोभयसङ्कीर्णादिमध्यान्तमध्याद्याद्यन्तसर्वपादार्थश्लोकाभ्याससमुद्गप्रतिलोमगोमूत्रिकार्धभ्रमसर्वतोभद्रमहायमकस्वरस्थानवर्णनियमकथनेन दुष्करमार्गेऽपि कश्चिन्मनागादर्शितः क्रमः कथितः प्रकारः (अपिशब्देनानुजाल(?)यमकमुरजबन्धचक्रप्रभृतयोऽपि सन्तीत्याह ॥ ९६ ॥

इदानीं प्रहेलिकाप्रकाराणां भेदानां पुनरुद्दिश्यते गतिर्मार्गः ।

२. दुष्करमुपसंहरन् प्रहेलिकामुपक्रमते—इतीति । वञ्चितार्थं वाक्यं प्रहेलिका ॥ ९६ ॥

१. प्रहेलिकानां सोपयोगत्वमाह— 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति ।

**क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे ।**
**परव्यामोहने चापि सोपयोगाः प्रहेलिकाः ॥ ९७ ॥**

क्रीडागोष्ठीविनोदेष्विति ।विदग्धक्रीडार्थं तज्ज्ञैः प्रहेलिकाभिज्ञैः विदग्धैः आकीर्णमन्त्रणे विदग्धजनपारिषत्सम्भाषणे तथा परस्य दर्पाध्मातस्य व्यामोहने सम्मोहजनने च प्रहेलिकाः प्रयोजनवत्यः । उपयोगिन्य इति वा अपि दुष्करमार्गप्रदर्शनावसर एवाभिधीयन्त इति ।

२. प्रहेलिकाप्रयोजनमाह—क्रीडेति । प्रहेलिका न अलङ्कारादिरूपेण काव्योपयोगिनी , विदुषां क्रीडागोष्ठीविनोदनाद्यर्था ॥ ९७ ॥

**आहुः समाहितां नाम गूढार्थां पदसन्धिना ।**
**वञ्चितान्यत्र रूढेन यत्र शब्देन वञ्चना ॥ ९८ ॥**

१. आहुरिति । ब्रू(ब्रुव)ते । समागतां नामेति । कीदृशीमिति । गूढार्थां गुप्तार्थाम् । पदसन्धिना पदयोः सन्धिः संहिता तेन पदसन्धिना । वञ्चिता नाम सा यस्या(म)र्थान्तरे अन्यत्र रूढेन शब्देन प्रकृतस्यार्थस्य वञ्चना फलम् ॥ ९८ ॥

**व्युत्क्रान्तातिव्यवहितप्रयोगान्मोहकारिणी ।**
**सा स्यात्प्रमुषिता यस्यां दुर्बोधार्था पदावली ॥ ९९ ॥**

१. व्युत्क्रान्ता नाम सा, या अतिव्यवहितप्रयोगात् अतिव्यवहितक्रियाकारकविशेषणविशेष्यभावात् भ्रान्तिकारिणी । सा प्रमुषिता यस्यां पदावली दुःखबोधा साध्यार्था ॥ ९९ ॥

**समानरूपा गौणार्थारोपितैर्ग्रथिता पदैः।**
**परुषा लक्षणास्तित्वमात्रव्युत्पादितश्रुतिः॥ १००॥**

१. समानरूपा उच्यते। या गौणार्थारोपितैः पदैः ग्रथिता रचिता गौणार्थे आरोपितो यैस्तानि गौणार्थारोपितानि तैः। आहिताग्नित्वादारोपितशब्दस्य परनिपातः। तेन आरोपितगौणार्थैरिति। परुषा नाम सा यस्यां लक्षणास्तित्वमात्रेण लक्षणानुसारेण(?) श्रुतिः शब्दो व्युत्पादितः॥ १००॥

**सङ्ख्याता नाम सङ्ख्यानं यत्र व्यामोहकारणम्।**
**अन्यथा भासते यत्र वाक्यार्थः सा प्रकल्पिता॥ १०१॥**

१. (यत्र) संख्यानं संख्या एकत्वादिका। मोहस्य भ्रान्तेः निमित्तं सा (संख्याता नाम।) प्रकल्पिता नाम यस्यां विवक्षितो वाक्यार्थोऽन्यथा अन्येन रूपेणावभासते॥ १०१॥

**सा नामान्तरिता यस्यां नाम्नि नानार्थकल्पना।**
**निभृतानिभृतान्यार्था तुल्यधर्मस्पृशा गिरा॥ १०२॥**

१. सा नामान्तरिता नाम यस्या(म)भिधित्सिते नाम्नि नानार्थस्य विवक्षितादर्थादन्यस्य कल्पना। निभृता नाम निभृतो गोपितोऽन्योऽर्थोऽवभासमानादर्थ(न्यो) विवक्षितो यस्याम्। तुल्यधर्मं स्पृशति या तदा(या) गिरा वाचा॥ १०२॥

**समानशब्दोपन्यस्तशब्दपर्यायसाधिता।**
**सम्मूढा नाम या साक्षान्निर्दिष्टार्थापि मूढये॥ १०३॥**

१. सा समानशब्दा नाम यस्यामुपन्यस्तो यः शब्दः तस्य यः पर्यायः तेन साधितः सम्पादितोऽर्थः। सम्मूढा नाम सा या (यस्यां) साक्षाद्वाचको वि(ऽपि) मूढये भ्रान्त्यै स्यात्॥ १०३॥

**योगमालात्मिका नाम या स्यात् सा परिहारिका।**
**एकच्छन्नाश्रितं व्यक्तं यस्यामाश्रयगोपनम्॥ १०४॥**

१. योगमालात्मकमिति यस्य नाम अभिधानं सा पारिहारिकी नाम योगमालात्मकं नाम परम्परात्मकमित्यर्थः। एकच्छन्ना नाम सा यस्यामाश्रिता(तं) नाम(आधे)यं (व्यज्य)धर्म(मं) द्रव्यं(व्य) गुणकर्मलक्षणमभिव्यज्य प्रकाश्य तद्धर्मं धर्मा (तद्धर्मा)धारस्य आश्रयस्य धर्मिणो गोपनम् ॥१०४॥

**सा भवेदुभयच्छन्ना यस्यामुभयगोपनम्।**
**सङ्कीर्णा नाम सा यस्यां नानालक्षणसङ्करः॥ १०५॥**

१. सा भवेदिति। उभयच्छन्ना नाम आश्रयाश्रयिगोपनं भवति यत्र सा। सङ्कीर्णा नाम सा यस्यां नानालक्षणस्य समागतादिरुक्तस्य पञ्चदशभेदभिन्नस्य सङ्करः संसृष्टिः॥ १०५॥

**एताः षोडश निर्दिष्टाः पूर्वाचार्यैः प्रहेलिकाः।**
**दुष्टप्रहेलिकाश्चान्यास्तैरधीताश्चतुर्दश॥ १०६॥**

१. इमास्ताः षोडश निर्दिष्टाः लक्षण(-वि-)भक्ताः पूर्वाचार्यैः प्रहेलिकाः। न केवलमेता एव। तथाऽन्याश्चतुर्दश दुष्टप्रहेलिकाः तैरेवाधीताः पठिताः॥ १०६॥

**दोषानपरिसंख्येयान् मन्यमाना वयं पुनः।**
**साध्वीरेवाभिधास्यामस्ता दुष्टा यास्त्वलक्षणाः॥ १०७॥**

१. स्वमतं दर्शयति वयं पुनः साध्वीरेव लक्षणवतीरेव षोडशाभिधास्यामः। न दुष्टाश्चतुर्दश। यतस्ताः दुष्टा उच्यन्ते यास्त्वलक्षणाः लक्षणवर्जिताः। कुतः। दोषानपरिसंख्येयान् मन्यमानाः दोषाणामानन्त्यादनेका अपि सम्भवन्तीति चतुर्दशैवेति नियमाभावात्॥ १०७॥

२. समाहितादयः षोडश प्रहेलिकाः। तासां प्रत्येकं लक्षणमाह—आहुरित्यादिभिः॥ १०७॥

१. समाहितामुदाहरति—

**न मयागोरसाभिज्ञं चेतः कस्मात्प्रकुप्यसि ।**
**अस्थानरुदितैरेभिरलमालोहितेक्षणे ॥ १०८ ॥**

आगोऽपराधः तस्य रसः अनुभवः तदभिज्ञं तज्ज्ञानसहितं मम चेतः (न) कस्मान्निमित्तान्मम कुप्यसि । अतोऽस्थानरुदितैः अविषयरोदनैरेभिरलमिति प्रतिषेधे । आलोहितेक्षणे अत्यन्तपिङ्गनयने पिङ्गनयनत्वं तत्कालविशेषणम् । आग इत्ययादेशेन [सन्धिना] गोपितोऽर्थः ॥ १०९ ॥

२. समाहितामुदाहरति—नेति । मे चेतः आगोरसाभिज्ञं अपराधास्वाद भिज्ञं न भवति ; अतः कस्मात् प्रकुप्यसि । न मयेति सन्धिना षष्ठ्यर्थो विवक्षितो गूढः ॥ १०९ ॥

१. वञ्चितामुदाहरति—

**कुब्जामासेवमानस्य यथा ते वर्धते रतिः ।**
**नैवं निर्विशतो नारीरमरस्त्रीविडम्बिनीः ॥ १०९ ॥**

प्रीतिः नैवं निर्विशतोऽनुभवतो नारीः स्त्रीरमरस्त्रीविडम्बिनीः सुरसुन्दरीप्रतिस्पर्धिनी(रि)त्यत्र कुब्जाशब्दोऽन्यत्र ह्रस्वाङ्गायां दीर्घजिह्वायां (जङ्घायां-पा) योषिति प्रसिद्धः । तेन कान्यकुब्जनगरी वञ्च्यते गोप्यते तेन कुब्जां कन्यां (कुब्जाशब्दः) कुब्जां नगरीमासेवमान इत्येवमर्थेऽपि (एवमर्थे)विवक्षितः ॥ १०९ ॥

२. वञ्चितामुदाहरति—कुब्जामिति । कन्याकुब्जा महोदया इति काचिन्नगरी । कुब्जां नगरीं आसेवमानस्य तत्र निवसतः यथा रतिः प्रीतिः वर्धेत इह अमरस्त्रीसदृशीः नारीः निर्विशतोऽपि ते नैवं प्रीतिः । कुब्जाशब्दः रूपहीनायां स्त्रियां रूढः नगरे प्रयुक्तः, इति वञ्चिता ॥ १०९ ॥

१. व्युत्क्रान्तामुदाहरति—

**दण्डे चुम्बति पद्मिन्या हंसः कर्कशकण्टके।**
**मुखं वल्गुरवं कुर्वंस्तुण्डेनाङ्गानि घट्टयन् ॥ ११० ॥**

हंसः पद्मिन्या मुखं पद्मं चुम्बति तुण्डेन स्वकीयेन चञ्चूपुटेन। किं कुर्वन् घट्टयन् कान्यङ्गानि क्व दण्डे नाले किंविशिष्टे कर्कशकण्टके कस्या दण्डे पद्मिन्या एव। वल्गु मधुरं यथा भवत्येवं रवं कुर्वन् ॥ ११० ॥

२. व्युत्क्रान्तामुदाहरति—दण्ड इति। कर्कशकण्टके दण्डे नाले अङ्गानि घट्टयन् वल्गुरवं कुर्वन् स हंसः पद्मिन्या मुखं कमलं तुण्डेन मुखेन चुम्बतीति अन्वयस्य व्युत्क्रमात् व्युत्क्रान्ता ॥ ११० ॥

१. प्रमुषितामुदाहरति—

**खातयः कनि काले ते स्फातयः स्फार्हवल्गवः।**
**चन्द्रे साक्षाद्भवन्त्यत्र तायवो मम धारिणः ॥ १११ ॥**

घातयो घर्घरिका(?)दे(हे) रु(क)नि कन्ये काले वर्षासमये स्फातया (यः) शोभनः (नाः)स्फार्हो मधुरः वल्गुः शब्दो यासां ताः ते तव चन्द्रो बाहे (?) साक्षाद्भवत्यापि भवत्यत्र(?)। ता व(वा) यवः प्राणे (णा) मम धारिणो जिगमिषवः ॥ १११ ॥

२. प्रमुषितामुदाहरति—खातय इति। कनि कन्ये, काले पादे, चन्द्रे मनोहरे, ते तव, स्फातयः मनोहराः, स्फार्हवल्गवः स्फीतशब्दाः, खातयः क्षुद्रघण्टिकाः, साक्षाद्भवन्ति प्रत्यक्ष्यन्ते; अत्र खातिषु मम तायवः प्राणा धारिणः म्रियन्ते। अत्र पदावल्या दुर्बोधार्थत्वात् प्रमुषिता ॥

१. समानरूपामुदाहरति—

**अत्रोद्याने मया दृष्टा मञ्जरी पञ्चपल्लवा।**
**पल्लवे पल्लवे चार्द्रा यस्याः कुसुममञ्जरी ॥ ११२ ॥**

अत्रोद्याने मया दृष्टा वल्लरी लता । पञ्च पल्लवाः किसलयानि यस्याः सा पञ्चपल्लवा । पल्लवे ( पल्लवे) यस्या वल्लर्या आर्द्रा(?) प्रत्यग्रा अम्लाना कुसुममञ्जरीति मुख्योऽर्थः । गौणस्तु वल्लरीव वल्लरी नारी पाणि-पादे,ष्ठश्चे (पाणी पादौ ओष्ठश्चेति) पञ्च पल्लवा इव पल्लवाः कुसुममञ्जरी हस्तयोः पादयोश्च सनखरुचयोऽङ्गुलयः दशनच्छदेन (-दे तु) दन्तदीप्तय इति मुख्येन समानो गौणोऽर्थः ॥ ११२ ॥

२. समानरूपामुदाहरति—अत्रेति । अत्रोद्याने पञ्चपल्लवा मञ्जरी किसलयमञ्जरी दृष्टा ; यस्याः पल्लवे पल्लवे च आर्द्रा नवा कुसुममञ्जरी । पञ्चाङ्गुलौ कस्याश्चित् हस्ते पञ्चपल्लवमञ्जरीत्वमारोपितम् ; अङ्गुलीनां प्रभासु कुसुममञ्जरीत्वमारोपितम् । इति गौणार्थारोपितैः पदैः ग्रथिता इति समान-रूपा ॥ ११२ ॥

१. परुषामुदाहरति—

**सुराः सुरालये स्वैरं भ्रमन्ति दशनार्चिषा ।**
**मज्जन्त इव मत्तास्ते सौरे सरसि सम्प्रति ॥ ११३ ॥**

सुरा देवाः सुरालये स्वर्गे दशनार्चिषा दन्तदीप्त्या प्रकाशितदि-ग्भागाः स्वैरं भ्रमन्ति पर्यटन्ति । सुराणामिदं सौरं तत्र सौरे नन्दनोद्यान वर्तिनि सरसि मज्जन्त इव जलक्रीडां कुर्वन्तः मत्ता इव हृष्टाः सम्प्रतीति प्रसिद्धार्थः । इयमेव च लक्षणास्तित्वम(।)लव्युत्पादितश्रुतिः परुषा भवति । सुरा मदिरा । तां कुर्वन्तीति चुरादेर्णिच् सुरयतीति पचाद्यच् । सुरा मद्यपण्या (ण्या) वणिजः सुरालये सुराया आलयः तत्र मदिरागारे स्वैरं यथेष्टं भ्रम-न्ति । मत्ताः क्षीबाः सुराया इदं सौरं तच्च(त)सरसि सर इव सरः मद्या-वपनमुष्टिकोच्यत इति । न लक्ष्ये क्वापि सुरा मद्यविक्रयिणोऽभिधीयन्ते । न च सुरालयो मदिरागारं न च मत्तो हृष्ट उच्यते । न च सौरं सरो मद्या-

बपनमिति लक्ष्ये प्रसिद्धमिति पारुष्यम् । अस्ति च व्युत्पादकं लक्षणमिति ॥ ११३ ॥

२. परुषामुदाहरति—सुरा इति । सुराः देवाः, सुरालये स्वर्गे, मत्ताः हृष्टाः, स्वैरं यथेष्टं, दशनार्चिषा उपलक्षिताः, सौरे सुरसम्बन्धिनि, सरसि मानससरसि, मज्जन्त इव गाहमाना इव, भ्रमन्ति सञ्चरन्ति । अत्र सुरालयसौरसरोमत्तभ्रमन्तिशब्दाः श्रुतिपरुषार्थप्रतीतिं जनयन्तीति परुषात्वम् ॥ ११३ ॥

१. संख्यामुदाहरति—

**नासिक्यमध्या परितश्चातुर्वर्ण्यविभूषिता ।**
**अस्ति काचित् पुरी यस्यामष्टवर्णाह्वया नृपाः ॥ ११४ ॥**

नासिक्यमध्या नासिक्यो नाम गोदावरीतीरोपान्तवर्तिदेशविशेषः । तस्य मध्या मध्यवर्तिनी । परितः समन्ततः चतुर्भिः वर्णैः ब्राह्मणादिभिः विभूषिता अलंकृता अस्ति काचित् पुरी । यस्यामष्टवर्णाह्वया नृपाः अष्टवर्णाभिधाना राजान इति व्यामोहहेतुरर्थः । नासिकायां भवो वर्णो नासिक्यो ऽनुस्वारः (स मध्यो नामधेयमध्यवर्ती यस्याः सा नासिक्यमध्या । परित उभयतश्चतुर्भिर्वर्णैः ककाराकारर(च)कारा(रे)कारैः अलंकृता पुरी काञ्चीति संख्यानं व्यामोहहेतुः ॥ ११४ ॥

२. संख्यातामुदाहरति—नासिक्येति । नासिक्यः अनुनासिको ञकारः मध्ये यस्याः सा, परितः चातुर्वर्ण्यविभूषिता ककाराकाराभ्यां चकारेकाराभ्यां चतुर्भिः वर्णैः विभूषिता परीता, काचित् पुरी अस्ति, काञ्ची इति यावत् । तस्यां पुर्यां, शब्दार्थयोरभेदोपचारात्, यथा देवपूर्वं गिरिमित्यादि; अष्टवर्णाह्वयाः पल्लवाः नाम राजानः; पकाराकारलकारद्वयाकारवकाराकारविसर्जनीयैः अष्टवर्णाह्वयत्वम् । काञ्चीनगर्यां पल्लवाः नाम क्षितिपतयः सन्तीति विवक्षितस्य अर्थस्य चतुरष्टवर्णशब्दाभ्यां संख्यावाचिभ्यां व्यामोहकरत्वात् संख्यातात्वम् ॥ ११४ ॥

१. प्रकल्पितामुदाहरति—

गिरा स्खलन्त्या नम्रेण शिरसा दीनया दृशा ।
तिष्ठन्तमपि सोत्कम्पं वृद्धे मां नानुकम्पसे ॥ ११५ ॥

गिरा स्खलन्त्या नम्रेण नतेन शिरसा दीनया दृशा तिष्ठन्तमपि मामेवंविधं हे वृद्धे किं नानुकम्पसे । वृद्धा लक्ष्मीस्तद्विषयो वाक्यार्थो वक्तुमिष्टः केनाप्युद्विग्नेन दरिद्रेण । वृद्धस्त्रीविषयश्चावभासत इति ॥ ११५ ॥

२. प्रकल्पितामुदाहरति—गिरेति । वृद्धे इति वृद्धिशब्दस्य लक्ष्मीवाचिनः सम्बोधनम् । कस्यचित् लक्ष्मीं प्रति दरिद्रं मामनुकम्पस्व इति वचनम् । कश्चित् जरतीं प्रति स्वानुरागं प्रतिभासयतीति प्रकल्पितात्वम् ॥ ११५ ॥

१. नामान्तरित(ा)मुदाहरति—

आदौ राजेत्यधीराक्षि पार्थिवः कोऽपि गीयते ।
सनातनश्च नैवासौ राजा नापि सनातनः ॥ ११६ ॥

आदौ युगादौ राज्येत्यधीराक्षि हे चपलेक्षणे पृथिव्यामीश्वरः पार्थिवः कोऽपि गीयते । स्नात(सनातन)श्च कृतवर्णाश्रमव्यवस्थितश्च किं च (त्व)सौ न राजा न नृपतिः सनातनः (तन-) शब्दरहितश्च न भवति (इति) व्यामोहहेतुरर्थः । कस्तर्ह्यसाविति । उच्यते । स पार्थिवः पृथिव्यां भवः पार्थिवो वृक्षः राजाऽपि स्तनस्तनोक्त(?) राजातनाभिधानस्तरुरिति निश्चयार्थः ।
अत्र राजातन इति यन्नाम तस्मिन्नानार्थस्य नृपतरुलक्षणस्य कलनात्तदन्तरितमिति नामान्तरितोच्यते ॥ ११६ ॥

२. नामान्तरितामुदाहरति—आदाविति । पार्थिवः आदौ राजेति गीयते सनातनश्चेति ; असौ नैव राजा नापि सनातनः , इति विरुद्धम् ।

कस्यचित् भूरुहस्य राजातन इति नाम ; सः आदौ राजेति कथ्यते, अन्ते तन इति च सदा कथ्यते असौ भूरुहः राजा नित्यश्च न भवति, इत्यर्थः । राजातन इति नाम्नि नानार्थकल्पनात् नामान्तरितात्वम् ॥ ११६॥

१. निवृत्ता(भृता)मुदाहरति—

**हृतद्रव्यं नरं त्यक्त्वा धनवन्तं व्रजन्ति काः ।**
**नानाभङ्गिसमाकृष्टलोका वेश्या न दुर्धराः ॥ ११७ ॥**

हृतमाच्छिन्नं द्रव्यं यस्यासौ हृतद्रव्यो निर्धनः । तं हृतद्रव्यं नरं पुरुषं त्यक्त्वा विहाय धनवन्तं धनाढ्यं नानाभङ्गिशतैराकृष्ट(:) लोक(:) यतिकादि (याभि)स्ताः । काः व्रजन्ति । दुःखेन ध्रियन्त इति दुर्धराः । तर्हि वेश्यास्ता भवेयुरित्याप(ह) न वेश्या इति व्यामोहहेतुः । कास्तर्हि ताः । उच्यते । श्रिय इह वेश्या[:] समान(-धर्म-]स्पर्शा [स्पृशा] गिरा श्रिय इति योऽर्थोऽभिधित्सितः स निभृतो गोपितः ॥ ११७ ॥

२. निभृतामुदाहरति—हृतेति । एवंभूताः श्रिय इत्यस्य अर्थस्य वेश्यासाधारणैः विशेषणैः गुप्तत्वात् निभृतात्वम् ॥ ११७ ॥

१. समानशब्दामुदाहरति—

**जितप्रकृष्टकेशाख्यो यस्ते भूमिसमाह्वयः ।**
**स मामद्य सुभूतोत्कं करोति कलभाषिणि ॥ ११८ ॥**

प्रकृष्टाश्च ते केशाश्च ते प्रकृष्टकेशाः । तेषामाख्या नाम येषां ते प्रकृष्टकेशाख्याः । प्रवालयो (प्रवालाः) विद्रुमापरनामानः । जिताः प्रकृष्टकेशाख्यः येनासौ जितप्रकृष्टकेशाख्यः । पराजितप्रवालमणिरागः । अतिरक्त इत्यर्थः । यस्तव न विद्यते भूमिर्धराऽस्येत्यभूमिकः (-मिः तेन)समा-(-म आ-)ह्वयोऽभिधानं यस्यसावभूमिका(सा)ह्वयः अधरः कस्याद्य(सोऽद्य) मां सुष्ठु अतिशयेन भूतो जात उत्कः उत्कण्ठा यस्य तं सुभूतोत्कं सुष्ठु

जातौत्सुक्यं करोति हे कलभाषिणि । इहोपन्यस्तशब्दः प्रकृष्टकेशाख्य इति यः तस्य पर्यायः प्रवाल इति यश्चाभूमिका(समा)ह्वय इति तस्य पर्यायो ऽधर इति सुभूतोत्कमित्यस्य पर्यायः सञ्जातौत्सुक्यमित्येतैः पर्यायैः साधितः प्रतिपादितोऽर्थ इति समानशब्दोच्यते ॥ ११८ ॥

२. समानशब्दामुदाहरति—जितेति। वालः केशः, प्रवालः प्रकृष्टकेशः, स आख्या यस्य सः प्रवालः पल्लवः, जितप्रकृष्टकेशाख्यः जितप्रवालः इति यावत्; यः; ते तव; अभूमिसमाह्वयः—धरा भूमिः, तद्रहितः अभूमिः, तत्समाह्वयः तत्पर्यायः अधरः; भूः रसा, सुभूः सुरसः, सुभूता सुरसता, तया उत्कं साभिलाषं करोति; कलभाषिणि। जितप्रकृष्ट-केशाख्यः अभूमिसमाह्वयः यस्ते अवयवः, सः अद्य मां सुभूतोत्कं करोति। इति विवक्षितार्थस्य वाचकपर्यायान्तरेण कथितत्वात् समानशब्दात्वम्॥११८

१. सम्मूढामुदाहरति—

**शयनीये परावृत्य शयितौ कामिनौ रुषा।**
**तथैव शयितौ रागात् स्वैरं मुखमचुम्बताम्॥ ११९ ॥**

शयनीये परावृत्य पराङ्मुखीभू(-य)शयितौ कामीव(च) कामिनी(-च) कामिनौ रुषा कोपेन तथैव तेन प्रकारेण पराङ्मुखीभूतावेव शयितौ सुप्तौ रागादनुरागात् स्वैरं यथेष्टं मुखमाननं न चुम्बित(अचुम्बता)मित्यनुपपद्यमानो-ऽर्थः। न खलु पराङ्मुखीभूय कोपेन शयानयोरधरचुम्बनमुपपद्यत इति। समाधानं तु तथैव शयनीयेनैव (?)प्रकारेण परावृत्य, परावृत्तयोः पुनःपरावृत्तिः। (ते-)न सम्मुखीभवनम्। अत एव रोषाभावात् रागादित्युपपन्नम्। सम्मुखयोश्चाधरचुम्बनं स्वैरमुपपद्यत एवेति कथितार्थापायं व्यामोहहेतुरिति सम्मूढोच्यते ॥ ११९ ॥

२. मूढामुदाहरति— शयनीय इति । रुषा प्रणयकलहेन शयनीये परावृत्य शयितौ कामिनौ, रागात् पुनः तथैव परावृत्य शयितौ आभिमुख्येन शयितौ इति यावत्, तौ स्वैरं मुखमचुम्बताम् । अत्र विवक्षितार्थमोहनाय तथैवेति निर्दिष्टत्वात् मूढात्वम् ॥ ११९ ॥

१. पारिहारिकामुदाहरति—

विजिताम्न(त्म)भवद्वेषिगुरुपादहतो जनः ।
हिमापहामित्रधरैर्व्याप्तं व्योमाभिनन्दति ॥ १२० ॥

विः गरुडः तेन जितः शक्रः तस्यात्मभवः तनुजोऽर्जुनः तस्य द्वेषी कर्णः तस्य गुरुरादित्यः पिता तस्य पादाः कराः तैर्हतः सन्तप्तो जनः व्योमाकाशः किंविशिष्टं व्याप्तं कैः हिमापहामि(त्रधैरः) हिमं शीतं तद(प)हन्ति निवारयति हिमापहोऽग्निः तस्यामित्रस्तोयं तद्धरन्तीति हिमापहामित्रधराः तैः । अपेः क्लेशतमसोरुपपदयोर्विहितोऽपि हन्तेरन्योपपादविशिष्टप्रयोगाभे-(....-गेऽपि ड-प्रत्ययो)भवति । तेन दर्शन(दंश)मशकापहं हिमापहमित्यादि सिद्धं भवति ॥ १२० ॥

२. पारिहारिकीमुदाहरति— वीति । विः पक्षी गरुडः, तेन जितम् अन्नम् अमृतं यस्मात् सः इन्द्रः, मातुः दास्यात् मोचनाय गरुडो दिवं गत्वा इन्द्रेण रक्षितममृतं बलात् अपहृत्य भूमौ आनीतवान्, विजितान्नात् इन्द्रात् भवः जातः अर्जुनः, तस्य द्वेषी कर्णः, तस्य गुरुः जनकः आदित्यः, तस्य पादैः किरणैः, हतः सन्तापितः जनः, हिममपहन्तीति हिमापहः वह्निः, तस्य अमित्रः जलं, तस्य धराः जलधराः, तैः व्याप्तं व्योम अभिनन्दति । अत्र नाम्नो योगपरम्परात्मकत्वात् पारिहारिकीयम् ॥ १२० ॥

१. एकच्छन्नामुदाहरति—

न स्पृशत्यायुधं जातु न स्त्रीणां स्तनमण्डलम् ।
अमनुष्यस्य कस्यापि हस्तोऽयं न किलाफलः ॥ १२१ ॥

न स्पृष्टमायुधं न शस्त्रं सन्धृतं न च स्त्रीणां स्तनमण्डलं स्पृष्टं जातु कदाचित् अमनुष्यस्यापुरुषस्य कस्यापि हस्तोऽयं न किलाफलः फलवर्जितं[तः] किल नभवति। आश्रितं धर्मं हस्तमभिव्यज्य तेनाश्रयस्य धर्मिणो गोपनमिति व्यामोहहेतुः । अर्थस्तु एरण्डस्तोयमतोयं(-हस्तोऽयं)न निष्फलः । सन्ति ह्येरण्डहस्तस्य फलानि । हस्ताकृतित्वाच्च हस्त इव हस्त उच्यते । अमनुष्यश्च एरण्डः । न चायं स्त्रीकुचमण्डलं स्पृशत्यायुधं वा दधातीति ॥ १२१ ॥

२. एकच्छन्नामुदाहरति–नेति । एरण्डदलखण्डने आयुधस्य मालिन्यं जायते, स्त्रीणां स्तनमण्डलं न स्पृशति कण्डूकरत्वात् ; कस्यचित् हस्तस्य आयुधस्तनयोः स्पर्शाभावे वीरशृङ्गाररराहित्यात् निष्फलत्वेऽपि गन्धर्वहस्ताख्यस्य एरण्डस्य सफलत्वात् निष्फलत्वाभावः । अत्र आश्रितहस्तस्य व्यक्तत्वेऽपि आश्रयस्य गन्धर्वस्य कस्यापि अमनुष्यस्येति छन्नत्वात् एकच्छन्नेयम् ॥ १२१ ॥

१. उभयच्छन्नामुदाहरति—

केन कः सह सम्भूय सर्वकार्येषु सन्निधिम् ।
लब्ध्वा भोजनकाले तु यदि दृष्टो निरस्यते ॥ १२२ ॥

केन वस्तुना सह कः पदार्थः सम्भूय संयुज्य सर्वेषु कार्येषु सन्निधिं उपयोगं लब्ध्वा प्राप्नोति (प्राप्य, यदि) पाना(अन्ना)दिभोजनकाले दृष्टः स्यात्तदा निरस्यते इत्युभयोरर्थं(रपि) धर्मधर्मिणोः गोपनमित्युभय(छन्ना) आश्रयाश्रयिणोरप्रतिपादनादिति व्यामोहहेतुः। अर्थस्तु केशाख्यः पदार्थः केन मस्तकेन सह संयुज्य सर्वकार्येषु स्नानतैलाभ्यङ्गपुष्पबन्धनादिषु सन्निधिमुपयोगं प्राप्नोति । स च भोजनभाजने उपलब्धो यदि स्यात्तदा तनेता (ततो)निरस्यत इति ॥ १२२ ॥

२. उभयच्छन्नामुदाहरति—केनेति । कः केन सह सम्भूय सर्व-कार्येषु सन्निधिं लब्ध्वा भोजनकाले यदि दृष्टो निरस्यते । कः केन इति आश्रिताश्रययोः छन्नत्वात् एषा उभयच्छन्ना । कशब्देन शिरोवाचकेन तद्भवः केशो लक्ष्यते । कः केशः केन शिरसा सह सम्भूय, सर्वकार्येषु सर्वेषु कार्येषु प्राप्तेषु चूडामणिस्रगादिषु सन्निधिं लब्ध्वा, भोजनकाले भोज्ये यदि दृष्टः अशुचित्वात् निरस्यते ॥ १२२ ॥

१. सङ्कीर्णामुदाहरति—

**सहया सगजा सेना सभटेयं न चेज्जिता।**
**अमातृकोऽयं मूढः स्यादक्षरज्ञश्च नः सुतः ॥ १२३ ॥**

**सा नामान्तरितामिश्रा वञ्चितारूपयोगिनी ।**
**एवमेवेतरासामप्युन्नेयः सङ्करक्रमः ॥ १२४ ॥**

**इति प्रहेलिकामार्गो दुष्करात्मापि दर्शितः ।**
**विद्वत्प्रयोगतो ज्ञेया मार्गाः प्रश्नोत्तरादयः ॥ १२५ ॥**

सहया सगजा सभटा सेना वाहिनीयं न चेज्जिता पराजिता स्या-दनेन तदायत(अस्म)त्पुत्रो मूढो विकल्पशून्यः, अथ च नायं मूढो म-(ऽस्म):पुत्रो यतोऽक्षरत(ज्ञ) इति व्यामोहहेतुरर्थः । हश्च यश्च हयौ, गश्च जश्च गजौ, भश्च टश्च भटौ, इश्च नश्च इनौ, सह ताभ्यां वर्तत इति सहया सगजा सभटा सेना मातृका सिद्धा[?]मातृका अकारादिक्षकारपर्यन्ता जिता ज्ञानेनै(ज्ञातै)श्चानेन अतो नायममातृकोऽस्मत्पुत्रः, च इति मूढश्च न भवत्य-क्षरज्ञो विधानिनीयं (विद्वानितीयं नामान्तरितामिश्रा। सा)नामान्तरिता यस्यां नाम्नि नानार्थकल्पनेत्युक्तम् । अमातृक इति यन्नाम तत्र नानार्थइस्य (ष्टः) जननी सिद्धमात्र(तृका) इति च नानार्थकल्पना । तथा वञ्चिता-रूपयोगिनीयम् । 'वञ्चिताऽन्यत्र रूढेन यत्र शब्देन वञ्चन'मित्युक्तम् । अन्यत्र रूढः शब्दो हय इत्यश्वे गज इति वारणे भट इति पत्तौ सेना इति

वाहिन्याम् । तेन वञ्च्यते(न्ते) हयगजभटैकारनकारा वर्ण(र्णा)इति उभय-प्रहेलिकालक्षणं (ण) संसर्गा(-त) सङ्कीर्णोच्यते । तदेवमेकां सङ्कीर्णां लक्ष्यलक्षणतः प्रतिपाद्य शेषाणामतिदेशं करोति एवमेव इतरासामनेनैव प्रकारेणेतरासामपराधिति(-मपि निभृता)व्युत्क्रान्तादिमिश्राणामपि सङ्कर-क्रमः साङ्कर्यप्रकारः उन्नेय ऊह्य इति ॥ १२३-१२४ ॥

२. सङ्कीर्णमुदाहरति—**सहयेति** । सहया हकारयकारसहिता, हकारेण ऊष्माक्षराणि यकारेण अन्तस्थाश्च संगृह्णाति ; सगजा गकारजका-रसहिता, गकारेण कवर्गं जकारेण चवर्गं च संगृह्णाति ; सेना इकारनकार-सहिता, इकारेण स्वरान् नकारेण तवर्गं च संगृह्णाति ; सभटा भकार-टकारसहिता, भकारेण पवर्गं टकारेण टवर्गं च संगृह्णाति ; एवंभूता मातृका न चेत् जिता शिक्षिता, अमातृकः मातृकारहितः मूढः स्यात् । अयं नः सुतः अमातृकोऽपि अक्षरज्ञ एव ; मातृरहितः अक्षरज्ञ इति विवक्षितम् । तत्र मातृकारहितः इति प्रतीत्या विरोधध्वनिः । मातृकाशब्दः अक्षराव-ल्यां निरूढः मातरि निगूढः इति वञ्चिता ; मातृकायाम् अक्षरावल्या-त्मिकायां नाम्नि हयगजादिशब्दैः व्यामोहात् नामान्तरिता ; इति सङ्कीर्ण-यम् ॥ १२३ ॥

२. प्रहेलिकामुपसंहरति—**सा नामान्तरितेति**[?] ॥ १२४-१२५ ॥

इति प्रहेलिकाचक्रम् ।

**विशदबुद्धिरनेन सुवर्त्मना**
**सुकरदुष्करमार्गमवैति हि ।**
**न हि तदन्यनयेऽपि कृतश्रमः**
**प्रभुरिमं नयमेतुमिदं विना ॥ १२६ ॥**

इत्याचार्यदण्डिनः कृतौ काव्यादर्शे सुकरदुष्करो नाम
तृतीयः परिच्छेदः ॥

इति तरुणवाचस्पतिविरचितायां काव्यादर्शटीकायां तृतीयः परिच्छेदः ।

## अथ चतुर्थः परिच्छेदः ।

---

काव्ये दोषा गुणाश्चैव विज्ञातव्या विचक्षणैः ।
दोषा विपत्तये तत्र गुणाः सम्पत्तये यथा ॥ १ ॥

१. इदानीमपार्थं इत्यादिना दश काव्यदोषानाह—

अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम् ।
शब्दहीनं यतिभ्रष्टं भिन्नवृत्तं विसन्धिकम् ॥ २ ॥

देशकालकलालोकन्यायागमविरोधि च ।
इति दोषा दशैवैते वर्ज्याः काव्येषु सूरिभिः ॥ ३ ॥

गुणदोषस्वरूपानभिज्ञस्य दोषपरिहारेण काव्यकरणे गुणदोषपरीक्षायां चानधिकारात् । तदुक्तम्—

गुणदोषानशास्त्रज्ञः कथं विभजते जनः ।
तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन ॥ इति ।

अतः काव्यदोषान् कथयति ॥

२. अथ काव्यदोषानाह । काव्यं येन दुष्यति स दोष इति करणे घञा दोषसामान्यलक्षणं मत्वा तद्विशेषानुद्दिशति—**अपार्थमिति** ॥

१. अपरे भामहादयः अपार्थादिवत् प्रतिज्ञाहानिदोषोऽपि काव्ये परिहर्तव्य इति तल्लक्षणमपि प्रणीतवन्तः । तदनिच्छन् स्वमतं दर्शयति—

प्रतिज्ञाहेतुदृष्टान्तहानिर्दोषो न वेत्यसौ ।
विचारः कर्कशप्रायस्तेनालीढेन किं फलम् ॥ ४ ॥

प्रतिज्ञादिहानिर्दोषः साध्यनिर्देशः प्रतिज्ञा । साध्यं (ध्य) साधनं हेतुः । लौकिकपरीक्षकयोः यत्र बुद्धिसाम्यं स दृष्टान्तः । तेषां हानिः स दोषो न वा(सा)वौ दोष (इति विचारः कर्कशप्रायः । तेन

चिन्तितेन न किमपि प्रयोजनम्। अतो न निरूप्यत इति) ॥ ४ ॥

२. दशैवेत्यवधारणं न युक्तम्, भामहेनोक्तानां प्रतिज्ञाहान्यादीनामपि विद्यमानत्वात्; इति चेत्, आह—प्रतिज्ञेति। प्रतिज्ञाहानिहेतुहानिदृष्टान्तहान्यादयः अनुमानदोषाः, काव्ये न दोषाय कल्पन्ते; इति विचारोऽपि अयुक्तः ॥ ४ ॥

**समुदायार्थशून्यं यत्तदपार्थमितीष्यते।**
**तन्मत्तोन्मत्तबालानामुक्तेरन्यत्र दुष्यति ॥ ५ ॥**

१. (समुदायार्थ)शून्यं वाक्यार्थशून्यं यत्तदपार्थकमितीष्यते। अस्यापवादमाह। तन्मत्तोन्मत्तबालानां या उक्तिः तस्या अन्यत्र दुष्यति मत्ताद्युक्तो(क्तौ)प(न) दोषोऽपार्था(र्थम्। अ) पार्थान्यथ(न्येव हि तद) भिधानानीत्यर्थः ॥ ५ ॥

२. अपार्थं लक्षयति—समुदायेति। प्रत्येकं वाक्यानाम् अन्वितार्थत्वेऽपि समुदायार्थशून्यं यत् तत् अपार्थम्। तस्य क्वचित् गुणत्वं कथयति—**तन्मत्तेति** ॥ ५ ॥

१. अपार्थमुदाहरति—

**समुद्रः पीयते देवैरहमस्मि जरातुरः।**
**अमी गर्जन्ति जीमूता हरेरैरावणः प्रियः ॥ ६ ॥**

समुद्रः पीयते देवैरित्यादि। इदं दशरथादिवा(दशदाडिमा)दिना व्याख्यातम् ॥ ६ ॥

२. अपार्थमुदाहरति—**समुद्र इति** ॥ ६ ॥

**इदमस्वस्थचित्तानामभिधानमनिन्दितम्।**
**इतरत्र कविः को वा प्रयुञ्जीतैवमादिकम् ॥ ७ ॥**

१. इदमेवंविधमपार्थकमपि अस्वस्थचित्तानां मदिरादिविप्लुतस्तुत (मदिरादिविलुप्त)विवेकानां पाकादिग्रहादिकामादिचाराद्युपप्लुतचित्तानामभिधानमनिन्दितम्। तेभ्योऽन्यत्र स्वस्थः कविः को वा प्रयुञ्जीत एवमादिकमिति ॥ ७ ॥

२. तस्य दोषगुणत्वे विभजते-इदमिति ॥ ७ ॥

१. व्यर्थलक्षणमाह—

**एकवाक्ये प्रबन्धे वा पूर्वापरपराहतम्।**
**विरुद्धार्थतया व्यर्थमिति दोषेषु पठ्यते ॥ ८ ॥**

एकवाक्ये प्रबन्धे वा पूर्वापरपराहतं विरुद्धार्थतया विरुद्धोऽर्थोऽस्येति विरुद्धार्थं व्यर्थं न पुनर्विगतार्थं तस्यापार्थमित्यनेनैव गतत्वाच्च (तु) दोषेषु पठ्यते ॥ ८ ॥

२. व्यर्थं लक्षयति—एकेति ॥ ८ ॥

१. तदुदाहरति-

**जहि शत्रुकुलं कृत्स्नं जय विश्वम्भरामिमाम्।**
**तव नैकोऽपि विद्वेष्टा सर्वभूतानुकम्पिनः ॥ ९ ॥**

जहि मारय शत्रुकुलमरातिसमाजं अशेषम्। जय विश्वम्भरामिमामिति शत्रुवधो महीविजयस्य(श्च) पूर्वार्धेनोक्तः। न च ते कोऽपि विद्वेष्टा न च तवास्ति कश्चिदित्युत्तरार्धेन विरोधः। भावाभावयोः परस्परविरोधादिति ॥ ९ ॥

२. तदुदाहरति—जहीति। शत्रुकुलं कृत्स्नं जहीति वाक्यं, न ते कोऽपि विद्वेष्टा भवतीति वाक्येन विरुद्धम् ॥ ९ ॥

१. अस्यापवादमाह-

**अस्ति काचिदवस्था सा साभिषङ्गस्य चेतसः।**
**यस्यां भवेदभिमता विरुद्धार्थापि भारती ॥ १० ॥**

अस्त्यसौ काचिदवस्था यस्यां विरुद्धा(-र्था-)ऽपि पूर्वापरपराहताधि(पि हा(भा)रस्या(त्य)भिमता। कस्य सावस्थेत्याह—साभिषङ्गस्य चेतसः कामादिपरवशस्य मनसः ॥ १० ॥

२. विरुद्धार्थस्य वाक्यस्य कस्यांचिदतिसक्तचेतसि क्वापि यूनि वक्तरि गुणवत्त्वमित्याह—अस्तीति ॥ १० ॥

१. तदुदाहरति–

**परदाराभिलाषो मे कथमार्यस्य युज्यते।**
**पिबामि तरलं तस्याः कदा नु दशनच्छदम् ॥ ११ ॥**

परदाराभिलाषो मे कथमार्यस्य युज्यत इति पूर्वार्धेन परस्त्रीगमनप्रतिषेधोऽभिहितः। पिबामि तरलं तस्याः कदा सीतायाः दशनच्छदमधरमिति उत्तरेण पूर्वोक्तस्य व्याघातेऽपि न दोषः। यत उक्तमन्यैरपि 'कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु' इति ॥ ११ ॥

२. तदुदाहरति—परदारेति ॥ ११ ॥

१. एकार्थलक्षणमाह—

**अविशेषेण पूर्वोक्तं यदि भूयोऽपि कीर्त्यते।**
**अर्थतः शब्दतो वापि तदेकार्थं मतं यथा ॥ १२ ॥**

अविशेषेण पूर्वोक्तं यदि भूयः पुनरपि कीर्त्यते। तच्च शब्देनार्थेन वा इति द्वैविध्यमाह। शब्दपुनरुक्तमर्थपुनरुक्तं च। यतो (था) नित्यः शब्दो नित्यः शब्द इति शब्दपुनरुक्तम्। अर्थपुनरुक्तमनित्यः शब्दो वि(नि)रोधधर्मात्मको ध्वान इति ॥ १२ ॥

२. एकार्थं लक्षयति—अविशेषेणेति। एकार्थं पुनरुक्तम् इति पर्यायः ॥ १२ ॥

१. एतदुदाहरति–

**उत्कामुन्मनयन्त्येते बालां तदलकत्विषः।**
**अम्भोधरास्तटित्वन्तो गम्भीरास्स्तनयित्नवः॥ १३॥**

अत्र उत्कामुन्मनयन्तीति पौनरुक्त्यात्म(म् । अ)विशेषोक्तत्वात्। तथा पुष्टौ(अम्भो)धरा इत्यनेनैव कालत्वस्योक्तत्वात् तदलकत्विष इत्यनेनापि (विव)क्षणत्वमु(मयु)क्तम् । तथा अम्भोधराः तटित्वन्तः स्तनयित्नव इत्यविशेषेण मेघा(घ)नाम(मा)भिधानात्पौनरुक्त्यम् ॥ १३ ॥

२. तदुदाहरति–उत्कामिति । उत्काम् उन्मनयन्तीति शब्दभेदेऽपि एकार्थत्वादर्थपुनरुक्तम् ; 'उत्क उन्मनाः' इति एकार्थत्वेन निपातनात् । गम्भीराः स्तनयित्नवः इति शब्दपुनरुक्तम् । शब्दार्थयोरुभयोः एकत्वे शब्दपुनरुक्तिः , न शब्दमात्रपुनरुक्तौ , तदानीं यमकस्य पुनरुक्तदोषप्रसङ्गात् ॥ १३ ॥

१. अस्यापवादमाह–

**अनुकम्पाद्यतिशयो यदि कश्चिद्विवक्ष्यते।**
**न दोषः पुनरुक्तोऽपि प्रत्युतेयमलंक्रिया॥ १४॥**

अनुकम्पाद्यतिशयो यदि कश्चिद्विवक्ष्यते तदा पुनरुक्तोऽपि दोषाऽ(षो ना)स्ति । प्रत्युतत(तेय)मलंक्रिया पुनरुक्तिः॥ १४ ॥

२. पुनरुक्तस्य गुणत्वं लक्षयति–अनुकम्पेति ॥ १४ ॥

१. तदुदाहरति—

**हन्यते सा वरारोहा स्मरेणाकाण्डवैरिणा।**
**हन्यते चारुसर्वाङ्गी हन्यते मञ्जुभाषिणी॥ १५॥**

हन्यते मार्यते सा (द)यिता । किंभूता । वरारोहा सुन्दराङ्गी । स्मरेण अकाण्डवैरिणा मन्मथेनानिमित्तवैरिणा । 'हन्यते चारुसर्वाङ्गी

हन्यते मञ्जुभाषिणी' इत्यत्र हन्यते(:)त्रिरुक्तिर्वरारोहा चारुसर्वाङ्गीति च पुनरुक्तिरदोषः । अनुकम्पया कारुणिकजनस्य पुनः पुनस्तदभिधानस्य दृष्टत्वात् ॥ १५ ॥

२. तदुदाहरति—हन्यत इति । हन्यते सा वरारोहा इत्यादीनां वाक्यानामेकार्थानां अनुकम्पावशेन आवृत्तेः गुणत्वम् ॥ १५ ॥

१. (स)संशयलक्षणमाह—

**निर्णयार्थं प्रयुक्तानि संशयं जनयन्ति चेत् ।**
**वचांसि दोष एवासौ ससंशय इति स्मृतः ॥ १६ ॥**

निर्णयार्थमित्यादि । यदि निर्णयार्थं प्रयुक्तानि वचांसि संशयं जनयन्ति तदाऽसौ दोष एव (स)संशय इति ॥ १६ ॥

२. ससंशयं लक्षयति—निर्णयार्थमिति ॥ १६ ॥

१. तदुदाहरति—

**मनोरथप्रियालोकरसलोलेक्षणे सखि ।**
**आराद्वृत्तिरसौ माता न क्षमा द्रष्टुमीदृशम् ॥ १७ ॥**

मनोरथश्चासौ प्रियालोकश्च तस्य(यो र-)सस्तेनालोले (ई)क्षणे यस्याः तस्या आमन्त्रणं हे सखि मनोरथप्रियालोक(रस)लोलेक्षणे येनेयमवस्था कृता तमवलोक्य(क)येत्युक्ते(क्ता) से (मे) माता मम हृदयं(य)सन्ताप-स्याराद्वर्ति(-नी) दूरवर्तिनी न क्षमा द्रष्टुम्(अव)लोकयितुमसमर्थेति । तत्रै-तानि पदान्यमुमर्थमभिधातुमिष्टानि कयाचिदनुरक्तया । हे सखि मनोरथ-प्रियालोकरसलोले(क्षणे) मया माता जननी अभिहिता भूयोऽपि । यथा येन वल्लभेन ममेदृशी सञ्जनितकार्श्या अवस्था कृता तं(तं) त्वमानया (य) मा नीय(मत्स मीदम् ?) सा च माता वापि (मयि) न खिद्यतीति मत्कम्पात-

(न्ताप) स्य दूरवर्ती(र्तिनी) सती न ममी(मे)दृशं वल्लभं द्रष्टुं वरतं (अवेक्षि-तुं) (अथ वा अवगन्तुं) क्षमेति । न चायमर्थो(र्थ ए)भिः पदैरभिव्यज्यते । आराद्वृत्तिरित्युच्यते । (न ज्ञायते समीपात् उत दू)रात् । तथा ईदृश-मित्युच्यते न ज्ञायते कीदृशं किमिति वा की(ई)दृशं तं वल्लभं सुभगमुत ईदृशं मां विरहपीडितं उतेदृशं मदवस्थान्तरम् । तदा(था) कस्य दूरवर्तिनी किं मन्मनस्सन्तापस्य उताङ्गम(उत ग्राम)नगरादेरिति संशयः । तदुक्तं भामहेन—

श्रुतेः सामान्यधर्माणां विशेषस्यानुदाहृतेः ।
अप्रतिष्ठं यदेकत्र तज्ज्ञानं संशयं विदुः ॥ इति ॥

२. तदुदाहरति—**मनोरथेति** । कयाचित् अभिमतं पश्यन्त्या नायिकया पृष्टा सखी नायिकां प्रत्याह—आराद्वृत्तिः समीपवर्तिनी माता ईदृशं प्रकृतं ते व्यापारं न किं द्रष्टुं क्षमा, पश्यत्येव इत्येको वाक्यार्थः । आराद्वृत्तिः दूरवर्तिनी माता ईदृशं सूक्ष्मं व्यापारं द्रष्टुं न शक्नोति इत्यन्यो वाक्यार्थः । इदं वाक्यम् उभयोरर्थयोः संशयं जनयतीति ससंशयम् ॥ १७ ॥

१. अस्यापवादमाह—

**ईदृशं संशयायैव यदि जातु प्रयुज्यते ।**
**स्यादलङ्कार एवासौ न दोषस्तत्र तद्यथा ॥ १८ ॥**

ईदृश[शं]संशयायैव यदि जातु प्रयुज्यते तदाव(स्याद)लङ्कार एवासौ तदा दोषो न भवति । निर्णयार्थं प्रयुक्तानि यदि संशयं जनयन्ति तदा दोष इत्यर्थः ॥ १८ ॥

२. ससंशयस्य गुणत्वं लक्षयति—**ईदृशमिति** ॥ १८ ॥

१. तदुदाहरति—

**पश्याम्यनङ्गजातङ्कलङ्घितां तामनिन्दिताम् ।**
**कालेनैव कठोरेण ग्रस्तां किं नस्त्वदाशया ॥ १९ ॥**

**कामार्ता घर्मतप्ता वेत्यनिश्चयकरं वचः।**
**युवानमाकुलीकर्तुमिति दूत्याह नर्मणा ॥ २० ॥**

पश्यामि अनङ्गजातङ्कलङ्घितां तामनिन्दिताम् अनङ्गः कामः तस्माज्जातः अनङ्गजः स चासावातङ्कश्च तेन लङ्घितां पीडितां सखीं कालेनैव कठोरेण सा[?] मृत्युनैव क्रूरेण ग्रस्तां ताम्राघ्रातां(तामनवद्याम्) अतः किं नस्त(स्त्व)दाशया तथा अङ्गजः कामः स एवातङ्कः तेन लङ्घिता तत्प्रतिषेधो-ऽनङ्गजातङ्कलङ्घितां तां कालेनैव कठोरेण ग्रीष्मसमयेनैवोग्रेण ग्रस्तां किं नस्तदाशया ॥ १९ ॥

एतत् स्वयं व्याचष्टे किमसौ कामार्ता उत घर्मतप्ता इत्यनिश्चयकरं वचः उभयार्थावलम्बि युवानमाकुलीकर्तुमिति दूत्याह नर्मणा ॥ २० ॥

२. तदुदाहरति—पश्यामीति । अनिन्दितां ताम् अनङ्गजातङ्कलङ्घिताम्—अङ्गजः कामः, तज्जनितसन्तापक्रमणरहितां—केवलं कठोरेण ग्रीष्मकालेन ग्रस्तां पश्यामि जानामि ; किं नस्त्वदाशया—तव तस्यां किमभिलाषेण ? इत्येको वाक्यार्थः । अनङ्गः कामः, तज्जनितेन आतङ्केन सन्तापेन लङ्घितां आक्रान्तां, कठोरेण क्रूरेण, कालेन मृत्युना, दशमीमवस्थां प्रापितामुत्पश्यामि ; इत्यन्यो वाक्यार्थः । अनयोरर्थयोः बुद्धिपूर्वं प्रयुक्तत्वात् द्वयोरर्थयोः विवक्षितत्वेन ससंशयस्य गुणत्वम् ॥ २० ॥

१. अपक्रमलक्षणमाह—

**उद्देशानुगुणोऽर्थानामनूद्देशो न चेत् कृतः।**
**अपक्रमाभिधानं तं दोषमाचक्षते बुधाः ॥ २१ ॥**

उद्देशनिर्देशयोः यदि यथासंख्यं न कृतं ; तथा हि; न्याय्यमेतत् यथोद्देशः तथैव निर्देशः । तदतिलङ्घनमपक्रममुच्यते ॥ २१ ॥

२. अपक्रमं लक्षयति—उद्देशेति ॥ २१ ॥

१. तदुदाहरति—

**स्थितिनिर्माणसंहारहेतवो जगतामभी।**
**शम्भुनारायणाम्भोजयोनयः पालयन्तु वः ॥ २२ ॥**

जगतां स्थितिनिर्माणसंहाराणां हेतवः इत्युद्देशस्यानुगुणो निर्देशः एवं कर्तव्यो युक्तः स्यात् । नारायणाम्भोजयोनिशम्भव इति । प्र(व्य)-त्ययश्चात्र । ततोपक्रममेवंविधं न प्रयोक्तव्यम् ॥ २२ ॥

२. तदुदाहरति—स्थितीति । उद्देशक्रमस्य नारायणाम्भोजयोनि-शम्भवः इत्यनूद्देशे कर्तव्ये, शम्भुनारायणाम्भोजयोनयः इत्युक्तम् ; एतदप-क्रमम् ॥ २२ ॥

१. अस्यापवादमाह—

**यत्नः सम्बन्ध(न्धि)विज्ञानहेतुः कोऽपि कृतो यदि।**
**क्रमलंघनमप्याहुः सूरयो नैव दूषणम् ॥ २३ ॥**

सम्बन्धिनिर्णयहेतुः यदि कश्चित् प्रयत्नतः (त्नः) कृतः स्यात् तदा क्रमातिक्रमोऽपि न दोष इति सूरयो मन्यन्ते ॥ २३ ॥

२. अपक्रमस्य क्वचित् गुणत्वं लक्षयति—यत्न इति ॥ २३ ॥

१. तदुदाहरति—

**बन्धुत्यागस्तनुत्यागो देशत्याग इति त्रिषु।**
**आद्यन्तावायतक्लेशौ मध्यमः क्षणिकज्वरः ॥ २४ ॥**

बन्धुत्यागः, मरणं, देशत्यागो जन्मदेशादन्यदेशगमनम् ; आद्यन्तौ बन्धुत्यागदेशत्यागावायतक्लेशौ दीर्घदुःखौ । मध्यमो मरणं क्षणिकज्वरः क्षण-दुःख इत्येवं सम्बन्धिनिर्णयहेतुर्यत्नः कृतः आद्यन्ताविति तथा मध्यम इति। (त)त एवंविधप्रयोगो न दोषः ॥ २४ ॥

२. तदुदाहरति—बन्धुत्याग इति। बन्धुत्यागतनुत्यागदेशत्यागेषु उद्दिष्टेषु, द्वावायतक्लेशौ एकः क्षणिकज्वरः इत्युक्ते देहत्यागस्य सुमहत्त्वमिष्टं न सिद्ध्यति। आद्यन्तौ मध्यमः इत्युक्तेः उद्देशक्रमलङ्घनं न दोषः॥

१. शब्दहीनलक्षणमाह—

**शब्दहीनमनालक्ष्यलक्ष्यलक्षणपद्धतिः।**
**पदप्रयोगोऽशिष्टेष्टः शिष्टेष्टस्तु न दुष्यति॥ २५॥**

अनालक्ष्या लक्ष्यलक्षणयोः पद्धतिः स्थितिः यस्य तल्लक्ष्यलक्षणवर्जितमित्यर्थः॥ २५॥

२. शब्दहीनं लक्षयति—शब्देति। लक्षणोदाहरणेषु अदृष्टः शिष्टानामनभिमतश्च शब्दप्रयोगः शब्दहीनम्॥ २५॥

१. तदुदाहरति—

**अवते भवते बाहुर्महीमर्णवशक्वरीम्।**
**महाराजन्न जिज्ञासा नास्तीत्यासां गिरां रसः॥ २६॥**

समुद्रमेखलामिलां तव बाहुरवते। हे महा(राज)न् जिज्ञासा ज्ञातुमिच्छा न चास्ति अवत्युत नावतीति संशयाभावात्। इत्यासां (गिरां रसो नास्ति) एवंविधं न काव्ये प्रयोक्तव्यम्॥ २६॥

२. तदुदाहरति—अवत इति। महाराजन् भवते बाहुरर्णवशक्वरीं समुद्ररशनां महीमवते? न जिज्ञासा न ज्ञातुमिच्छा, संशयास्पदं न भवतीति यावत्। इत्यासां गिरां रसः, साधुत्वमिति यावत्, नास्ति। अत्र अवते इति परस्मैपदिनः आत्मनेपदं, भवते इति षष्ठ्यर्थे विवक्षिते चतुर्थी, अर्णवशक्वरीमिति 'नद्यृतश्च' इति कपि कर्तव्ये तदकरणं, महाराजन्निति समासान्तटजकरणं च, शब्दहीनोदाहरणानि॥ २६॥

१. प्रसिद्धलक्ष्यानुसारेण लक्षणस्य शिष्टैरिष्टत्वात् शिष्टं यत्तन्न दुष्यतीत्यस्यापवादमाह—

दक्षिणाद्रेरुपसरन्मारुतश्चूतपादपान् ।
कुरुते ललिताधूतप्रवालाङ्कुरशोभिनः ॥ २७ ॥

१. एतत्स्वयं व्याचष्टे—

इत्यादि शास्त्रमाहात्म्यदर्शनालसचेतसाम् ।
अपभाषणवद्भाति न च सौभाग्यमुज्झति ॥ २८ ॥

दक्षिणाद्रेरपसरन् मलयपर्वतादपगच्छन् मारुतः चूतपादपान् सहकारतरून् कुरुते विदधाति । ललिताधूतप्रवालाङ्कुरशोभिनः ललितं यथा भवत्येवमाधूता ये प्रवालाङ्कुराः तैः शोभन्ते इत्येवंशीलास्तानिति विधेयम् ॥

इत्यादिशास्त्रमाहात्म्यदर्शनालसां (-लसचेतसां) अपभाषणवदनभियुक्तानां व्याकरणविशेषलक्षणपरिज्ञानशून्यानामपशब्दवत् प्रतिभासते । न च तत्त्वतो विमृश्यमाण(न)वक(मप)भाषणम् । अतो न सौभाग्यं सुन्दरत्वमुज्झति त्यजति । तथा हि अपसरन्निति किल स(र्तेः) द्वा(धा)वादेशः प्राप्नोति । कुरुते इत्यत्र चात्मनेपदं न स्यात् । कर्त्रभिप्रायस्य क्रियाफलस्याभावात् । न चैतदपभाषणम् । सर्तेः जपे (शैघ्र्ये) वा(धा)वादेशो नाव(प)गमे । स्वरितञितः कर्त्रभिप्राये क्रियाफल इति भवत्यात्मनेपदम् । कर्त्रभिप्रायस्य क्रियाफलस्य विवक्षितत्वादिति ॥ २८ ॥

२. अदृष्टलक्ष्यलक्षणमार्गस्यापि पदप्रयोगस्य शिष्टेष्टत्वेन गुणत्वं दर्शयति—दक्षिणाद्रेरिति । सर्तिधातोः शतृप्रत्यये धावादेशस्य विहितत्वात् उपधावन्निति वक्तव्ये, शीघ्रगमनार्थे सर्तेः धावादेशः न मन्दगमने इति शिष्टेष्टत्वात्, उपसरन्निति साधुः । कुरुते इत्यात्मनेपदस्य कर्त्रभिप्रायक्रियाफलविहितत्वेऽपि, तस्य चेतनविषयत्वात्, अत्र कुसुमगन्धादिलाभ-

विवक्षया वा, आत्मनेपदं न दुष्यति । एतद्याचष्टे—इत्यादीति । लक्षण-मात्राभिज्ञानाम् अपशब्दवत् भाति; बहुलक्ष्यवेदिनां शिष्टानाम् अपशब्द-त्वेन नाभिमतम् ॥ २७-२८ ॥

१. यतिभ्रष्टलक्षणमाह—

**श्लोकेषु नियतस्थाने पदच्छेदं यतिं विदुः ।**
**तदपेतं यतिभ्रष्टं श्रवणोद्वेजनं यथा ॥ २९ ॥**

तदपेतं यतिरहितं .... यतिभ्रष्टमुच्यते । तच्च श्रवणोद्वेजनं कर्ण-कटुकम् । यथेत्युदाहरति ॥ २९ ॥

२. यतिभ्रष्टं लक्षयति—श्लोकेष्विति ॥ २९ ॥

**स्त्रीणां सङ्गीतविधिमयमादित्यवंश्यो नरेन्द्रः**
**पश्यत्यक्लिष्टरसमिह शिष्टैरमेत्यादि दुष्टम् ।**

१. शिष्टैः सह अयमादित्यवंशः सूर्यवंश्यो, नरेन्द्रः स्त्रीणां सङ्गीत-विधिं गीतनृत्यवाद्यविधिं अक्लिष्टरसमविनष्टशृङ्गारादिरसविशेषं पश्यतीत्यत्र मन्दाक्रान्तच्छन्दसी(सि) ॥ 'मन्दाक्रान्ता मभनततगा गुः समुद्रर्तुलोकैः' इति चतुष्षट्सप्तमस्थानविराम उक्तः । स च भज्यते । तत एवंविधं यतिभ्रष्टं वर्जनीयम् ॥ ३० ॥

यतिभ्रष्टं अभ्युपगतं आह—

**कार्याकार्याण्ययमविकलान्यागमेनैव पश्यन्**
**वश्यामुर्वीं वहति नृप इत्यस्ति चैवं प्रयोगः ॥ ३० ॥**

२. तदुदाहरति—स्त्रीणामिति । प्रथमपादे 'सङ्गी' इति चतुर्थाक्षरे पद-च्छेदे कर्तव्ये न कृतः ; 'अयमा' इति दशमे अक्षरे पदच्छेदो न कृतः । एवं द्वितीयपादेऽपि चतुर्षु दशसु चाक्षरेषु पदच्छेदो न कृतः । 'मन्दा-क्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्' इति चतुर्थदशमयोः अक्षरयोः

विहितयतेः अकरणात् यतिभ्रष्टत्वम्। पदच्छेदाभावस्य क्वचित् अदोषत्वं दर्शयति—कार्याकार्याणीति। 'स्वरसन्ध्यकृते प्रायो धातुभेदे तदिष्यते। नामभेदे च शेषेषु न दोष इति सूरयः॥' इति, कार्याकार्या इति, अविकल्प इति, नृप [इ]इत्यत्र च, यणसन्धिकृतत्वात् गुणत्वम् ॥ ३० ॥

१. स्वयमस्य समर्थनमाह—

लुप्ते पदान्ते शिष्टस्य पदत्वं निश्चितं यथा।
तथा सन्धिविरामान्तं पदमेवेति वर्ण्यते ॥ ३१ ॥

यथा दधीत्यत्र स्वमोर्नपुंसकादिति प्रथमैकवचने लुप्ते शिष्टस्य प्रतिरूपस्य (प्रातिपदिकस्य) सुप्तिङन्तं पदमिति पदत्वं निश्चितम्। एवं कार्याकार्याणीत्यत्र चा(आ)गमो (मे)नैवेत्यत्र च इको यणचीति यणादेशे कृते यकारस्य 'नटभार्यावद्व्यञ्जनानि भवन्ति' इति परेण सम्बन्धे पूर्वसन्धिविकारान्तं पदमिति समुद्रतुलोके(क)परिमाणमस्तीति न कर्णकटुकमाभातीति एवंविधमिष्टं शिष्टैरिति न दोषः ॥ ३१ ॥

२. गुणत्वमुपपादयति—लुप्त इति। राजन् इति नकारान्तस्य प्रातिपदिकस्य सुबन्तत्वेन पदत्वे सति नकारलोपेऽपि पदत्वं यथा भवति, तथा सन्धिविकारस्य यणः प्राक् आकारपर्यवसानस्य इकारपर्यवसानस्य च पदत्वम् ॥ ३१ ॥

१. सन्धिविकारान्तमपि श्रवणोद्वेजनं वर्जनीयमित्याह—

तथाऽपि कटु कर्णानां कवयो न प्रयुञ्जते।

यद्यपि सन्धिविकारान्तं पदमेवेत्युक्तं तथाऽपि यत् कर्णकटुकं तन्न प्रयोक्तव्यम्।

तदुदाहरति—

ध्वजिनी तस्य राज्ञः केतूदस्तजलदेत्यदः ॥ ३२ ॥

केतुशब्दस्य उदस्तशब्देन सहाकः सवर्णे दीर्घ इति सन्धिविधाने सन्धिविकारान्तं पदमिति पदत्वे तुकारस्य परेण सम्बन्धे ध्वजिनी तस्य राज्ञः के इति केपर्यन्तस्य कर्णकटुकत्वान्न पदत्वमिष्यत इति वर्जनीयम् ॥

२. स्वरसन्धिकृतत्वेऽपि क चित् श्रवणोद्वेगजनकत्वेन दोषत्वमित्याह—तथाऽपीति । तदुदाहरति—ध्वजिनीति । केतूदस्तेत्यत्र पादान्तयतेः स्वरसन्धिकृतत्वेऽपि श्रवणोद्वेजकत्वेन दोषत्वम् ॥ ३२ ॥

१. भिन्नवृत्तलक्षणमाह—

**वर्णानां न्यूनताधिक्ये गुरुलघ्वयथास्थितिः ।**
**यत्र तद्भिन्नवृत्तं स्यादेष दोषः सुनि(श्चि)न्दितः ॥ ३३ ॥**

वर्णानामकारादीनां यत्(यत्र)च्छन्दोनिबन्धने वर्णसंख्या न्यूनाऽधिका वा तथा गुरूणां लघूनां च यत्र व्यवायः तत् भिन्नवृत्तमित्युच्यते । एष च दोषः सुनिश्चितः । अस्यापवादो व्यर्थादेरिव नास्तीत्यर्थः । सुनिन्दित इति च पाठान्तरम् ॥ ३३ ॥

२. भिन्नवृत्तं लक्षयति—वर्णानामिति ॥ ३३ ॥

१. तत्र न्यूनाक्षरमुदाहरति—

**इन्दुपादाः शिशिराः स्पृशन्तीत्यूनवर्णता ।**

इन्दुपादाः शिशिराः स्पृशन्ति (इति) न्यूनवर्णता । 'इन्दुपादाः शिशिराः' इत्यत्र पादे सप्तैवाक्षराणि । अष्टाक्षरं (रा) चानुष्टुबिति ।

अधिकाक्षरमुदाहरति—

**सहकारस्य किसलयान्यार्द्राणीत्यधिकाक्षरम् ॥ ३४ ॥**

नवाक्षरःपादः ॥ ३४ ॥

२. वर्णानां न्यूनाधिक्ये उदाहरति—इन्द्विति ॥ ३४ ॥

१. गुरुलघु(घ्व)यथास्थितिमाह—

**कामेन बाणा निशाता विमुक्ता**
**मृगेक्षणास्स्वित्ययथागुरुत्वम्।**

पञ्चमं लघु सर्वत्रानुष्टुप्छन्दसि अषष्ठं (द्विचतुर्थ)पादयोः षष्ठं गुरु चतुर्ष्वपि पादेषु भवत्यक्षरमिति नियमः। इह तु कामेन बाणा इत्यः(त्यत्र) पञ्चमं गुरु। निशिता इत्यषष्ठं लघु। द्विचतुर्थयोरिति विशेषणात् प्रथम-तृतीययोः सप्तमं गुरु भवति। अत्र च प्रथमपादे सप्तमाक्षरस्य लघुत्वा-दयथागुरुत्वम्। उक्तमयथागुरुत्वम् ॥ (?)

१. अयथालघुत्वमाह—

**मदनबाणा निशिताः पतन्ति**
**वामेक्षणास्वित्ययथालघुत्वम् ॥ ३५ ॥**

इत्ययथालघुत्वम्। इ(शि) स्थाने गुरुणा भावितव्यम्। पञ्चमेन च लघुना। सप्तम(मं) न (द्वि)चतुर्थयोः पादयोर्लघु प्रथमतृतीययोश्च गुरु भवतीति लघु प्रयुक्तमिति अयथालघुत्वं निश्चिच्छन्दो (इति छन्दो-)दोषः ॥ ३५ ॥

२. गुरुलघ्वयथास्थिती उदाहरति—कामेनेति। निशाता इत्यत्र शा इति गुरुः अस्थानस्थः; 'इन्द्रवज्रा तौ जो गौ' इति तृतीयस्य गणस्य जगणत्वेन विहितत्वात्। मदन इत्यत्र द्वितीये गुरौ कर्तव्ये द इति लघुः अस्थानस्थः; 'उपेन्द्रवज्रा जतौ जो गौ' इति उपेन्द्रवज्रायाः प्रथमगणस्य जग-णत्वेन विहितत्वात् ॥ ३५ ॥

१. विसन्धिलक्षणमाह—

**न संहितां विवक्षामीत्यसन्धानं पदेषु यत्।**
**तद्विसन्धीति निर्दिष्टं न प्रगृह्यादिहेतुकम् ॥ ३६ ॥**

सन्धिर्वि(रवि)वक्षितो भवतीति पदयोः यदिस(दस)न्धानं तद्वि-सन्धीत्युच्यते । प्रगृह्यादिहेतु तद(-त्तुकं न) विसन्धि । तथा हि—

'ईदूदेद्द्विवचनं प्रगृह्यम् ।'

'अदसो मात् ।'

'निपात एकाजनाङ् ।'

अमी (म्री) इमौ यजस्वेति पूरू एतौ नृत्त्यजौ ।

पश्चित(-चेते) ओदनं कन्ये अमी उष्ट्रा भरक्षमाः ॥

आ एवं किल त(न्) । न्ये (हे) देवदत्ता इहाप्र (व्र)ज इति प्लुत-प्रगृह्याणां असन्धिः न विसन्धिता । 'प्लुतप्रगृह्या अची'ति सन्धिप्रतिषे-धात् न विसन्धिर्नाम दोषः ॥ ३६ ॥

२. विसन्धिं लक्षयति—नेति । शब्दशास्त्रे विवक्षावशात् सन्धि-रुक्त इति सन्धिं न विवक्षामीति पदेषु असन्धानं यत्, तत् विसन्धि-दोषत्वेन निर्दिष्टम् ॥ ३६ ॥

१. विसन्धिमुदाहरति—

**मेघानिलेन (चरता) अमुना अङ्गनागण्डमण्डले ।**
**लुप्तमुद्भेदि घर्माम्भो नभस्यसन्मनस्यपि ॥ ३७ ॥**

मन्दानिलेन दक्षिणमारुतेन चरता वाता अङ्गनागण्डमण्डले न केवलमुद्भेदि घर्माम्भो लुप्तं तथा असन्मनस्यपि या(आ)सु रात्रिषु घर्माम्भो ग्रीष्मजनितमम्भो लुप्तमित्यत्र मन्दानिलेन चरता अङ्गनेति अकः सवर्णदी-र्घत्वे द्वयोरकारस्वरयोरेक(क)तापत्तेः छन्दोभङ्गभयादसन्धानं विशि(श्लि)ष्ट-सन्धित्वाद्दोषः ॥ ३७ ॥

२. तदुदाहरति—मेघानिलेनेति । नभोमासि अमुना मेघानिलेन अङ्गनागण्डलेखासमुद्भेदि घर्माम्भो लुप्तम् ; मया सह एनां घटयता असन्-मनस्यपि घर्माम्भो लुप्तं, सन्तापो लुप्तः इत्यर्थः ॥ ३७ ॥

आधिव्याधिपरीताय अद्य श्वो वा विनाशिने ।
को हि नाम शरीराय धर्मापेतं समाचरेत् ॥ ३८ ॥

मानेर्ष्ये इह शीर्येते स्त्रीणां हिमऋतौ प्रिये ।
आसु रात्रिष्विति प्राज्ञैराम्नातं व्यस्तमीदृशम् ॥ ३९ ॥

१. आधिव्याधिपरीताय अद्य(द्य)श्वो वा विनाशिने इत्यादिकमपि विशिष्टमुदाहरणमूह्यम् । इति एवंप्रकारमन्यदपि प्राज्ञैर्विद्वद्भिराज्ञातं (न्य)ङ्क्ते न्यूनं दोषजातमिति ॥३८-३९ ॥

२. पादान्ते सन्धेरकरणं न दोषाय इति केचित् ; तदुदाहरति—आधिव्याधीति ॥

क्वचित् विसन्धिकस्यापि गुणत्वं दर्शितम्— न प्रगृह्यादीति ; तत् उदाहरति मानेर्ष्ये इति ॥ ३८-३९ ॥

१. 'देशकालकलालोकन्यायागमविरोधि च' इत्युक्तम् । तत्र देशादीनां षण्णामागमा(न्ता)नां लक्षणमाह—

देशोऽद्रिवनराष्ट्रादिः कालो रात्रिन्दिवर्तवः ।
नृत्यगीतप्रभृतयः कलाः कामार्थसंश्रयाः ॥ ४० ॥

चराचराणां भूतानां प्रवृत्तिर्लोकसंज्ञिता ।
हेतुविद्यात्मको न्यायः सस्मृतिः श्रुतिरागमः ॥ ४१ ॥

तेषु तेष्वयथारूढं यदि किञ्चित् प्रवर्तते ।
कवेः प्रमादाद्देशादिविरोधीत्येतदुच्यते ॥ ४२ ॥

देशो हि(द्रि)वनक ष्ट्र दिः । वनं सारदारुकार्योति यदुक्तं तत्र पर्वदविनियोगद्व्यहस्ति....जनपदमिति (?) रुवं(राष्ट्र)जनपदो ग्रामस्यादीयादि (?) आदिशब्देन कन्या(?) कथ्यते । कालः पुनः नक्तंदिवर्तवः नक्तं च दिवा च नक्तन्दिवं तच्च ऋतवश्चेति द्वन्द्वः । नक्तं रात्रिर्दिवा दिवसः

ऋतवः शरद्धेमन्तशिशिरवसन्तग्रीष्मवर्षाः षट् । नृत्तगीतप्रभृतयः तथा (कला·)। नृत्तं लास्यादि गीतं षड्जादि प्रभृतिशब्दोऽप्यादिवचनः । तेन गणितपत्रचित्रपत्रच्छेदादयः । कामोऽर्थश्च संश्रयो यासाम् । अथ वा कामार्थयोः संश्रया आधारभूत(ा) का(क)लाः ॥ ४० ॥

चराचराणां चेतनाचेतनानां प्राणिनां पृथिव्यादीनां च प्रवृत्तिस्थितिरूपं (?) लोकसंज्ञिता लोकशब्देनोच्यते । हेतुविद्यात्मको न्याय(:) हेतुविद्या मानप्रतिपादकः । तत्र यादिः (तर्कशास्त्रादिः) तदात्मको न्याय उच्यते । तत्र हि पञ्चावयवस्य हेतोः तथा त्रिरूपस्यैकरूपस्य च व्युत्पादनात् । प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ।

पक्षधर्मस्तदंशेन व्याप्तो हेतुस्त्रिधैव सः ।

पक्षधर्मव्यतिरेकः(?) त्रिरूपाणि च त्रीण्येव लिङ्गानि कार्य(र्यै)त्व(स्व)भावा-(वौ)ऽनुपलम्भश्चेति[?] वचनात् । तथा सन्ध्या(सांध्या)भावसम्बन्ध(ा)भावनियमनिर्णयैकलक्षणो हेतुः ।

यदुक्तम्—

अथा(र्था)नुपपत्त्येकलक्षणो हेतुरिष्यते, इति लक्षणम् । उपलक्षणं चैतत् हेतुविद्यात्मको न्याय इति । तेन समस्तसं(सां)ख्यादिसमनिय (समय?) तत्त्वप्रतिपादकविद्यात्मक इति ग्राह्यम् । स श्रुतिस्मृतिरागमः । श्रुतिः(ऋचः) सामानि यजूंषि अथर्ववेदेतिहासवेदौ च स्मृतयो मानवादयः अष्टादशधर्मशास्त्रसंहिताः सह श्रुतिस्मृतिभ्यां वर्तत इति[स]श्रुतिस्मृतिरागम उच्यते । त्रयी (तत्र?) प्रोक्तो धर्मः ॥ ४१ ॥

१. तेषु तेष्वयथारूढमप्रसिद्धं देशादिषु यदि किञ्चित् कविप्रमादात् देशाद्यपरिज्ञानात् प्रवर्तते तदा तद्देशादिविरोध्युच्यते । तच्च यत्नतः परिहर्तव्यम् ॥ ४२ ॥

२. देशादिविरोधं लक्षयति—देश इति पद्यत्रयेण ॥ ४०-४२ ॥

१. तत्र देशविरोधमुदाहरति—

**कर्पूरपादपामर्शसुरभिर्मलयानिलः ।**
**कलिङ्गवनसम्भूता मृगप्राया मतङ्गजाः ॥ ४३ ॥**

**चोलाः कालागरुश्यामकावेरीतीरभूमयः ।**
**इति देशविरोधिन्या वाचः प्रस्थानमीदृशम् ॥ ४४ ॥**

न खलु मलयदेशे सन्ति कर्पूरतरवः कथं कर्पूरपादपामर्शी मलयमारुतः । कटाह (?) द्वे(द्वी)पे हि कर्पूरतरुमाः (रवः) । न खलु कलिङ्गवनसम्भूता मृगप्रायाः करिणो भवन्ति । भद्रप्रायाः तत्र गजाः । तदुक्तम्—कलिङ्गाङ्गगज(ाः) श्रेष्ठाः' । तथा न चोलदेशे कालागरुतरवः (किंतु)नेपालदेशे । तत् कथं चोलानां निवासश्चोलाः कालागरुभिः श्यामाः कावेर्याः तीरभूमयः कथं (येषु ते) । अपरे पुनः 'बालकालागरुश्यामाः कावेरीतीरभूमयः' इति पठन्ति । तत्र बालकालागरुभिः कृष्णकालागरुभिः श्यामा इति व्याख्येयम् । इतीत्यादिना देशविरोध उपसंहृतः ॥ ४३-४४ ॥

२. देशविरोधमुदाहरति_कर्पूरेति द्वयेन । कर्पूरपादपाः द्वीपान्तरे मलये न जायन्ते । मृगो नाम अङ्गप्रत्यङ्गदीर्घाः, उच्चाः गजाः ; ते कलिङ्गवने न सम्भवन्ति । कालागरवश्च द्वीपान्तरे भवन्ति, न चोलेषु ॥४४॥

१. कालविरोधमाह—

**पद्मिनी नक्तमुन्निद्रा स्फुटत्यह्नि कुमुद्वती ।**
**मधुरुत्फुल्लनिचुलो निदाघो मेघदुर्दिनः ॥ ४५ ॥**

**श्रव्यहंसगिरो वर्षाः शरदो मत्तबर्हिणाः ।**
**हेमन्तो निर्मलादित्यः शिशिरः श्लाघ्यचन्दनः ॥ ४६ ॥**

न पद्मिनी नक्तं विकसति । किन्तु अह्नि । विना(नापि) कुमुद्वती दिने स्फुटति किं तु रात्रौ । तथा न वसन्ते कदम्बद्रुमाः पुष्यन्ति किं तु

वर्षासु। तथा न ग्रीष्मे मेघैः साध्यकारिणि (सान्धकाराणि) दिनानि, किं तु वर्षासु। तथा न वर्षासु हंसाः तां रक्ता(श्राव्य- अथ वा संरक्त-)ध्वनयः किं तु शरदि। तथा शरदि न माद्यन्ति मयूराः किं तु वर्षासु। तथा न हेमन्ते दिनकरो दीप्यते। तथा (दा) हि मन्दद्युतिरादित्यः। तथा न शिशिरे श्लाघ्यते चन्दनम्। अतिशीते शीतस्पर्शस्यानिष्टत्वात्। तथा(दा) हि कुङ्कुममभिलक्ष्य(ष्य)न्ति विलासिनः। तस्योष्णत्वात् ॥ ४५-४६ ॥

२. कालविरोधमुदाहरति–पद्मिनीति श्लोकद्वयेन ॥ ४५-४६ ॥

१. इतीत्यादिना कालविरोधमुपसंहृत्य कलाविरोधमाह—

**इति कालविरोधस्य दर्शिता गतिरीदृशी।**
**मार्गः कलाविरोधस्य मनागुद्दिश्यते यथा ॥ ४७ ॥**

**वीरशृङ्गारयोर्भावौ स्थायिनौ क्रोधविस्मयौ।**
**पूर्णसप्तस्वरः सोऽयं भिन्नमार्गः प्रवर्तते ॥ ४८ ॥**

**इत्थं कलाचतुष्षष्टिविरोधः साधु नीयताम्।**
**तस्याः कलापरिच्छेदे रूपमाविर्भविष्यति ॥ ४९ ॥**

न हि वीरशृङ्गारयोः स्थायिनौ भावौ क्रोधविस्मयौ। क्रोधो रौद्रस्य स्थायीभावः न वीरस्य रसस्य। तस्य हि उत्साहः स्थायीभावः। तथा न विस्मयः शृङ्गारस्य किं त्वद्भुतस्य। शृङ्गारस्य हि प्री(र)तिः स्थायीभावः। पूर्णाः सप्तस्वराः यस्यासौ पूर्णसप्तस्वरः भिन्नमार्गः प्रवर्तते। भिन्नमार्गश्चेत् कथं पूर्णसप्तस्वर इति ॥ ४८ ॥

इत्थं कलाचतुःषष्टौ अनेन प्रकारेण कलाचतुःषष्टौ, शास्त्रेण पाञ्चाल्यां वीरो (?) नृत्तगीतवाद्यादीनां श्रुवं गीथ (विरोधः ?) त्रुवं [साधुः!] शी(नी)यतामभ्यूह्यतामिति। तस्याः कलानां चतु....(ष्षष्टेः) कला(ः) परिच्छिद्यन्ते यत्र स कलापरिच्छेदो ग्रन्थस्तत्र रूपं स्वरूपमाविर्भविष्यतीति तत एव कलास्वरूपमवधारणीयमित्यर्थः ॥ ४९ ॥

२. कलाविरोधमुदाहरति—मार्ग इति सार्धद्वयेन । वीरस्य स्थायिभावः उत्साहः ; शृङ्गारस्य स्थायी रतिः ; क्रोधविस्मयौ वीरशृङ्गारयोः स्थायिनौ इति भरतलक्षणविरुद्धम् । भिन्नमार्गो नाम पञ्चषस्वरनिष्पन्नः । तस्य निषादादिसप्तस्वरपूर्णत्वं गीतलक्षणविरुद्धम् । कलापरिच्छेदे—चतुःषष्टिकलासंग्रहात्मकः काव्यादर्शस्य कश्चिदन्योऽपि परिच्छेदोऽस्तीत्याहुः; तत्र कलाचतुःषष्टिः द्रष्टव्या ॥ ४७-४९ ॥

१. लोकविरोधमाह—

**आधूतकेसरो हस्ती तीक्ष्णशृङ्गस्तुरङ्गमः ।**
**गुरुसारोऽयमेरण्डो निःसारः खदिरद्रुमः ॥ ५० ॥**

**इति लौकिक एवायं विरोधः सर्वगर्हितः ।**

आधूतानि केसराणि यस्यासावाधूतकेसरो हस्ती । न हस्तिनो लोके केसराणीति विदितम् । किं तु केसरी सिंह इति प्रसिद्धिः । तथा न तीक्ष्णशृङ्गस्तुरङ्गः किं तु गवादिः । तथा एरण्डो (न) गुरुसारो (ऽपि तु) निःसारः खदिरसार(द्रुम)श्च चन्दनसार इति (न निस्सारः) । तत्रैव सारस्य प्रसिद्धेः ।

इति लौकिक एवायं लोकप्रसिद्ध एवायं विरोधः । आधूतकेसरो हस्तीत्यादिः सर्वगर्हितः सर्वजननिन्दितः ॥ ५० ॥

२. लोकविरोधं दर्शयति—आधूतेति सार्धेन । केसरो नाम सिंहसटा ; स गजस्य न विद्यते । सर्वत्राप्यत्र लोकविरोधः स्पष्टः ॥ ५० ॥

१. न्यायविरोधमाह—

**विरोधो हेतुविद्यासु न्यायाख्यासु निदर्श्यते ॥ ५१ ॥**

**सत्यमेवाह सुगतः संस्कारानविनश्वरान् ।**
**तथा हि सा चकोराक्षी स्थितैवाद्यापि मे हृदि ॥ ५२ ॥**

१. न्यायविरोधस्योदाहरणान्तरं दर्शयति–

**कापिलैरसदुद्भूतिः स्थान एवोपवर्ण्यते ।**
**असतामेव दृश्यन्ते यस्मादस्माभिरुद्भवाः ॥ ५३ ॥**

**गतिर्न्यायविरोधस्य सैषा सर्वत्र दृश्यते ।**

सुगतो बुद्धो ब्रवीत्यवितथमेव संस्काराः रूपादिविषयवासनाश्चित्तधर्माः (अ)विनश्वराः अनित्याः (नित्याः) । तदेवार्थान्तरन्यासेन द्रढयति । तथा हि सा चकोराक्षी कान्ता स्थितैव अद्यापि तदोपलब्धाऽपि हृदि मन्मनसीत्यत्र न्यायविरोधः । यथा(तः) न खलु सुगतः संस्कारानविनश्वरानाम(ह) । सर्वभावानां क्षणावस्थायित्वाभ्युपगमात् । सर्वे भावाः क्षणिकाः सत्त्वा दित्येक(स्य) क्रमयौगपद्याभ्यामर्थक्रियाद्यनुपपत्ति(त्ते)रित्याद्य(नु)मानेन तथा ॥ ५२ ॥

कापिलैः कपिलमुनितनयैः (नयज्ञैः ?) सदुद्भूतिरसतः पदार्थस्याविद्यमानस्योद्भूतिरुत्पत्तिः स्थान एवोपवर्ण्यते युक्त्यैवाभिधीयते । तदेव अर्थान्तरन्यासेन (द्रढयति) । असतामेवाशिष्टानां दुर्जनानामेव, (न) सतां सज्जनानां दृश्यन्ते यस्माद्धेतोरस्माभिरुद्भव(ा): अभ्या(भ्यु)दया धनधयद (धनधान्यादय) । तथा असतामेवाविद्यमानानामेव कारणे कार्याणामुद्भवाः उत्पत्तयो दृश्यन्त इति न्यायविरोधः । (न) खलु सांख्यैरसत्कारणे कार्यमुत्पद्यत इत्युपगम्यते । 'असदकरणादुपादानग्रहणा'दि(त्यादि)ना सत्कार्यवादस्याभ्युपगतत्वात् ॥ ५३ ॥

एवमनेन क्रमेण गी(ग)तिः न्यायविरोधस्य सुगतादिसमयविरोधस्य । सैषा सर्वत्र समयान्तरेऽपि दृश्यताम् ॥

**अथागमविरोधस्य प्रस्थानमुपादिश्यते ॥ ५४ ॥**

अथ न्यायविरोधानन्तरं आगमविरोधस्य प्रस्थानं प्रक्रमो दर्शयिष्यते । मयेत्यध्याहार्यम् ॥ ५४ ॥

१. तथा हि—

अनाहिताग्नयोऽप्येते जातपुत्रा वितन्वते ।
विप्रा वैश्वानरीमिष्टिमक्लिष्टाचारभूषणाः ॥ ५५ ॥

द्वितीयमागम(विरोध)स्य (स्योदाहरणमाह)—

असावनुपनीतोऽपि वेदानधिजगे गुरोः ।
स्वभावशुद्धः स्फटिको न संस्कारमपेक्षते ॥ ५६ ॥

अनाहिताग्नयोऽप्येते अकृताग्निपरिग्रहा विप्राः अजातपुत्राः अत्र (अकृत)विवाहाः अनुत्पन्नपुत्राः वैश्वानरोऽग्निस्तस्येयं वैश्वानरी तामिष्टिमग्निष्टोमादिकां वितन्वते । अक्लिष्टः अनिन्दितः आचारो भूषणमलंक्रिया येषां ते तथाविधा इत्यागमविरोधः, यतो ब्राह्मण(णेन) कृतोपनयनेन वेदोऽध्येतव्यः । ततः कृतसमावर्तनेन 'वेदमधीत्य स्नाया'दिति वेदाध्ययनानन्तरं दारकर्म ; ततोऽग्निपरिग्रहः सभार्यस्य ; ततोऽग्निष्टोमादियजनेन (ने)नं अनाहिताग्नेरिति ॥ ५५ ॥

असावनुपनीतोऽप्यकृतमौञ्जीबन्धसंस्कारविधिरपि (वेदान्) गुरोरध्यापकात् अधिजगे अधीतवान् । निर्वृत्तोपनयनस्य त्वध्ययनेऽधिकारो नान्यथेत्यागमविरोधः ॥ ५६ ॥

२. आगमविरोधं लक्षयति—अथेति सार्धद्वयेन । अग्न्याधानात् प्राक् इष्टेः करणस्य अयोग्यत्वात् अनाहिताग्नयेऽपि वैश्वानरेष्टिं कुर्वत इति धर्मशास्त्रविरोधः । 'उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः' —इति उपनीतस्य वेदाध्ययनविधानात् अनुपनीतोऽपि वेदान् अधिजगे इति धर्मशास्त्रविरुद्धम् ॥ ५४-५६ ॥

१. कविकौशलमुदाहरति—

**विरोधः सकलोऽप्येव कदाचित् कविकौशलात्।**
**उत्क्रम्य दोषगणनां गुणवीथीं विगाहते॥ ५७॥**

विरोधः सकलोऽपि कविकौशलात् दोषगणनामुत्क्रम्य गुणवीथीं विगाहेयत् (ते) ॥ ५७ ॥

२. देशादिविरोधानां षण्णां कदाचित् कविकौशलात् गुणत्वं भवतीत्याह—**विरोध** इति ॥ ५७ ॥

**तस्य (राज्ञः)प्रभावेण तदा तदुद्यानानि जज्ञिरे।**
**आर्द्रांशुकप्रवालानामास्पदं सुरशाखिनाम्॥ ५८॥**

१. आर्द्रांशुकान्येव प्रवालानि किसलयानि येषां ते आर्द्रांशुकप्रवालाः तेषां सुरशाखिनां नन्दनोद्यानद्रुमाणां नमेरुसन्तानपारिजातकादीनामास्पदमिति देशविरोधोऽयम्। यतो न स्वर्गद्रुमा मनुष्यभूमौ सम्भवन्तीति। सदि (ए)षः देशविरोधो गुणगणनां कविकौशलाद्विगाहते। तस्य प्रभावेणेति कविकौशलम्। तस्य राज्ञो हरेरुद्यानक्रीडायाममरैरादी(नी)य स्वर्गद्रुमाः परितोषाय स्थाप्यन्ते यतोऽतो न देशविरोधः। यदि पुनस्तस्य राज्ञः प्रभावेणेति कविकौशलं न स्यात् तथा भवत्येव देशविरोध इति ॥ ५८ ॥

२. देशविरोधस्य गुणत्वं दर्शयति। सुरशाखिनां नन्दन एव स्थायिनां राजप्रभावात् भूमौ कथनं न विरुद्धम्; कृष्णेन हि द्वारवतीमानीतः कल्पतरुरिति श्रूयते ॥ ५८ ॥

**राज्ञां विनाशपिशुनश्चचार खरमारुतः।**
**धुन्वन् कदम्बरजसा सह सप्तच्छदोद्गमान्॥ ५९॥**

१. इति कालविरोधो यतः कदम्बर[ज]सा सह सम्भवो वर्षासु कदम्बरजो[?] न शरदि [दी]ति। तदेतत् कविकौशलान्न दुष्यति। एतत्

कविकौशलं राज्ञां विनाशे पिशुनः खरमारुतश्चण्ड उत्पातवातः शारदया-त्रापस्थाने क्षत्रियमरणसूचकस्तस्य कारा[आका]लिकतरुपुष्पसम्बन्धाद्व[त्] तद्धूम[न]नं सह (सम्भ)वत्येवेति न दोषः ॥ ५९ ॥

२. कालविरोधस्य गुणत्वं दर्शयति- राज्ञामिति । वर्षर्तुलक्षणेन कदम्बरजसा सह शरल्लक्षणसप्तच्छदकुसुमसम्मेलनस्य उत्पातरूपेण उक्तत्वात् कालविरोधो न दोषाय ॥ ५९ ॥

**दोलाभिप्रेरणत्रस्तवधूजनमुखोद्गतम् ।**
**कामिनो लयवैषम्याद्गेयं रागमवर्धयत् ॥ ६० ॥**

१. लयवैषम्यं चेद्गीतस्य तदा न रागहेतुत्वम् । आविषमलयं राग-हेतुः विषमलयं तु वैरस्यायेति कलाविरोधः । डोलाभिप्रेरणत्रस्तवधूजनमुखो-द्गतमिति कविकौशलान्न कलाविरोधः । तदुक्तं 'कामिनां स्खलितमप्यु-पकारि' ॥ ६० ॥

२. दोलेति । गीतस्य लयवैषम्यं न रागवर्धनम् ; दोलातिप्रेरण-कम्पवशेन गीतलयवैषम्यं कामिनो मनोहरत्वेन रागवर्धनमभूत् । इति कलाविरोधस्य गुणत्वम् ॥ ६० ॥

**ऐन्दवादर्चिषः कामी शिशिरं हव्यवाहनम् ।**
**अबलाविरहक्लेशविह्वलो गणयत्ययम् ॥ ६१ ॥**

१. इति लोकविरोधः । न खलु च[चा]न्द्रमसां [सं] धाम्नः सखी त्रि(धाम उष्णमिति] लोके विदितमिदं तत्[त] कामीति तथा अब-लाविरहक्लेशविह्वल इति यत् कविकौशलं ततो न लोकविरोधदोषः । तदुक्तं- 'दुःखिते मनसि सर्वमसह्यम्' । हव्यवाह....रापि (हव्यवाहनादपि) चन्द्रपादा विरहिणामसह्य(ह्याः) । मन्मथपीडितानां रम्येषु द्वेषादिति ॥

२. ऐन्दवादिति । चन्द्रकिरणानां दहनशीलत्वं प्रियाविरहक्लिष्टेन

बुद्ध्यते । इति लोकविरुद्धस्यापि गुणत्वम्—'दात्रप्रेम्णा सरसबिसिनीपत्रमात्रोत्तरीयस्ताम्यन्मूर्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान्'— इतिवत् ।।

**प्रमेयोऽप्यप्रमेयोऽसि सकलोऽप्यसि निष्कलः ।**
**एकस्त्वमप्यनेकोऽसि नमस्ते विश्वमूर्तये ॥ ६२ ॥**

इति न्यायविरोधः । न खलु प्रमेयाप्रमेययोः सकलनिष्कलयोः एकानेकयोः युगपदेकत्र धर्मिणि समावेश[वेशः] उपपत्तिमानेति । स एष विश्वमूर्तये नम इति विश्वमूर्तिवचनात् कविकौशलान्न दुष्यति । यतो विश्वमूर्तिरसावतो न न्यायविरोधः ।। ६२ ।।

२. न्यायविरुद्धस्य गुणत्वं दर्शयति–**प्रमेय** इति। प्रमेयस्य अप्रमेयत्वम् , सावयवस्य निरवयवत्वम्, एकस्य अनेकत्वं च, युक्तिविरुद्धमपि ईश्वरस्वभावस्य तथाविधत्वात् गुणीभवति ।। ६२ ।।

**पञ्चानां पाण्डुपुत्राणां पत्नी पाञ्चालपुत्रिका ।**
**सतीनामग्रणीश्चासीद्दैवो हि विधिरीदृशः ॥ ६३ ॥**

पञ्चानां पाण्डुपुत्राणां युधिष्ठिरादीनामेकैव द्रौपदी पत्नी । तथाऽपि यज्ञाप्रतापि [पतिव्रतेति] आ[गमविरोधः] दैवो विधिरीदृश इति कविकौशलान्न दुष्यति नियतिरीदृशी गुर्वाज्ञा वा इति दैवो विधिः । यदुक्तमाज्ञा गुरूणामविलङ्घनीयेति । एवमनुश्रूयते—

पुरा किल अर्जुनेन राधे [लक्ष्य]वेधात् परिणीता द्रौपदी मा [दी आ]नीय पृथायै प्रादर्शि, हे अम्ब मया लब्धेति । ततः किल कुन्त्याऽभिहितमेषा भिक्षा पञ्चभिरपि भुज्यतामिति ।। ६३ ।।

२. आगमविरुद्धस्य गुणत्वं दर्शयति—**पञ्चानाम्**िति । 'यन्नैकां रशनां द्वयो र्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्दते' इति अस्या बहुभर्तृत्वं आगमविरुद्धम् ; पञ्चेन्द्रोपाख्यानेन जन्मान्तरप्रदानेन द्रौपद्याः पञ्चभर्तृत्वमपि पातिव्रत्यमिति आगमविरोधस्य गुणत्वम् ।। ६३ ।।

**शब्दार्थालंक्रियाश्चित्रमार्गाः सुकरदुष्कराः ।**
**गुणा दोषाश्च काव्यानामिति संक्षिप्य दर्शिताः ॥ ६४ ॥**

२. प्रबन्धार्थमुपसंहरति—शब्देति । प्रथमद्वितीयपरिच्छेदोक्ताः शब्दार्थालंक्रियाः ; तृतीयपरिच्छेदोक्ताः यमकादिविषयसुकरदुष्करमार्गाः ; अथ अपार्थादयो दोषाः, तद्गुणीकरणेन उक्ता गुणाश्च ; सर्वेऽपि संक्षिप्य दर्शिताः ॥ ६४ ॥

१. व्युत्पन्नबुद्धिरित्यादिना प्रकृतमुपसंहरति—

**व्युत्पन्नबुद्धिरमुना विधिदर्शितेन**
**मार्गेण दोषगुणयोर्वशवर्तिनीभिः ।**
**वाग्भिः कृतानुसरणो मदिरेक्षणाभि-**
**र्धन्यो युवेव रमते लभते च कीर्तिम् ॥ ६५ ॥**

इत्याचार्यदण्डिनः कृतौ काव्यादर्शे दोषविभागो नाम
चतुर्थः परिच्छेदः ।

---

निगदेनैव व्याख्यातम् ॥ ६४ ॥

इति
वादिजङ्घालविरचितायां दण्डिकाव्यालङ्कारटीकायां
यमकप्रहेलिका काव्यदोषविभावना ॥

---

२. प्रबन्धस्य प्रयोजनं कथयति—व्युत्पन्नेति । एतत्प्रबन्धपरिशीलनफलं कवित्वम् । ततः स्वर्गवासित्वफला कीर्तिः ॥ ६५ ॥

साहित्यं साहित्यं येनेह प्राप्तमाप्ततस्तेन ।
काव्यादर्शव्याख्या विनिर्मिता साधु तरुणवाक्पतिना ॥

इति तरुणवाचस्पतिकृता काव्यादर्शव्याख्या सम्पूर्णा ॥

---

॥ श्रीः ॥

## काव्यादर्शव्याख्या

मार्जना ।

जातु मन्दायते यण्णास्रोतोवेगो न मे दया ।
ख्यापयन्निति तत्तीरमध्यास्ते रङ्गचन्द्रमाः ॥

विमतिरजश्छन्नतया यत्रास्फुटमर्थदर्शनं भवति ।
तत्र स्फुटत्वसिद्धयै काव्यादर्शस्य मार्जना क्रियते ॥

1 आदौ मङ्गलाचरणं करोति—चतुर्मुखेति । हंसीति वक्तव्ये हंसवधूरित्युक्तम् । वृत्तानुरोधात् । न चानयोरविशेषः । अम्भोजवने हंसः तस्य वधूरित्यविवक्षितार्थान्तरप्रतीतेः । वधूर्ममेत्यत्र मम वधूरिति प्रतीतिजननात् दोषं केचिदाहुः । मानसं मन एव मानसं सर इति श्लेषेणात्र रूपकम् । रमतां, न निर्बन्धात् क्लिष्टं सन्निधानमपेक्ष्यते । किन्तु यथा रतिः सम्पन्ना भवेत् तथा । तव चित्ते कथं तादृशा गुणा इति चेत् तान् समृद्धान् कृत्वा सन्निधाय रमतामिति विशिष्टमेव प्रार्थ्यते । नित्यं, न हि मानसे वर्षाभयम् । सर्वशुक्ला, 'या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता' इति ध्यानश्लोकरीत्या । अनेन मूर्तिविशेषस्यानुसन्धानम् । पूर्वार्धे महिमातिशयस्य । तृतीयपादे दयावात्सल्यादीनां भक्ताभीप्सितार्थसिद्धिकराणां गुणानाम् ।

श्लेषादीनां गुणानामनुप्रासस्य शब्दालङ्कारस्य रूपकश्लेषप्रेयस्सङ्करस्यार्थालङ्कारस्य च सत्त्वादत्र काव्यलक्षणसमन्वयो द्रष्टव्यः ।

2 चिकीर्षितं प्रतिजानीते—पूर्वशास्त्राणीति । पूर्वेषामाचार्याणां तैः कृतानि शास्त्राणि काव्यलक्षणग्रन्थाः तानि संहृत्य, प्रयोगान् लक्ष्यभूतासु महाकवीनां कृतिषु स्थितान् शब्दार्थव्यवहारानुपलक्ष्य अवधाय च

काव्यलक्षणं काव्यस्य लक्षणं असाधारणो धर्मः, काव्यत्वव्यपदेशयोग्यतापादकं यत् शब्दान्तरेभ्यो वैलक्षण्यं तद्धेतुभूतविविधालङ्काररूपः, तद्विषयो ग्रन्थोऽपि काव्यलक्षणं तदस्माभिः यथाशक्ति क्रियते निर्मीयते । काव्यलक्षणमस्माभिः क्रियत इति प्रतिज्ञा । अन्यत्सर्वमधिकारप्रतिपादकम् । अधिकारः सामर्थ्यं शक्तिः । सा द्विविधा स्वभावसिद्धा यत्नसाध्या च । तत्र प्रथमा तृतीयपादोक्ता । द्वितीया तु व्युत्पत्तिरूपा लक्ष्यलक्षणरूपविषयभेदात् द्वेधा । तत्र लक्ष्यविषया द्वितीयपादे उक्ता । लक्षणविषया तु प्रथमपादे । एवं चाधिकारप्रतिपादनपरत्वात 'संहृत्य' इत्यस्य 'पर्यालोच्य' इत्यर्थं केचिद्व्याख्यातार आहुः । 'सङ्कलय्य' इत्यर्थाभिधाने हि 'सङ्कलय्य निर्मीयते' इति विधेयकोटिप्रवेशः स्यात् नाधिकाररूपता । विधेयत्वमेवास्त्विति चेत् 'प्रयोगानुपलक्ष्य च' इत्यस्य तथात्वासम्भवेन अधिकारपरत्वावश्यम्भावात् प्रक्रमभङ्गः । अन्ये तु मन्यन्ते । गौणत्वावश्यम्भावे किमित्युपक्रमं बाधेमहि । उपसंहारस्य हि उपक्रमानुसारेण नेतव्यत्वं वाक्यविदां कुले श्रूयते । तस्मात् संहृत्येतत् 'समुच्चित्य' 'संक्षिप्य' इत्येव व्याख्याय 'उपलक्ष्य' इत्येतच्च दृष्ट्वा 'तत्तदुपात्तविशेषसहितं' इत्येतदवधि नीत्वा उभयोरपि विधेयकोटिप्रवेश एव वक्तुमुचित इति ।

3 अथ काव्यकरणप्रवृत्तिप्ररोचनाय काव्यप्रशंसां चिकीर्षन् वाग्रूपत्वात् काव्यस्य वाचमेव त्रिभिः प्रशंसति काव्यप्रशंसायामेव पर्यवसानं भविष्यतीति । तत्र प्रथमं सर्वलोकव्यवहारनिर्वर्तकत्वेन वाचं स्तौति—इहेति । सर्वथा, शक्यैः सर्वैरपि प्रकारैः परिशीलने क्रियमाण इत्यर्थः । ययाकयाचिदपि युक्त्या इदमन्यथा वक्तुं न शक्यत इति भावः । वाचामिति बहुवचनेन विविधभाषारूपेण कृत्स्नमहीमण्डलव्याप्तिकृतमानन्त्यमभिप्रेतम् । प्रसादेन, इच्छामात्रेण यथाभिमतप्रयोगानुगुणतयाऽवस्थानेन । लोकयात्रा, लोकस्य जनस्य उत्तरोत्तरकर्तव्यप्रवृत्तिः । व्यवहार इति यावत् । यद्वा

अस्माकं जनानां लोकयात्रा लोक्यन्तेऽनुभूयन्त इति लोकाः भोगाः तत्सिद्ध्यर्था प्रवृत्तिः । प्रवर्तते सम्पद्यते जायते । वाचामेवेत्येवकारेण एतदभावे लोकयात्राया अभाव इति व्यतिरेक उक्तः । प्रवृत्तिर्हि द्वेधा—पराभिप्रायेण वा स्वस्य; स्वाभिप्रायेण वा परस्य । उभयत्राप्यभिप्रायप्रकाशनायास्ति वागपेक्षेति । ननु स्वाभिप्रायेणैव स्वप्रवृत्तौ नास्ति तदपेक्षा । सत्यम् । किं तु तत्रापि इच्छारूपाभिप्रायहेतुभूतविज्ञानादिमूलतया मातापित्राद्युपदेशात्मकवागपेक्षित्वमवर्जनीयम् । मृगादिजातिषु हि सर्वथा वाङ्निरपेक्षत्वं प्रवृत्तेः सम्भाव्यते । न च ता इह विवक्षिताः । वाग्मिनामेव विवक्षितत्वात् । शिष्टानुशिष्टानां शिष्टानामपीति साध्वसाधुभेदेन शब्दानां विभागोऽभिप्रेतः । सोऽपि वाचः पण्डितपामरसाधारण्येन सर्वव्यवहारव्यापित्वव्यञ्जनाय ॥

4 एवं लोकव्यवहारनिर्वर्तकत्वेन वाक् स्तुता । अथ वेदव्यवहारनिर्वर्तकत्वेन तस्याः स्तुतिमभिसन्धाय आह इदमन्धमिति । भुवनत्रयं सर्पमनुष्यदेवलोकात्मकं भूर्भुवस्सुवरात्मकं वा अन्धं तमो जायेत गाढान्धकारनिरन्तरीकृतं भवेत् । शब्दाह्वयं वेदाभिधानं तदात्मकमित्यर्थः । 'शब्दप्रमाणका वयम्' इति हि वैदिकानामुद्घोषः । अर्थान्तराणां प्रकाशकं ज्योतिर्यथा स्वप्रकाशे इतरानपेक्षं तथा प्रत्यक्षादिप्रमाणान्तरदुरधिगमधर्माधर्मपरमप्रमाणभूतः शब्दः स्वप्रामाण्ये इतरानपेक्ष इति ज्योतिष्ट्वरूपणाभिप्रायः । आ संसारात् । प्रजानां जननमरणप्रबन्धः संसारः । इह तदुपक्रमो विवक्षितः । सृष्टिकाल इति यावत् । आ ततः आवृत्त्या आसंसारात् संसारावसानकालावधि प्रलयपर्यन्तमित्यर्थो ग्राह्यः । दीप्यते, मात्रामात्रस्यापि लोपमन्तरा रक्ष्यमाणत्वेन ईषदपि स्वरूपापायो नास्तीति दीप्तिः । नित्यानुवृत्तिपरया लटा नित्यत्वमस्य ज्योतिषो ज्ञाप्यते ।

एतदुक्तं भवति । धर्माधर्मयोः परमप्रमाणभूतो वेदः । तदभावे इदं कार्यं इदं अकार्यमिति विवेकहीनो लोकः, यथा ज्योतिःसाहाय्यं विना

गाढान्धकारे गच्छन् जनो गर्ते वा पतति अन्यां वा कांचिद्विपदं प्राप्नोति तथा अकार्याणि कुर्वन्ननर्थमृच्छेत् । आहुश्च—

भेत्तुं तमः सदसती प्रविवेक्तुमीशो

मानं प्रदीपमिव कारुणिको ददाति । इति ।

एवम्भूतस्य शब्दस्य वाग्रूपत्वात् वाक्प्रशस्तेति ।

5 ननु सत्यं शब्दस्य तावान् महिमा । किं तु केषांचिदेव तदधिगमेऽधिकार इति तेन रूपेण वाचः सर्वोपकारकत्वं नास्तीति चेत् तत्र 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति वेदार्थविशदीकरणोद्देशप्रवृत्तेतिहासरूपेण सर्वजनसाधारण्येन धर्माधर्मविवेकजननादस्ति वाचःसर्वोपकारकत्वमिति समाधानमभिसन्धायाह आदीति । कार्याकार्यविषये जनानां व्युत्पत्त्याधानहेतोः रामायणमहाभारतादिषु पुरातनानां सूर्यचन्द्रवंशभवानां राज्ञां चरितं निबध्यते, यच्छ्रवणेन अद्यापि सर्वो जनः सम्पन्नविवेको भवति । इदं कथमभविष्यत् यदि वाक् इतिहासपुराणात्मना परिणता नाभविष्यदिति ।

लोकव्यवहारस्था ग्रन्थरूपेति द्विविधा वाक् । द्वितीया नित्यानित्यग्रन्थरूपतया पुनर्द्विविधा । एवमाकारत्रयेण जगतः परमोपकारस्य भावयित्री वाक् यदि तत्त्रितयोपजीवनेन काव्यसंज्ञमाकारान्तरं परिगृह्य जनानां प्रकारान्तरेण उपकारविशेषभावनक्षमा तत्र बुद्धिमता केन अनादृतेन अप्रवृत्तेन च भवितुं युक्तमिति भावः ।

6 एवं काव्यकरणे प्रवृत्तिसिद्ध्यै प्ररोचना कृता । अथास्तु नामैवं प्रशस्तं काव्यम् । भवतस्तल्लक्षणकरणे प्रवृत्तिस्तु किमर्थेत्यत्र काव्यशोभाहानिकरदोषवर्गपरिहारफलव्युत्पत्तिविशेषसिद्ध्यर्था सेति समाधित्सन् प्रथमं तावद्दोषस्य वर्जनीयत्वमाह—गौरिति । वाचो गोशब्देनैवोपादानं तस्याः कामदुघात्वमुच्यमानं युक्तमेवेति व्यञ्जनाय । एवं साध्वसाधुविवेकविकल-

पशुतौल्यापादकतया वाचो दुष्प्रयोगो वर्जनीय इति ।

7 लोकव्यवहारसाधारण्येन दुष्प्रयोगस्य वर्जनीयत्वमुक्तं काव्यविषये द्रढयन्नाह–तदिति । तत्, तादृशं, कवेर्गोसाम्यापादकम् । कथञ्चन, आलस्येन वा सुजनसहृदया दोषं सन्तमपि न गणयिष्यन्तीति प्रत्ययेन वा अन्येन वा एवंविधेन हेतुना नोपेक्ष्यं उपेक्षां नार्हति । उपेक्षणे यथा एकेनापि श्वित्रेण दुष्टं सुन्दरमपि वपुरुपभोगानर्हं जुगुप्सावहं भवति तथा तत्काव्यमपि भवेदिति । ननु 'एको हि दोषो गुणसन्निपाते....' इति न्यायोऽत्र भविष्यतीति चेन्न । सन्नेव दोषः सुजनैः प्रायो न गृह्यत इत्येतावन्मात्रपरत्वात्तस्य, स्वरूपतो दुष्टत्वस्य बहुभिस्तथा गृह्यमाणत्वस्य चानिवारणात् । कथमन्यथा 'अयं कलङ्किनश्चन्द्रान्मुखचन्द्रोऽतिरिच्यते' इति केषांचिद्भणितमिति ।

8 दोषस्य वर्जनीयत्वमेवमुक्तम् । 'अयं दोषो नायम्, अत्र दोषो नात्र' इति शास्त्रजन्या व्युत्पत्तिर्येषां नास्ति तेषां तद्वर्जनमशक्यं कर्तुम् । तस्मात् शास्त्राद्गुणदोषव्युत्पत्तिरवश्यं सम्पाद्येति बोधयन्नाह–गुणदोषानिति । जिज्ञासितार्थबोधनपटुरभिज्ञकृतो ग्रन्थसन्दर्भः प्रकृते शास्त्रम् । विभजते विवेचयति । ननु बुद्धिमन्तः स्वयं परिश्रम्य विवेकं सम्पादयिष्यन्ति । किं शास्त्रेण । अत्रोच्यते । बुद्धिमन्तः सन्तः अन्धाः रूपभेदानुपलभन्ताम् । बुद्धिमत्त्वात् । बुद्धिमतामपि रूपोपलम्भे चक्षुरपेक्षानियम इति चेदत्रापि गुणदोषविवेकोपलम्भे चक्षुःस्थानीयशास्त्रापेक्षानियम इति ॥

9 एवंविधव्युत्पत्तिविशेषजनकत्वेन काव्यलक्षणग्रन्थाः सप्रयोजना इत्याह अत इति । विचित्रमार्गाणां, अलङ्कारप्रभेदानन्त्यात् उच्चावचप्रकाराणाम् । निर्माणप्रकारबोधकं काव्यलक्षणग्रन्थम् । तस्मान्ममापि तादृशग्रन्थविशेषनिर्माणप्रयत्न उचित इति भावः ।

10 वृत्त उपोद्घातः । अथ काव्यलक्षणमारब्धव्यम् । तत्र प्रथमं बुद्धिसौकर्याय निरूपयिष्यमाणार्थोद्देशं करोति तैरिति । शरीरं च दर्शितम् ।

अलङ्काराश्च दर्शिता इति योजना ।।

षष्ट्या शरीरं निर्णीतं शतषष्ट्या त्वलंकृतिः

इति भामहोक्तिरत्र बुद्धिस्था । ननु उपरि 'गुणा दोषाश्च दर्शिताः' । तेषामिहानिर्देशान्न्यूनतेति चेन्न । अलङ्कारोद्देशेनैव तेषामपि क्रोडीकृतत्वात् । 'काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते' । काव्यशोभा च यथा स्वभावोक्त्युपमानुप्रासादिभिः तथा वक्ष्यमाणदोषहानेन गुणोपादानेन च । तदुक्तं वामनेन—'काव्यं ग्राह्यमलङ्कारात्' । 'सौन्दर्यमलङ्कारः' । सदोषगुणालङ्कारहानोपादानाभ्याम्' । इति ।

'यच्च सन्ध्यङ्गवृत्त्यङ्गलक्षणाद्यागमान्तरे ।
व्यावर्णितमिदं चेष्टमलङ्कारतयैव नः ॥'

इति वदत आचार्यदण्डिनो मते किमिव नाम अलङ्कारे नान्तर्भविष्यतीति ।

सामान्यतः काव्यस्य शरीरं दर्शयति—शरीरमिति । 'शब्दार्थौ सहितौ काव्य'मिति पूर्वाचार्यैः शब्दार्थयोः समप्राधान्यमाश्रितम् । अत्र तु अर्थमुपसर्जनीकृत्य शब्दस्य प्राधान्यम् ।

11-112 अथ काव्यशरीरस्य भेदाः प्रदर्श्यन्ते । तत्र 'गद्यं पद्यं च तद् द्विधा' इति भामहेनोक्ते

पद्यं गद्यं च मिश्रं च तत् त्रिधैव व्यवस्थितम् ।

इति साभिनिवेशमयमाह ।

सर्गबन्धोऽभिनेयार्थं तथैवाख्यायिकाकथे ।
अनिबद्धं च काव्यादि तत् पुनः पञ्चधोच्यते ॥

इति भामहेन पुनः पृथक्प्रदर्शितेषु पञ्चसु प्रभेदेषु आद्यमन्त्यं च पद्यप्रभेदत्वेन तृतीयं चतुर्थं च गद्यप्रभेदत्वेन द्वितीयं मिश्रप्रभेदत्वेन चायं प्रतिपादयति । मिश्रभेदत्वेन चम्पूप्रदर्शनमप्यत्र अधिकम् । अभिनेयार्थमिति विशिष्य कस्यचित् प्रभेदस्य निर्देशेन तदितरस्य सर्वस्य अनभिनेयार्थत्वं

प्रतीयते । एतदनुरोधेन दण्डी प्रेक्ष्यार्थं श्रव्यमिति अभिनवं कञ्चन द्वेधा विभागं दर्शयति।

संस्कृतं प्राकृतं चैतदपभ्रंश इति त्रिधा ।

इति भामहीये भाषानुरोधिनि त्रिभागे स्थिते 'संस्कृतं प्राकृतं तथा। अपभ्रंशश्च मिश्रं च' इति मिश्रयोजनेन चातुर्विध्यमिहोच्यते ।

24 नायकेनेतरेण वेति । नायं विकल्पो भामहग्रन्थे दृश्यते । 'अन्येन चरितं तस्यां नायकेन तु नोच्यते' इति नायकेतरनियमस्यैवोक्तेः । तदिह विकल्पाभिधानं निर्मूलमिति वृत्तावबोचाम। एतदनुरोधेन तु 'नायकेनाथवोच्यते' इति किं भामहपाठः स्यादित्यभ्यूहं तदुपोद्धाते प्रादर्शयाम ।

25 अन्यो वक्तेति । चिन्त्यमिदम् । प्राचीनप्रसिद्ध्यनुरोधेन हि संज्ञानियमः । स्वचरिताख्यान एव आख्यायिकात्वं प्राचीनव्यवहारसिद्धम् । अन्यचरितकथने कथात्वमिति ।

33 'अन्वाख्याता महर्षिभिः' इति संस्कृतप्रशंसापरया उक्त्या पाणिन्याद्यनुशिष्टानि संस्कृतपदानि स्मृतानि । तैश्च प्राकृतपदस्मृतौ जातायां तत्प्रभेदानाह तद्भव इत्यादिना । एतेन संस्कृतभिन्ना तदुपजीव्य प्रवृत्ता आर्यजनभाषा प्राकृतमिति व्यञ्जितं भवति।

34 अथ प्राकृतभाषाभेदान् कांश्चिद्दर्शयन् तत्र प्रकृष्टसामान्यरूपेण द्वैविध्यमभिप्रेत्य प्रथमं प्रकृष्टं दर्शयति—महाराष्ट्रेति ।

35 सामान्यप्राकृतभेदान् दर्शयति–शौरसेनीति ।

36 अपभ्रंशव्यवहारस्य द्वेधा स्थितत्वात् विवेचनायाह–शास्त्रेष्विति ।

38 ननु कथायाः कथं भाषाविशेषो न दर्शित इत्यत्राह कथा हीति । यतः सर्वाभिर्भाषाभिः सा निबद्ध्यते अतस्तस्या भाषानियमो नास्ति । तस्मान्न दर्शित इति । सर्वभाषाभिरित्यत्र निदर्शनमाह–भूतेति ।

40 पुनः प्रकारान्तरेण द्वेधा शरीरभेदं दर्शयन्नाह–अस्तीति ।

51 माधुर्यं विभजति-वाचीति ।

52 श्रुतिसाम्यं अनुप्रास इति वाङ्माधुर्यं द्विविधमित्याह—यथेति ।

61 अनुप्रासो द्विविधः वर्णावृत्तिरूपः वर्णसङ्घातावृत्तिरूप इति । तत्र द्वितीयस्य यमकमिति नाम । तदाह आवृत्तिमिति ।

103 एवं बहुधा काव्यशरीरं निरूपितम् । एवंविधकाव्यकरणे सर्वैः यत्नः कर्तव्य इति प्रतिबोधयन् तद्धटितां काव्यसामग्रीमाह नैसर्गिकीति । अदृष्टकारणाधीनेत्यर्थः ।

104 निर्दिष्टे त्रितये आद्याया नैसर्गिक्याः प्रतिभाया इदानीं यत्नेन संपादयितुमशक्यत्वेऽपि तदन्यद्वितये प्रवृत्तिरपि फलाविनाभाविनीत्याह न विद्यत इति । 'पूर्ववासनागुणानुबन्धी'ति अन्यत्र दृष्टः पाठः समञ्जसः ।

105 'कमप्यनुग्रहं' इत्यत्र आशयं विवृणोति तदिति । कथञ्चित्कवित्वं यथा भवेत्तथा वा, लोकोत्तरकाव्यरसास्वादसामर्थ्यरूपं वैदग्ध्यं यथा सम्पद्येत तथा वा तदनुग्रहोऽवश्यम्भावीति ।

---

चोरो यथा वस्तु यथा पतिं स्त्री निर्जीविकः कर्म यथा मनुष्यः ।
प्राचां बुधानां वचनेषु भावं तथा विचिन्वीत निविष्टबुद्धिः ॥

---

## अथ द्वितीयः परिच्छेदः ।

---

1 तैः शरीरं च काव्यानामलङ्काराश्च दर्शिताः ।

इति पूर्वं निरूपणीयतया निर्दिष्टं यद् द्वयं तत्र आद्यं शरीरं

शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली

इत्युपक्रम्य निरूपितम् । अथेदानीमलङ्कारा निरूपणीयाः । तेषां सामान्यलक्षणमाह काव्येति ।

ननु आहत्य कत्यलङ्काराः काव्येषु स्थिताः । तन्निरूपणप्रवृत्तेन हि सर्वे ते निरूपणीयाः । अत्रोच्यते । कस्तान् कार्त्स्न्येन वक्ष्यति । एतावन्तोऽलङ्काराः नातोऽन्यः कश्चिदलङ्कारोऽस्तीति कोऽवधारयितुमीष्टे । न कश्चिदिति । कुत एतत् । यतः 'ते अलङ्कारा अद्यापि पूर्वैर्बहुभिराचार्यैर्बहुष्वलङ्कारेषु लक्षितेष्वपि विकल्प्यन्ते ततो विलक्षणविविधभेदवत्तया कल्प्यन्ते प्रतिपद्यन्ते । भरतमुनिना हि त्रिचतुरा एवालङ्कारा निरदिश्यन्त । ततः परं कैश्चित् तत्र पञ्चषा योजिताः । पुनरन्यैरन्ये कतिपये । एवमुत्तरोत्तरं वर्धमानैव काव्यालङ्कारसंख्या दृश्यते । तत्र कथमियत्तापरिच्छेदः सुकर इति ।

इदमत्र विवक्षितम् । सम्भवत्सर्वालङ्कारनिरूपणमिह नोद्देश्यम् । तस्मादर्वाचीनदृष्टालङ्कारविशेषानिरूपणकृतं न्यूनत्वं नोद्भावनीयमिति ।

2 किन्तर्हि उद्देश्यमित्यत्राह–किन्त्विति । भामहान्तैः प्राचीनैरालङ्कारिकैर्ये अलङ्कारा दर्शिताः तेषां प्रत्येकं भूयिष्ठावान्तरभेदवत्त्वप्रदर्शनमात्रमुद्देश्यमिति भावः । विकल्पानां बीजं तत्तदवान्तरभेदव्यापि सामान्यस्वरूपम् । तदेव परिसंस्कर्तुं तदेव बीजमुप्तं चिन्ताजलेन सिक्तं यथा उद्भिन्नमङ्कुरितं क्रमेण तद्विशेषात्मकपल्लवमुकुलप्रसूनकाण्डप्रकाण्डसमृद्धं सम्पद्येत तथा कर्तुम् ।

प्राचीनैरुक्तानामलङ्काराणामवान्तरभेदपरम्पराप्रदर्शनमात्रेऽस्माकं संरम्भः न तु तदनुक्ताभिनवालङ्कारान्तरप्रदर्शन इत्युक्तं भवति ।

3 ननु काव्यशोभाकरत्वमलङ्कारलक्षणमुक्तम् । तथा सति पूर्वोक्ताः श्लेषप्रसादादयोऽपि अलङ्कारा इति प्राप्नोति । इष्टमेवैतत्; तेऽप्यलङ्कारा एव; ततः किमिति चेत् इदं ततो भवति यत्ते इहैव निरूपणीयाः न तु काव्यशरीरनिरूपणपरे पूर्वपरिच्छेद इति । अत्राह काश्चिदिति । श्लेषादिविशिष्टं वैदर्भसम्मतं काव्यशरीरम् । तद्रहितं तु गौडसम्मतमिति शरीर-

भेदनिरूपणोपयोगितया तेषां तत्र निरूपणम्। एवं च पूर्वपरिच्छेदे तन्निरूपणस्य काव्यशरीरभेदनिरूपण एव पर्यवसितत्वात् न तत्र तेषामसङ्गतत्वम्। गौडवैदर्भमार्गद्वयसाधारणालङ्कारवर्गनिरूपणस्यैव एतत्परिच्छेदार्थत्वाच्च निरूपणीयानिरूपणकृता न्यूनताऽत्र नास्तीति वेदितव्यमिति।

8 साक्षात्, वक्रोक्तिं विना ऋजुमार्गेण। उपमादिर्हि सर्वा वक्रोक्तिरूपाऽलंकृतिः। इयं तु न तथेति। विवृण्वती स्फुटं बोधयन्ती स्वभावोक्तिश्च जातिश्चेत्यभिहिताऽलंकृतिः आद्या 'स्वभावाख्यानमुपमा' इत्यत्र प्रथमनिर्दिष्टा। सा यथा।

15 साक्षात् कण्ठोक्त्या।

16 प्रतीयमानः गम्यः न शब्दोपात्तः एकधर्मः तुल्यधर्मः यस्याः सा।

17 अन्यच्च तादृशं पद्मतुल्यं अस्ति चेत् तत् तत्कारि मुखान्वयकारि अस्तु।

51 मेधाविनाम्ना प्राचीनेन आलङ्कारिकेण उपमादोषाः सप्त कथिताः। तत्र चतुरो निरस्य इतरान् भामहोऽङ्गीकरोति। एषामपि दोषत्वं न नियतमित्याह न लिङ्गेति। विस्तरो भामहवृत्तौ तदुपोद्घाते च।

61 समासश्चेति। तेन 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति सूत्रविहितकर्मधारयस्थले नोपमा किन्तु रूपकमेवेति स्पष्टम्।

66 तिरोभूतभेदा इवादिशब्दरहिता। बाहुलतेति। बाहुर्लतेव इतीवशब्दप्रयोगे उपमा। अत्र समासो नैव भवति। यदा पुनस्तं परित्यज्य बाहौ लतात्वमारोप्य 'बाहुर्लता' इत्यभिधीयते तदा रूपकं भवति। किं तु समासाकरणाद् व्यस्तरूपकम्। यदा तु 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यनुशिष्टत्वात् समासं कृत्वा 'बाहुलता' इति प्रयुज्यते तदा समस्तरूपकं भवति। न तु बाहुलतेति समासस्थले कथमप्युपमाया अवकाश इति दण्डिपर्यन्तानां प्राचामालङ्कारिकाणां मतं लक्ष्यते। वामनस्तु

व्यासस्थल एव रूपकम् । समासस्थले उपमितसमासत्वात् उपमैवेति मन्यत इति भाति । अर्वाञ्चः पुनः बाहुर्लतेवेति विग्रहे यद्यप्युपमैव । तथाऽपि बाहुरेव लतेति विगृह्य रूपकमपि सुवचमित्याहुः । अत्र विमर्शविस्तरोऽन्यत्र करिष्यते ।

72 नान्यथाकृतमिति । मुखे चन्द्रपद्मादियत्किञ्चित्पदार्थत्वेन रूपणं सर्वथाऽविवक्षितत्वान्न कृतमिति भावः । तेनात्र केषांचिद्व्याख्यातॄणां मुखे आरोपणीयोपमानविशेषान्वेषणप्रयासो व्यर्थ इति ज्ञेयम् ।

76 अत्र द्विप्रभृत्यङ्गरूपके । योगायोगौ आरोप्यमाणयोर्मिथः सम्बन्धासम्बन्धौ ।

87 नन्वत्र राजहंसोपभोगार्हत्वादिसाधारणधर्मप्रयोगात् कथं वक्त्राम्बुजमित्यत्र उपमितसमासो भवितुमर्हतीति चेत्—अत्राहुः । शब्दोपात्तराजहंसोपभोगार्हत्वादिधर्मव्यतिरिक्तेनैव केनचिद्धर्मेण वक्त्राम्बुजयोरुपमानोपमेयभावस्य समासावसरे विवक्षितत्वान्न दोषः । एवमेव हि 'भाष्याब्धिः क्वातिगम्भीरः' इति कैयटोक्तिसमर्थनं क्रियत इति । अन्ये तु प्राहुः । 'सामान्याप्रयोगे' इति सूत्रांशस्य साधारणधर्माप्रयोग इति व्याख्यानमव्याख्यानम् । सादृश्यवाचकस्य इवादेरप्रयोग इति तु तत्र वस्तुतो व्याख्यातव्यमिति न किञ्चित्सङ्कटमिति ।

88 सादृश्यं सिद्धवत्कृत्य समासे उत्तरपदवाच्यतया उपमानं प्रधानीकृत्य यत्र व्यवहारः तत्र रूपकम् । यत्र तु सादृश्यबोधनाय पृथगुपमानमुपादाय तद्भेद उपमेये बोध्यते तत्र उपमारूपकमिति भामहाभिप्रायः प्रतीयते । दण्डिनस्तु रूपकेण गौणमप्रकृतमर्थं सम्पाद्य तस्य मुख्यस्य च साधर्म्यनिबन्धने उपमारूपकमिति मतम् । वामनस्य पुनः 'चतुर्दशलोकवल्लिकन्दः' इत्यादौ उपमितसमासत्वेनावश्यंभाविनीं लोकवल्लीत्याद्युपमामुपजीव्य कन्दादिरूपकस्य प्रवृत्तेरुपमारूपकमिति ।

93 मुखं पङ्कजं भ्रूर्लतेति प्रथममेकं रूपकं कृत्वा पुनः मुखपङ्कजं रङ्गं भ्रूलता नर्तकीति रूपकान्तरकरणात् रूपकरूपकम्। रङ्गनर्तकीरूपकयोरन्योऽन्यमुपजीव्योपजीवकभावाच्च तथा।

96 अतः यद्दर्शितं तद् दिङ्मात्रमिति योजना।

98 स एव वीरुधां जीर्णपर्णमात्रहार्येव। न तु अजीर्णपत्रहरणसमर्थः। स एव सुदृढचङ्क्रमितमपि मानिनीनां मानं भञ्जयितुमीष्ट इति विस्मयते। एवं च 'दक्षिणः पवन' इत्यस्यैव उत्तरवाक्येऽपि कर्तृत्वेनान्वयात् दीपकत्वं सुस्थम्।

106 कृतमिति चतुर्थवाक्यस्थं पूर्ववाक्यत्रयेऽन्वितम्।

145-6 गन्ता गमनपरो भवसि चेत् तूर्णं गच्छ। पुरा यान्ति यास्यन्ति। मन्मरणेन आर्तानां बन्धूनां रोदनध्वनौ त्वत्कर्णपतिते सति ततः परं त्वया गन्तुं न शक्येत। अतस्तच्छ्रवणात् पूर्वमेव त्वं प्रस्थाय गच्छेति गमनप्रतिबन्धकपरिहारोपायनिवेदनात् साचिव्यम्।

147 मत्प्रियैषिणी वाणी मुखान्निर्गच्छति।

149 प्रेम्णः सकाशे ते प्रयाणं ब्रूहि न मम सकाशे। कुतः। प्रेम्णो यदिष्टं तदेव ममेष्टम्। न स्वातन्त्र्येण ममेष्टं किञ्चिदस्ति।

170 विपर्ययः। अव्यवहितपूर्वनिर्दिष्टस्य युक्तायुक्तस्य विपर्ययः अयुक्तयुक्तरूपः।

173 पर्योमुगपेक्षया महतां सामान्यरूपत्वेऽपि नीचव्यावृत्तत्वेन पूर्ववद्विश्वव्यापित्वविरहाद्विशेषस्थत्वम्।

174 प्रियः प्रीतिकरः।

176 विरहतप्तः कश्चिद् 'कटुर्भवति कर्णस्य' इत्यन्तमभिधाय तत्समर्थनार्थं पुनराह—'कामिनां पापमीदृश'मिति। ईदृशं, कर्मरुजाकारित्वेन अयुक्तकारित्वापादकम्। अकामानां हि श्रवणानन्दकार्येव स भवति न कटुः।

तस्मात् कामिनामेव पापमीदृशम् ।

177 'तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-

र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।'

इत्येवंरीत्या शीतलान्यपि वस्तूनि तापकारितयाऽग्निप्रतिनिधिरूपाणि गृहीत्वा विरहसन्तप्त आह—हुताशनप्रतिनिधिरिति ।

181 धैर्यं अविकृतस्वरूपं स्थैर्यं निर्भीकत्वं च । लावण्यं लवणमयत्वं सौन्दर्यातिशयश्च । गाम्भीर्यं अक्षोभ्यत्वम् ।

190 '....तदुपाश्रयम्' 'इति' मिदेति इतिशब्दाध्याहारेणान्वयः ।

192 पूर्वस्मिन्निति । तत्र जलसंरोहि त्वदुपाश्रयमिति अधिकरणभेदेन भेदमात्रमुक्तम् । अनन्तरं तु 'मृगेक्षण' 'तव नयनद्वन्द्व'मिति पूर्ववद्भेदम-भिधाय मृगेक्षणेऽविद्यमानस्य भ्रूविलासादिगुणस्य युष्मदर्थकान्तानयनद्वन्द्वे सत्त्वाभिधानादाधिक्यम् ।

195-6 अस्मिन्,'चन्द्रोऽयमम्बरोत्तंस' इत्यव्यवहितपूर्वश्लोके । प्रतिलोम-क्रमेण समन्वयस्य चिकीर्षितत्वात् अत्र उत्तरार्धोक्तयोरपि वियदम्भसोः प्रथमं ग्रहणम् । पश्चात् पूर्वार्धोक्तयोश्चन्द्रहंसयोः । भेदः कृत इति । वियद-म्भसोर्नक्षत्रकुमुदरूपाधेयभेदाद् भेदः । चन्द्रहंसयोर्वियदम्भोरूपाधार-भेदात् । अत एवात्रोदाहरणद्वयप्रदर्शनोपपत्तिः ।

पूर्वत्र 'त्वन्मुखं' इत्येकान्तरितपूर्वश्लोके शब्दवत् शब्दविशिष्टं शब्देनाभिहितमित्यर्थः । उभयत्रापि श्लोकद्वयेऽपि । भृङ्गनेत्रादि एव-मादि भेदकं वस्तु । तुल्यं परस्परसदृशम् । मुखपुण्डरीकयोः चन्द्रहंसयोः नभःपयसोश्च श्लोकद्वयोक्तयोर्भेदके ये भृङ्गनेत्रे अम्बरतोये नक्षत्रकुमुदे च ते मिथः सदृशे इति सदृशव्यतिरेकवसमन्वयो द्रष्टव्य इति । पुनरनुलोम-क्रमविवक्षया भृङ्गनेत्रोपादानम् ।

209-12 अप्रस्तुतं निबध्य तेन प्रस्तुतबोधने समासोक्तिः । प्रस्तुत-

निन्दापर्यवसायिन्या अप्रस्तुतस्तुतेरत्र विरहान्नाप्रस्तुतप्रशंसा । प्रकृतस्य शब्देनानुपादानान्न रूपकं व्यतिरेको वा । नवीनसम्मतरूपकातिशयोक्तेर्दण्डिनाऽनङ्गीकारान्नातिशयोक्तिरित्याद्यूह्यम् ।

226 मतान्तरनिराकरणाय स्वमतमाह इतीदमपीति ।

227 निराकरणीयं [illegible] केषांचिदिति उपमेति पक्षो निराकरणीय इति ।

आप्तग्रन्थविरोधात् युक्तिविरोधाच्चेति द्वेधा निराकरणं भवति । तत्र प्रथमं ग्रन्थविरोधमाह नोपमानमिति ।

228-9 अथ युक्तिविरोधः । तत्र विकल्पनीयम् । तमस्तावदुपमेयम् । तस्य किमुपमानम् । लिम्पतिपदवाच्या लेपनक्रिया वा लेपनकर्ता वेति । तत्र आद्यः पक्षस्तावन्न युज्यते । साधारणधर्माभावात् । तथा हि । किं लेपनक्रियैव । साधारणधर्मोऽस्तु । अथ तद्व्यतिरिक्तः कश्चन । न द्वितीयः । तद्व्यतिरिक्तस्य कस्यचिद्धर्मस्यादर्शनात् । तदाह- लिम्पतेस्तमसश्चासाविति । क इति क्षेपे । को नु समीक्ष्यते न कोऽपि दृश्यत इत्यर्थः । नाद्यः । एकस्या एव लेपनक्रियाया उपमानत्वस्य साधारणधर्मत्वस्य चानुपपत्तेः । तदाह यदि लेपनमेवेति श्लोकेन । लेपनक्रियायास्तमस्यविद्यमानत्वेन साधारणधर्मत्वमसम्भावि । ततोऽपि प्रकटतरत्वात्तु इदं दूषणमुक्तमिति विभाव्यम् ।

230 अथास्तु लेपनकर्ता उपमानमिति द्वितीयः पक्षः । लिम्पतीत्यत्र हि प्रत्ययेन कर्ता उच्यते । 'लः कर्मणि च' इत्यनुशासनात् । स उपमानम् । तमो लेपनकर्त्रैव भवतीति । अत्रोच्यते । अयमपि पक्षो न युज्यते । तथा हि । प्रत्ययेनाभिधीयमानः कर्ता प्रकृतिभूतधात्वभिहितक्रियायां न्यग्भूतः विशेषणीभूतः । 'भावप्रधानमाख्यात'मिति तिङन्ते प्रकृत्यर्थस्यैव प्राधान्यानुशासनात् । प्रत्ययार्थकारकप्राधान्यस्य 'सत्त्वप्रधानानि नामानी'ति कृदन्तमात्रविषयत्वात् । तथा च 'किञ्चित्कर्तृकं लेपनं' इति लिम्पतिपदस्यार्थो

भवति । तत्र विशेष्यस्य लेपनस्यैव इवपदार्थेऽन्वयो भवेत् , न तस्मिन् विशेषणत्वेनान्वितस्य कर्तुरिति । ननु कर्तुः क्रियायां विशेषणत्वेनान्वयं सिद्धवत्कृत्य इयदुक्तम् । स एव तु नाङ्गीक्रियते । प्रत्ययेनाभिहितस्य कर्तुरपेक्षानुरोधेन इवपदार्थ एवान्वयाङ्गीकारात् । भावप्रधानमित्यस्य औत्सर्गिकस्य एवमादिस्थलविशेषव्यतिरिक्तविषयत्वस्य वक्तुं शक्यत्वादिति चेत् तन्न । स हि प्रत्ययोपात्तः कर्ता स्वक्रियामाधनव्यग्रः स्वक्रिया स्वपदोपात्त-लेपनक्रिया तस्याः साधने निराकांक्षीकरणे व्यग्रः शीघ्रप्रवृत्तः अन्यत् पदा-न्तरोपात्तं यत् किमप्यर्थान्तरं अपेक्षितुं आकांक्षितुं नालं न समर्थम् । क्रिया तावत् स्वार्थतया कारकाण्यपेक्षते । कारकाण्यपि स्वोपकारप्रतीक्षां क्रियाम् । एवं परस्पराकांक्षिणोः क्रियाकारकयोरेकेनैव पदेनोपस्थितौ झटिति तयोर्यथायोगमन्वयो भवति । तथा च कर्तृकारकस्य शीघ्रोपस्थित-क्रियान्वयेनैव विशेष्याकांक्षाया निवृत्तत्वात् अन्यत्र आकांक्षाघटिताया अन्वयबोधसामग्र्या विरहेण इवपदार्थेनान्वयो न युज्यत इति ।

231 अथैवमुच्यते–लेपनकर्तैव उपमानम् । न चोक्तरीत्या कर्तुरिवा-र्थान्वयस्यानुपपन्नत्वात् तदयुक्तमिति वाच्यम् । प्रकारान्तरेण तदुपपादन-सम्भवात् । तथा हि । यः सः इति यच्छब्दतच्छब्दावध्याहियेते । तमः यः पुरुषो लिम्पति स इव भवतीति वाक्यं निष्पद्येत । तत्र यत्कर्तृक-लेपनक्रियेति कर्तुर्विशेषणत्वेनान्वयेऽपि प्रथमं यच्छब्देन तं निर्दिश्य तत-स्तच्छब्देन प्रतिनिर्दिश्य इवशब्दार्थान्वयस्य सम्पादितत्वेन न काचिदनुपप-त्तिरिति । –अत्राह यो लिम्पतीति । अमुनेति तेनेत्यस्य स्थाने । इत्यपि शंसतः इति वदतो मतेऽपि । अङ्गानीति 'लिम्पतीव तमोऽङ्गानि' इत्यत्र अङ्गानीति पदं न सम्बद्धं अनन्वितं भवेत् । ननु कथमनन्वितं भवेत् ? 'योऽङ्गानि लिम्पति तेन तुल्यं तमः' इति ह्यन्वयः सुवच इति चेन्न । 'लिम्पतीव तमोऽङ्गानि' इति तमःपदोत्तरं अङ्गानीति पदश्रवणात् तमसो

यस्यां क्रियायां कर्तृत्वेनान्वयः तस्यामेव क्रियायां अङ्गानां कर्मत्वेनान्वय-प्रतीतेः तमोव्यतिरिक्तकर्तृकायां लेपनक्रियायां तदन्वयस्य वक्तुमयुक्तत्वात् । हठादेवान्वयकल्पने तस्यैव दोषत्वात् ।

पूर्वं लेपनक्रियाया उपमानत्वे साधारणधर्माभावरूपो यो दोष उक्तः सोऽप्यपरो दोषोऽस्मिन् पक्षे दुर्निवार इत्याह सोऽपीति । 'उपमानोपमेयत्वं तुल्यधर्मव्यपेक्षया' इत्यवश्यापेक्षिततया पूर्वमुक्त इत्यर्थः । मृग्योऽपि मृग्यश्च इति वा,अपि अपि च इति वा योजयित्वा दोषान्तरसमुच्चयपरतया अपिशब्दो व्याख्येयः । मृग्यः अन्वेषणीयः न हि शब्देनोपात्त इत्यर्थः ।

232 ननु शब्देनानुपादानेऽपि गम्यमानमेव साधारणधर्ममाश्रित्य उपमानिबन्धो भवति । तथाऽत्र किं न स्यादित्यत्राह यथेति । सत्यं गम्यमानमेव साधारणधर्ममादाय उपमानिबन्धो भवति । यथा 'इन्दुरिव ते वदन'मित्यादौ । तत्र शब्देनानुपात्तोऽपि प्रसिद्धत्वात् कान्तिः साधारणधर्मो गम्यते । न तथा प्रकृते लेपनकर्तुस्तमसश्च कश्चन साधारणधर्मः प्रसिद्धो यं गम्यमानमाश्रित्य उपमानिर्वाहः क्रियेत । लेपनं तु उपमानतावच्छेदकत्वेन इन्दुत्वादिवत् साधारणधर्मत्वाशङ्कामपि नार्हति । अत एव हि मृग्य इति पूर्वमुक्तम् । तदिदमभिप्रेत्याह न तथेति । अत्र वाक्ये लिम्पतिपदे, लिम्पतेरिति पाठे लिम्पतिपदादित्यर्थः लेपादन्यत् वाच्यभूतात् उपमानतावच्छेदकात् तमसि वस्तुतोऽविद्यमानाच्च लेपनाद्व्यतिरिक्तं साधारणधर्मत्वार्हं किमपि न गम्यत इति ।

233 सिद्धान्तमनुकीर्तयन्नुपसंहरति–तदिति । तस्मात् । उक्तरीत्या ग्रन्थविरोधयुक्तिविरोधाभ्यामुपमाया असम्भवात् । अयं 'लिम्पतीव तमोऽङ्गानि' इति वाक्यस्थः ध्वान्तकर्तृकः अङ्गकर्मा च उपश्लेषणार्थो लिम्पतिः । उपश्लेषणरूपो लिपधात्वर्थ इत्यत्र तात्पर्यम् । पुंसा दीपाभावेन क्लेशमनुभवता एवं अङ्गकर्मकत्वेन तमःकर्तृकत्वेन च उत्प्रेक्ष्यत इत्यङ्गीकर्तव्यम् ।

पर्यवसानगत्या तु तमसि अञ्जकर्मकोपश्लेषणकर्तृत्वमुत्प्रेक्ष्यत इति वक्तुं शक्यम् ।

234 इवशब्दश्रवणेन उपमावासनानुवृत्तिं शङ्कमानस्तस्य उत्प्रेक्षाबोधकत्वमप्यस्तीत्याह मन्य इति । अर्थादुत्प्रेक्षावाचकाः शब्दाः प्रदर्शिता भवन्ति ।

237 प्रीत्युत्पत्तिहेतुभूतं अत्र उपबृंहितं विशेषतो निबद्धं रूपम् आन्दोलितप्रौढचन्दनद्रुमपल्लवत्वम् । एवंविधमेव हेतुगर्भं विशेषणमित्युच्यते । निवृत्ताविति यथा उत्पत्तिहेतुनिबन्धनस्य हेत्वलङ्कारत्वं तथा विनाशहेतुनिबन्धनस्यापीत्यर्थः ।

239 एवंभूतः चन्दनारण्याधूननकृत् मलयानिर्झरस्पर्शी च । एवंभूतत्वमत्र हेत्वलङ्कारः ।

240 कारकहेतुः पूर्वं द्वेधा विभक्तः उत्पत्तिहेतुत्वेन निवृत्तिहेतुत्वेन च । अथाद्य निर्वृत्तिविकृतिप्राप्तिहेतुत्वेन त्रेधा विभागमभिप्रेत्याह निर्वर्त्य इति ।

242 अरण्यानि वाप्यश्चन्द्रश्च विषं कुर्वन्तीति विधेयप्राधान्यात् क्लीबैकवचनम् । कृतानि च कृताश्च कृतश्च कृतमिति 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्या'मित्येतत्सूत्रविहित एकशेषो वा । अरण्यवापीचन्द्राणां उद्दीपकत्वेन दुःखकारणत्वान्यत्र हेतवः ।

243 मानशिक्षां करोमीत्यभिप्रायवती बाला पश्यतीति वा मानशिक्षां अस्याः सम्पादयामीत्यभिप्रायेण प्रियस्थाने स्थिता या सखी तामिति वा योज्यम् । भ्रूभङ्गजिह्माक्षीति स्फुरिताधरेति च विधेयविशेषणम् । मानयोग्याभिप्रायविशिष्टप्रियस्थानस्थितिरत्र हेतुः ।

244 अर्कोऽस्तं गतः तेनेन्दुर्भाति पक्षिणश्च वासाय यान्ति इत्येवं हेतुत्वाभिधाने यद्यपि नालङ्कारत्वं भवति तथाऽपि त्रिभिरप्येभिर्वाक्यार्थैः मिथो हेतुहेतुमद्भावमनाश्रितैः कालविशेषो ज्ञाप्यत इत्येवं हेतुत्वे वक्रोक्तिसत्त्वाद्-

लङ्कारत्वं भवत्येवेति भावः।

245 स्वकीयं शब्दाभिहितज्ञाप्यज्ञापकभावमुदाहरणमाह– अवध्यैरिति।

246 अभावहेतव इति। यथा हेतूनां भावकार्यत्वेन अभावकार्यत्वेन च द्वैविध्यं तथा भावरूपत्वेनाभावरूपत्वेन चेति भावः।

247 वक्रोक्त्यभावादत्र न कश्चिदलङ्कार इति यदि कश्चिदभिदधीत तत्र किमुत्तरमिति चिन्तनीयम्।

252 भावाभावस्वरूपस्येति। ननु पञ्चस्वप्युदाहरणेषु भावरूपमेव कार्यम्। न क्वचिदभावरूपम्। अन्त्योदाहरणेऽपि सलिलाञ्जलिदेयत्वनिष्पत्तेरेवोपात्तत्वात्। नह्यङ्गचस्य मरणस्य कार्यत्वे 'तन्मे नन्दति मानसं' इत्यत्र दुःखनिवृत्तेः 'विवर्धन्ते सततं सर्वसम्पदः' इत्यत्र विपदभावस्य च व्यङ्ग्यस्य कार्यत्वस्य सुवचत्वात्। एवमुदाहरणान्तरेष्वपि कथञ्चिदभावरूपकार्यस्य सुसम्पादत्वेन व्यवस्थाभावात्, मरणस्यापि तत्त्वेन प्रतीतस्य भावरूपत्वस्यैव सम्भवाच्चेति चेत् सत्यमेवमेतत्। उचितमुदाहरणान्तरमनुसन्धेयमिति तु ग्रन्थकाराभिप्रायः। यथा —

'प्रपन्नादन्येषां न दिशति मुकुन्दो निजपदम्'

इत्यादि। अत्र हि प्रपन्नत्वाभावो मुकुन्दकर्तृकनिजपददानाभावे हेतुः। यद्वा सलिलाञ्जलेर्दानार्हत्वं तदुद्दश्यजनप्राणवियोगरूपमेवेति स्थिते कार्यस्याभावरूपत्वमिति।

253 चित्रेति। चित्राचित्रभेदेन पुनरपि हेतवो द्विविधाः। तत्र अचित्रा उक्ताः। चित्रा उच्यन्त इति। अतिशयोक्तिगर्भत्वादेषां चित्रत्वम्।

254 ननु यद्येतेऽपि हेत्वलङ्काराः सन्ति किमिति सर्वथा ते पूर्वैरनुक्ता इत्यत्राह–तेऽमी इति। लक्ष्येषु दृष्टत्वात् गौणवृत्त्याश्रयणेन वक्रोक्तित्वासत्त्वात् काव्यशोभाधानानुगुणस्य सौन्दर्यस्य विद्यमानत्वाच्च प्राचीनैरनुक्तानामन्येषामलङ्कारत्वमङ्गीकार्यमिति।

255 अत्र अनङ्गास्त्रमित्यपाङ्गे क्षत इत्युत्सुकीकृते च गौणम्। व्यधिकरणकार्यजनकत्वकथनादतिशयोक्तिगर्भता। तयाऽदृष्टेनाप्यनेन तस्या दृष्टत्वात् तद्दर्शनमेवास्य औत्सुक्यजनकमिति वस्तुस्थितिः। एवमुत्तरत्र यथोचितं द्रष्टव्यम्।

256-7 शैघ्र्ये सहत्वोक्तिः। प्राक्त्वोक्तिश्चातिशयोक्तिरूपा गौणी च।

259 नन्वयुक्तकार्ये लोकातिक्रान्तगोचरत्वेनातिशयोक्तिसत्त्वाद्युक्तं चित्रत्वम्। अत्र तु तदभावात्कथमिति। उच्यते। सेव्यभक्तिप्रयुक्तप्रणामाङ्गत्वात् हस्तसङ्कोचस्य, चरणद्वन्द्वरागस्य पादनखार्चिषां वा तत्र हेतुत्वमेव नास्तीति तन्निबन्धनमुभयत्रातिशयोक्तिरूपमेव। पूर्वत्रायुक्तकार्यत्वमप्यस्तीति विशेषः। रूपकघटनेनोभयत्र गौणवृत्त्याश्रयणं स्पष्टम्।

260-64 लीलापद्मनिमीलनं इङ्गितम्। तेन लक्ष्योऽर्थो निशि सङ्गमः। मुखे छायाविशेष आकारः। तेन लक्ष्यो रतिमनोरथः।

268 इत्येवमादीति। राजकन्येत्यत्र राजगृहप्रवेशावस्था। आनन्दाश्रिव्यत्र नायिकादर्शनावस्थेत्येवमवस्थावैचित्र्येण महाविषयोऽयमलङ्कार इति भावः।

270 अत्रोदाहरणे निबद्धा वीर्योत्कर्षस्तुतिर्निन्दैव, यतः सा कन्याया अस्मिन् वर्णनीये राज्ञि अनुरागनिवृत्तये भवति।

271 चपलः एकान्ततः एकस्यामेव भावबन्धं कर्तुमशक्तः। निर्दयः निष्ठुरः दाक्षिण्यरहितः। तेन जनेन, आगःप्रमार्जनायैव न त्वागःप्रसङ्गविरहरमणीयेषु समागमावसरेषु मनसो विनोदनाय चाटवो येन शिक्षितास्तेन तादृशेनेति यच्छब्दप्रतिनिर्देशकृतच्छब्दान्तराध्याहारेण योज्यम्। किं मे न किञ्चित्। सर्वथाऽहं तस्मिन्नुपेक्षाशालिनीति भावः।

अत्र दोषवदवभासमानः कश्चन चाटुकारितारूपो गुणो दर्शित इति

लेशः । चपलत्वनिर्दयत्वसहपाठात् उपेक्षणीयताहेतुत्वप्रतीतेश्च चाटुकारिताया दोषवदवभासमानत्वम् । आगःप्रमार्जनेन नायिकावशीकरणसामर्थ्ययोगात्तु तस्या वस्तुतो गुणत्वम् ।

275 लक्षणत्रयस्य वाक्यशेषः युक्तोत्कर्षमिति । उत्कर्षः परिपोषः । प्रीतेः रत्यादीनां भावानां अहङ्कारस्य च यत्र परमः परिपोषः तत्रैवैषामीदृशालङ्कारत्वम् । अन्यथा तु नेत्यभिप्रायः ।

278 'अद्य या मम' इति भामहोक्तमुदाहरणम् । तत्र सम्मतिप्रदर्शनाय तत्पठित्वा पुनरपि देवतान्तरविषयं स्वोपलब्धमुदाहरणान्तरमाह सोम इति ।

281 उभयत्र प्रीतिप्रकर्षाविशेषात् प्रेयोरसवतोः को भेद इत्यत्राह प्रागिति । पूर्वोदाहरणे या दर्शिता सा केवला प्रीतिः स्त्रीपुंसव्यतिरिक्तगतस्नेहरूपत्वात् । अत्र तु तद्गतस्नेहरूपत्वान्न केवला प्रीतिः अपि तु रतिः । सा च रूपबाहुल्ययोगेन शृङ्गारतां गता । तस्मादिदं रसवत्, न प्रेयः । पूर्वं तु प्रेयः, न रसवदिति ।

292 'ननु मधुरं रसव' दिति प्रथमपरिच्छेद एव रसवदुक्तमित्यत्राह वाक्यस्येति ।

294 केनापि दर्पशालिना पुंसा युद्धे निरुद्धः परः इति मुक्तः एवमुक्त्वा मुक्तो निरोधात् स्वच्छन्दगमनाय । एवमादिकं तत् अहङ्कारातिशयगर्भं वाक्यं ऊर्जस्वीति ज्ञेयम् ।

295 सिद्ध्यै निष्पत्त्यै प्रतीतये वा ।

306 अग्निमयी सृष्टिर्मयीति शैत्यस्य स्वविषयत्वप्रतिषेधादियं विषयापह्नुतिः ।

309 अपह्नुतेरुपमागर्भत्वं भामहेनोक्तम् । तदयं नेच्छतीति एतल्ल-

क्षणात्सुगमम् । अथ यदि शङ्क्येत किमुपमागर्भोऽपह्नुतिर्नैव सम्भवतीति तत्राह उपमापह्नुतिरिति । सम्भवत्येव । किन्तु प्रागेवालङ्कारान्तरप्रभेदत्वेन दर्शितत्वान्नेह दर्श्यत इति भावः । उपमाख्विति । उपमाप्रकरणे नैवा-पह्नुत्युदाहरणं किंचित् दृश्यते । तादृशोदाहरणश्लोको गलितः स्यात् । यद्वा अन्योक्तरीत्या रूपकप्रकरणपरतया उपमाशब्दं व्याख्याय —

नैतन्मुखमिदं पद्मं न नेत्रे भ्रमराविमौ ।
एतानि केसराण्येव नैता दन्तार्चिषस्तव ॥

इति तत्रत्यश्लोकाभिप्रायमिदं ग्राह्यम् । यद्वा 'न जातु शक्तिरिन्दोस्ते' इत्युक्ता प्रतिषेधोपमाऽत्राभिप्रेतेति व्याख्यानान्तरोक्तं युक्तमिति ।

330 विवक्षितः प्रकृते वर्णयितुमिष्टो यो गुणः तेन उत्कृष्टैः प्राप्तोत्कर्षैः । तस्मिन् तद्गुणविषये उत्कृष्टैरिति वा ।

335 दुर्दिनोपमानत्वस्य अनुरागोदयस्य च विरोधः । अत्र षट्सूदाहरणेषु आद्यद्वयमुद्दीपनविषयं द्वितीयं आलम्बनविषयं तृतीयमनुभावतत्परमिति वा, द्वितीयं संयुक्तविषयं तृतीयं विप्रयुक्तविषयमिति वा कश्चन क्रमोऽनुसन्धेयः ।

343 ननु निन्दाप्रतीतौ कथं स्तुतिसम्भव इत्यत्राह दोषाभासा इति । हि यस्मादत्र दोषत्वेन आभासमाना वस्तुतो गुणा एव प्रतीतिविषयत्वं प्राप्नुवन्ति तस्मात् स्तुतिसम्भवः । गुणाभिधानमेव हि स्तुतिः ।

344-6 अत्राभासमानाः क्रमेण पराक्रमचरित्रकलत्रविषया दोषाः ।

347 द्वितीयतृतीययोः श्लेषानुविद्धा । आद्यऽन्या ।

351 श्लोकपूर्तये इहैव परिवृत्तिलक्षणम् ।

358 भामहादिभिः पूर्वाचार्यैर्निरूपितानां केषांचिदलङ्काराणामत्रानिरूपणेन शङ्कनीयां न्यूनतां परिहरति अनन्वयेति । उक्तेष्वेवान्तर्भावात् पृथगनिरूपणम्, न त्वनिरूपणमेवेति कथं न्यूनतेति भावः ।

362 ननु किमिति प्रायः प्रत्यलङ्कारं श्लेषः प्रदर्श्यत इति श्लेषोद्भिन्नेनेव केनचित् पृष्ट आह श्लेष इति । अथ वा यथाऽत्र अर्थान्तरन्यासस्य तथाऽन्येषामपि प्रायः सर्वेषामलङ्काराणां श्लेषेण संसृष्टिर्भवतीत्याह श्लेष इति। ननु का वक्रोक्तिरित्यत्राह भिन्नमिति । स्वभावोक्तिभिन्नः सर्वोऽलङ्कारो वक्रोक्तिरिति भावः। समकक्षसंसृष्टेरुदाहरणं न दृश्यते। 'लिम्पतीव तमो ऽङ्गानि' इति पूर्वोदाहृतैकदेशे श्लोके तदनुसन्धानं सुकरमिति ग्रन्थकारो मन्यत इति केचित्। पठन्ति चात्र तं श्लोकम् । 'आक्षिपन्ति' इत्यत्रैव पूर्वार्धे गम्याया उपमायाः तत्र यो वाच्योऽर्थ आक्षेपरूपस्तत्समर्थकार्थान्तरन्यासस्योत्तरार्धे च अन्योन्यनैरपेक्ष्येण समकक्षतयाऽवस्थानात् तदेव तत्राप्युदाहरणमित्यपरे।

363 प्रबन्धः एकार्थवर्णनप्रवृत्तो महान् वाक्यराशिः सर्गोच्छ्वासादिरूपो वा तदेकदेशात्मको वा कृत्स्नकृतिरूपो वा । स विषयः आश्रयो यस्य तं गुणं अलङ्कारं भाविकत्वमिति प्राहुः । अन्येषां हि अलङ्काराणां एकैकं पद्यं वाक्यं वाऽऽश्रयः । अस्य तु प्रबन्ध एवेति । एतन्मते गुणालङ्कारयोरभेदात् गुणमित्याह । भाविकपदव्युत्पादनाय प्रथमं प्रकृतिभूतभावशब्दार्थमाह भाव इति । 'काव्येष्वस्य व्यवस्थितः' इति पाठः समीचीनः। अस्य कवेः काव्येषु व्यवस्थितो योऽभिप्रायः उपक्रमप्रभृत्यावसानमनुवर्तमानं रसाभिव्यञ्जनतात्पर्यं स भावः। तेन निर्वृत्तं भाविकम्। यदा काव्यमत्र विशेष्यतया गृह्यते तदा भाविकत्वमलङ्कार इति व्यपदेशः। यदा तु काव्यधर्मो गृह्यते तदा भाविकमलङ्कार इत्युभयथाऽप्युपपत्तिर्द्रष्टव्या।

364-5 ननु किं नाम तत् यत् कवेर्भावेन निर्वृत्तमिति चेत् तत् प्रदर्शयन् व्युत्पादनमुपसंहरति परस्परेत्यादिद्वयेन । वस्तुनः कथाशरीरस्य पर्वाणि भागाः तेषां सर्वेषां परस्परोपकारित्वं सन्धितदङ्गादिरूपेण स्थितिः।

न तु यस्य कस्यचिदंशस्य सर्वथाऽसङ्गततया स्थितिः । व्यर्थविशेषणा-करणम् ।

हनुमानतरत् सिन्धुं शारदाम्बरनिर्मलः

इत्यत्र हि व्यर्थं विशेषणम् । रूपविशेषस्य समुद्रलङ्घनेऽनुपयोगात् । तद्वर्जनमिति । स्थाने समुचिते वर्णना गुणप्रभावादिनिबन्धनम् ।

गम्भीरस्यापि वस्तुनः रचनासौष्ठववशेन स्फुटप्रतिपत्तिसम्पादनम् । गजसमुद्रादिकं नामोच्चारणमात्रेण तद्विदां बुद्धिं यथावदधिरोहति । तथाऽपि कविना तत्तदुचितशब्दार्थघटनाविशेषेण यथावस्थिततत्प्रतिपत्तिसम्पादने यतितव्यम् । अन्यथा तत्कृतेः काव्यत्वं न स्यादिति ।

एवं काव्यस्य काव्यत्वापादकशोभाविशेषकारि सर्वमिदं, सर्वेषामर्थानामङ्गाङ्गिभावेनावस्थानं, शब्दार्थदोषवर्जनं, औचित्यं, शब्दार्थघटनासौष्ठवमित्येतच्चतुष्टयं भावायत्तं कविसम्बन्धिभावनाविशेषैकसाध्यं तस्मादिदं भाविकमिति ।

भाविकत्वमिति प्राहुः प्रबन्धविषयं गुणम् ।
प्रत्यक्षा इव दृश्यन्ते यत्रार्था भूतभाविनः ॥

इति भाविकं लक्षयित्वा अनुपदं यत् भामहस्तद्विषये आह—

चित्रोदात्ताद्भुतार्थत्वं कथायाः स्वभिनीतता ।
शब्दानाकुलता चेति

इति तद्वा तथा वा किञ्चिदिह दण्डिनोक्तमिति ज्ञेयम् ।

366 ननु भरतमुनिप्रणीते नाट्यशास्त्रे रूपकनिरूपणपरे पञ्च सन्धयः तदङ्गानि बहूनि, चतस्रो वृत्तयः तदङ्गानि, षट्त्रिंशल्लक्षणानीत्येवमादि काव्याङ्गतया बहु निरूपितम् । तत् कथमिह न निरूप्यत इत्यत्राह यच्चेति । अयं भावः—'काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्ष्महे' ।

तथापि सर्वस्य काव्यशोभाकरत्वेन स्थितमलङ्कारत्वमिति किमन्यद्वक्तव्यम् । विशेषतस्तन्निरूपणं तु कृतकरत्वप्रसङ्गात् अतिविस्तरापाताच्च न क्रियत इति ।

367 अर्थालङ्कारप्रकरणोपसंहारः पन्था इति । प्राचीनैः कथितः उक्तविधः अलंक्रियाणां पन्थाः घटनप्रकारो विवृतः सम्यक् प्रदर्शितः । कथम् । परिमाणवृत्त्या परिमाणेन परिमिततया वृत्तिः वर्तमानत्वं तथा । असाधारणा अलङ्कारा दश, साधारणाः पञ्चत्रिंशदिति संख्यानियमवत्तयेत्यर्थः । अनन्तं विस्तरं संक्षिप्य सर्वविशेषप्रतिपादनं हि अनन्तो विस्तरो भवेत्तस्मात्तं वर्जयित्वेत्यर्थः । यद्वा अनन्तेन विस्तरेण यन्निरूपणीयं तत् अल्पेनैव शब्देन प्रतिपाद्येत्यर्थः । नन्वेवं सर्वविशेषावगमो न स्यादित्यत्राह वाचामिति । कण्ठोक्त्या अप्रदर्शिता अपि विशेषा अभ्यासेन सुज्ञानाः । सर्वथा वाचा निरूपयितुमशक्या बहवो विशेषाः सन्त्येव लक्ष्येषु । अभ्यास एकस्तदवगमोपायः, न तु शतमपि लक्षणग्रन्थाः । तस्मात् सर्वमन्यज्जिज्ञासमानैर्महाकविनिबन्धपरिशीलनेऽभ्यासः कर्तव्य इति ।

इति द्वितीयः परिच्छेदः ।

---

अथ तृतीयः परिच्छेदः ।

1-3 वर्णानां संहतेः सङ्घातस्य विशिष्टा कविप्रतिभासंस्पर्शशोभिनी अथ वा नियमविशेषवती आवृत्तिः यमकम् । तदनेकधा—व्यवहिताव्यवहितभेदात् । उभयरूपमप्यस्तीति पश्चाद्वक्ष्यते । व्यवेतेति वकारघटितः पाठो युक्तः । न पकारघटितः । 'व्यवायान्नानुषज्येत' इत्यनुषङ्गापवादाधिकरणजैमिनिसूत्रे 'अट्कुप्वाङ्नुंव्यवायेऽपि' इति पाणिनीये च व्यवपूर्वकस्येणो व्यवधानार्थतया प्रयोगदर्शनात् । व्यपपूर्वकस्य क्वाप्यदर्शनात् । 'समेत्य च व्यपेयातां' इत्यादिषु विप्रयोगार्थत्वस्यैव प्रतीतेः ।

पुनर्बहुधा भेदं दर्शयिष्यन् तत्र निमित्तमादौ सामान्यतो दर्शयति तच्चेति । पादानामिति । पादबहुत्वेन तत्र प्रतिपादमादिमध्यान्तरूप-स्थानबहुत्वेन चेदं यमकं बहुधा भिद्यत इति भावः । इदमेव विभज्य दर्शयति एकेति । एकस्मिन्नेव पादे द्वयोः पादयोः त्रिषु पादेषु चतुर्षु पादेष्विति पादविकल्पकृता यमकविकल्पा भवन्ति । तत्रापि प्रतिपादं आदावेव, मध्य एव, अन्त एव, मध्यान्तयोः, मध्याद्योः, आद्यन्तयोः, आदिमध्यान्तेषु त्रिष्वपीति स्थानविशेषकृता विकल्पा इत्युक्तं भवति। आदिश्च मध्यं .... .... आद्यन्तौ च सर्वं च आदि....सर्वाणि तेष्विति सप्तम्यर्थे तसिः । तृतीयार्थे वा । एतैः स्थानैः विकल्पना भवन्तीति ।

अत्रैवं परिच्छेदार्थविवेको द्रष्टव्यः । अस्मिन् परिच्छेदे यमकं दुष्करान्तरं प्रहेलिकेति इमान् त्रीन् विषयानधिकृत्य प्रवृत्तानि त्रीणि महा-प्रकरणानि । तत्र प्रहेलिकाप्रकरणं

प्रहेलिकाप्रकाराणां पुनरुद्दिश्यते गतिः ॥ ९६ ॥

इत्युपक्रम्य आपरिच्छेदावसानं प्रवर्तते ।

दुष्करान्तरप्रकरणे अवान्तरविषयोऽनेकः । तेष्वेको बन्धविशेषः। गोमूत्रिका अर्धभ्रमणं सर्वतोभद्रमिति त्रिविधः स 'वर्णानामेकरूपत्वं' इत्यष्ट-सप्ततितमप्रभृति पञ्चभिर्लक्ष्यलक्षणश्लोकैर्निरूप्यते ।

स्वरस्थानवर्णनियमा अन्ये विषयाः । तत्र चतुस्स्वरत्रिस्वरद्विस्वरैक-स्वरनियमः चतुरशीतितमप्रभृति चतुर्भिः, चतुःस्थानत्रिस्थानद्विस्थानै-कस्थाननियमः अष्टाशीतितमप्रभृति चतुर्भिः, चतुर्व्यञ्जनत्रिव्यञ्जनद्विव्य-ञ्जनैकव्यञ्जननियमः द्विनवतितमप्रभृति चतुर्भिश्च श्लोकैरुदाहृतः ।

आद्यं तु यमकप्रकरणं बह्ववान्तरविभागम् । अनुलोमप्रतिलोम-भेदात् प्रथमं द्विविधे यमके यत् प्रतिलोमं तत् पादप्रतिलोमार्धप्रतिलोम-श्लोकप्रतिलोमभेदेन त्रिधा भिन्नं चतुरशीतितमात्प्रभृति त्रिभिः श्लोकै-

रुदाहृतम् । अनुलोमयमकं शुद्धसङ्कीर्णभेदेन द्वेधा । तत्र सङ्कीर्णोदाहरण-श्लोको द्विसप्ततितम एक एव, यत्र अव्यवेतव्यवेतसन्दष्टयमकानां मिश्री-भावः । अत्र पादाद्यभ्यासमिश्रणविरहात् पादैकदेशाभ्यासभेदानामेव मिश्रणदर्शनाच्च सन्दष्टयमकात्परतोऽस्य श्लोकस्य पाठो युक्त इति भाति । तथा चेत् अनुलोमयमकं परावरभेदेन विभज्य अवरे पादैकदेशाभ्यासस्य शुद्धसङ्कीर्णभेदेन विभागो द्रष्टव्यः ।

शुद्धं परावरभेदेन द्विविधम् । तत्र प्रथमपादप्रथमार्धस्य सप्त-कृत्वोऽभ्यासरूपं परयमकं एकसप्ततितमेनैकेन श्लोकेनोदाहृतम् ।

अवरयमकं श्लोकाभ्यासः अर्धाभ्यासः पादाभ्यासः पादैकदेशा-भ्यास इति चतुर्धा । एत्वाद्योदाहरणभूतौ अष्टषष्टितम एकोनसप्तति-तमश्चेति द्वौ श्लोकौ । द्वितीयं अव्यवेतव्यवेतोभयरूपत्वेन त्रिधा भिन्नं चतुःपञ्चाशप्रभृति श्लोकत्रयेणोदाहृतम् ।

पादाभ्यासः, सकृत् द्विः त्रिरिति प्रथमं त्रिधा । तत्र प्रथम-पादस्य सकृदभ्यासः, अव्यवेतः एकेन पादेन व्यवेतः द्वाभ्यां पादाभ्यां व्यवेत इति त्रिविधः सप्तपञ्चाशादिश्लोकत्रयेणोदाहृतः। द्वितीयपादस्य अव्य-वेतो व्यवेत इति द्वौ भेदौ षष्टितमैकषष्टितमाभ्यां निदर्शितौ । तदनन्तर-श्लोकस्तृतीयपादाभ्यासोदाहरणम् ।

द्विरभ्यासः प्रथमपादस्य अव्यवेतव्यवेतभेदेन द्विविधः त्रिषष्टितम-चतुःषष्टितमयोर्दर्शितः । द्वितीयपादस्य पञ्चषष्टितमे ।

त्रिरभ्यासः प्रथमपादस्यैव । तस्योदाहरणं षट्षष्टितमः श्लोकः । अत्र चत्वारोऽपि पादा एकरूपा भवन्तीति महायमकमिदमुच्यते ।

पादैकदेशाभ्यासः सन्दष्टासन्दष्टभेदेन द्विविधः । तत्र सन्दष्टो-दाहरणश्लोको द्विपञ्चाशः । पादद्वयान्तादिस्थानस्यास्य यमकस्य नियमेन यमकानधिकरणभागद्वयमध्यवर्तित्वात् सन्दष्टत्वम् ।

असन्दष्टम् —

| | |
|---|---|
| पादस्य | आदौ |
| | मध्ये |
| | अन्ते |
| | मध्यान्तयोः |
| | मध्याद्योः |
| | आद्यन्तयोः |
| | आदिमध्यान्तेषु |

इति सप्तधा । सर्वमिदं एकास्मिन्नेव पादे, द्वयोः पादयोः त्रिषु पादेषु चतुर्ष्विति पुनर्बहुधा भिद्यते । पुनरपि सर्वमिदं अव्यपेतव्यपेतोभयरूपत्वेन विभक्तं दृश्यते ।

तत्र 1 आदियमकस्याव्यपेतस्य एकपादगतस्य

| | |
|---|---|
| उदाहरणानि चतुर्थात् प्रभृति | ४ श्लो. |
| पादद्वयगतस्य | ६ श्लो. |
| त्रय ,, | ४ ,, |
| चतुष्टय ,, | १ ,, |
| आहत्य | १५ (४-१८) |
| ,, व्यपेतस्य पादद्वयगतस्य | ६ ,, |
| ,, ,, त्रय ,, | २ ,, |
| पादचतुष्टयगतस्य — | |
| ,, सरूपावृत्तिरूपस्य | १ ,, |
| ,, विरूपावृत्तिरूपस्य | ३ ,, |
| | १२ (२०-३२) |

| | |
|---|---|
| ,, उभयरूपस्य पादचतुष्टयगतस्य- | |
| विरूपावृत्तिरूपस्य | २ |
| सरूपावृत्तिरूपस्य | १ |
| | ३ (३४-३६) |
| 2 मध्ययमकस्य उभयरूपस्य पादचतुष्टयगतस्य | १ |
| ,, व्यवेतस्य ,, | १ |
| | २ (३९-४०) |
| 3 अन्तयमकस्य ,, ,, | १ |
| ,, उभयरूपस्य | १ |
| | २ (४१-४२) |
| 4 मध्यान्तयमकस्य व्यवेतस्य पादचतुष्टयगतस्य | १ |
| ,, उभयरूपस्य ,, | १ |
| | २ (४३-४४) |
| 5 मध्यादियमकस्य व्यवेतस्य ,, | १ |
| ,, उभयरूपस्य ,, | १ |
| | २ (४५-४६) |
| 6 आद्यन्तयमकस्य व्यवेतस्य ,, | १ |
| ,, उभयरूपस्य ,, | १ |
| | २ (४७-४८) |

| | | |
|---|---|---|
| 7 आदिमध्यान्तयमकस्य व्यपेतस्य | ,, | १ |
| ,, उभयरूपस्य | ,, | १ |
| | | २ (४९-५०) |

एवं पञ्चाशश्लोकपर्यन्तमेकं सन्दष्टभिन्नपादैकदेशाभ्यासात्मकयमकविषयं प्रकरणमिदमस्मिन् परिच्छेदे प्राथमिकम् । एतद्विषयनिर्देशविभागपरमेव 'अव्यपेतव्यपेतात्मा' इत्यादि 'दृश्यन्ते तत्र केचन' इत्यन्तं श्लोकत्रयम् । अत्रोपक्षिप्तेषु यमकभेदेषु प्रायो दुष्कराणामेवोदाहरणं ग्रन्थकारो दर्शयति न सुकराणाम् । अत एव आदिमध्यान्तादियमकानां एकादिपादमात्रवर्तिनामुदाहरणादर्शनम् । एवमवान्तरकतिपयप्रभेदोदाहरणाप्रदर्शनेऽपि ग्रन्थकारः

'आदिमध्यान्तमध्यान्तमध्याद्याद्यन्तसर्वतः ।'

इत्येवं यान् विकल्पानदर्शयत् तेषां सर्वेषामुदाहरणं दत्तवानेवेति स्फुटमिदमधस्तात् कृतेन विभज्य निरूपणेनेति ।

70 तत्रापि एकाकारेषु चतुर्ष्वपि पादेषु । प्रथमपादार्धस्य सप्तकृत्वोऽभ्यास इति हृदयम् ।

72 अस्यात्र नातीव सङ्गतिरित्युक्तम् ।

73 प्रातिलोम्येनावृत्तिः प्रतिलोमयमकमिति स्मृतम् । प्रतिलोमत्वात् ।

126 निरूपितेनैव शोभनेन मार्गेण विशदबुद्धिः सन् सुकरदुष्करयोर्यमकादिविषययोर्मार्गं जानाति । न्यायव्याकरणादिशास्त्रान्तरे स्वधीत्यापि इदमस्मदीयं लक्षणं विना इमं सुकरदुष्करयमकादिनयं एतुमवगन्तुमलम् ।

अथ चतुर्थः परिच्छेदः ।

1 परिच्छेदार्थमुपक्षिप्य लक्षयति काव्य इति । विचक्षणैः काव्यकरण-कुतूहलिभिर्बुद्धिमद्भिः । विज्ञातव्याः तस्मान्निरूप्यन्त इति भावः । विपत्तिः शोभाहानिः । सम्पत्तिः तदभावः । शोभाहानिकरत्वं दोषलक्षणम् । तदभावो गुणलक्षणमिति । केचिदिमं श्लोकं न पठन्ति ।

5 अपार्थं लक्षयति समुदायेति । अस्य दोषत्वं गुणत्वं च विभज्य दर्शयति तदिति । बालादिवाक्येषु गुणत्वम् । अन्यत्र दोषत्वमिति ।

7 इमं दोषमनङ्गीकुर्वन्निवाह इदमिति । अस्वस्थचित्तवृत्तवर्णनावसरे अपार्थनिबन्धनं गुण एव । अन्यत्र तन्निबन्धने यथा प्रवृत्तिर्भवेत् तथा जडः कोऽपि कविर्न सम्भाव्यते । तस्मादप्रसक्तत्वादस्य दोषस्य वर्जनीयतयोपदेशः केवलं श्रमफल इति ।

10 व्यर्थस्य गुणत्वमाह अस्तीति । यस्यामवस्थायां अभिषङ्गविवश-चेतोभिरुक्ता विरुद्धार्थाऽपि भारती श्रोतॄणां अभिमता अनुद्वेगकारिणी भवति । तत्र गुणत्वमिति । यद्वाऽभिषङ्गिचेतसो वक्तुरभिमता वक्तुमिष्टा भवति । तथा च विरुद्धार्थभाषणस्य तत्स्वभावत्वात् तत् तथैव निबध्नतः कवेः काव्यस्य वा न कश्चिद्दोष इति ।

12-13 अर्थतः आक्षेपात् । शब्दतः कण्ठोक्तितः । उत्कामुन्मनयन्तीत्यत्र शब्दपौनरुक्त्यम् । उत्कामित्यनेनोक्तस्य औत्सुक्यस्य उन्मनयन्तीति पुनः शब्देन कण्ठोक्त्या वचनात् । अलकाविषाऽम्भोधरा इत्यादौ एकस्योक्तौ इतरस्याक्षेपणैव लाभसम्भवात् तस्य पुनर्वचनादर्थपौनरुक्त्यम् ।

14 न दोष इति । न पूर्ववेव दोषत्वाभाव एव, किन्तु अनुकम्पातिशयाभिव्यञ्जकत्वादलङ्कारत्वमपि भवतीति ।

16 .... .... वचांसि संशयं जनयन्ति चेत् दोष एव । असौ दोषः ससंशय इत्युक्तः । उद्देशे सामान्ये नपुंसकम् । वाक्यं विशेष्यमिति वा ।

17 दूरवृत्तिस्ते माता ईदृशं ते कर्म द्रष्टुं न समर्था इत्येके ऽर्थः । सन्निहिता माता ईदृशं तेऽविनयं द्रष्टुमसहा इत्यपरः ।

18 निर्णयार्थं प्रयुक्तानीत्यनेन पूर्वं अन्यत्रादोषत्वं व्यञ्जितम् । तद्विशदयति ईदृशमिति ।

23 यत्न इति । तदनुगुणपदप्रयोग इत्यर्थः ।

25 आपाततो व्याकरणविरुद्धत्वप्रतिभानपि शिष्टप्रश्चेत् स साधुरेव । तदनुरोधेन तु लक्षणं व्याख्यातव्यम् । तदाहुः—

'नानाव्याकरणाभिज्ञबहुविद्वत्परिग्रहे ।
शब्दासाधुत्वमाहुर्ये शाब्दिकांस्तान्न मन्महे ॥
विशिष्टैकत्यनुसारेण व्युत्पत्तिः स्मर्यते बुधैः ।
अविगीतप्रयोगेषु विगानं नैव साम्प्रतम् ॥' इति ।

26 न जिज्ञासा न संशयः । अत्रोत्तरार्धे पाठान्तरमन्वेषणीयमिति भाति ।

27 दक्षिणाद्रेरिति पञ्चमी । उपसरन्निति । 'पाघ्राध्मास्थाम्ना ....' इत्यादिसप्तमतृतीयसूत्रेण सर्तेः 'धौ' इत्यादेशेऽविशेषेण विहितेऽपि तस्य शीघ्रगमनार्थत्व एव शिष्टप्रत्वात् उपसरन्निति नासाधुः ।

28 माहात्म्यं शिष्टप्रयोगाविरुद्धप्रवृत्तिकत्वानुगुणः तात्पर्यविशेषः । सौभाग्यं काव्यरसानुगुणत्वम् ।

29 श्रवणोद्वेजनत्वे दोषत्वम् । नान्यथेति ।

30 अनुद्वेजकमुदाहरति कार्येति ।

31 सन्धिना विकारोऽन्ते यस्य तत् 'कार्योकार्यो' 'अविकला' इत्यादि सन्धिविकारान्तमित्यतद्गुणसंविज्ञानो बहुव्रीहिः । तरुणवाचस्पत्यनुरोधेन पाठान्तरमन्वेष्टव्यमिति भाति ।

35 वाचस्पत्यादृतः पाठो विवरणं च श्रेयः । 'निशाताः' इत्ययथागुरुत्वम्, मदनबाणा इत्ययथालघुत्वमिति ।

36 न प्रगृह्यादिहेतुकमिति भामहोपालम्भः । अयं गुण एव न दोष इति भावः ।

38 अयं श्लोकस्तरुणवाचस्पतिव्यतिरिक्तैरगृहीतः । प्रगृह्यादीत्यत्र आदिपदविवक्षितार्थोदाहरणतया एतत्पाठ इति तदभिप्रायो भाति ।

53 असतामिति । असतां अविद्यमानानां वस्तूनां दुर्जनानां च उद्भवाः उत्पत्तयोऽभ्युदयाश्च यस्मात् दृश्यन्ते तस्मादसदुद्भूतिः स्थान एवोपवर्ण्यत इति श्लेषसङ्कीर्णोऽर्थान्तरन्यासः ।

55 जातपुत्राः पुत्रजनने सति तदनन्तरम् । वैश्वानरीमिष्टिम्—'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इति तैत्तिरीयसंहितायां द्वितीयद्वितीयपञ्चमे विहिताम् । वैदिकेषु कर्मसु यत्र यत्र हविःप्रक्षेपात्मको होमो विहितस्तत्र तत्र 'यदाहवनीये जुहोति' इति वाक्येन आहवनीयनामाऽग्निरधिकरणत्वेन विहितः । आहवनीयः 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिश्रुतिविहितेन आधानाख्येन कर्मविशेषेण साध्यः । इदमाधानं यैः कृतं ते आहिताग्नयः । तेषामेव आहवनीयरूपाग्निविशेषवत्त्वात् अग्निसाध्येषु वैदिककर्मस्वधिकारः । ये त्वनाहिताग्नयस्तेषामाहवनीयविरहेण तत्रानधिकारात्तैस्तानि नानुष्ठेयानि । तथा सति तादृशैरनुष्ठितत्वेन इष्टिविशेषस्य कथनं श्रुतिविरुद्धमिति ।

56 उपनयनेतिकर्तव्यतायाः स्मृतिष्वेव भूयसा विधानात् तत्रैवोपनयन-

स्योत्पत्त्यादिविषय इत्यभिप्रेत्य स्मृतिविरोधोदाहरणत्वेन श्लोकान्तरमिदमिति भाति । 'उपनीय तु यः शिष्यं वेदमध्यापयेत् द्विजः' इत्यादिस्मृतिभिरुपनयनस्य वेदाध्ययनाङ्गत्वावगमात् अनुपनीतस्य वेदाध्ययनं स्मृतिविरुद्धम् ।

62 परिच्छेद्योऽप्यपरिच्छेद्यः । सांशोऽपि निरंशः । अनेकोऽप्येकः । कथमेवं विरुद्धधर्मसमवायः । विश्वमूर्तित्वात् । परिच्छेद्यत्वसांशत्वानेकत्वानि मूर्तिधर्माः । अन्ये स्वरूपधर्माः । तस्मान्नानुपपत्तिः । सूर्यचन्द्रदेवमनुष्यादयः परमात्मनो मूर्तयः शरीराणि । तत्र परिच्छेद्यत्वादयो धर्माः । तत्र सर्वत्र अन्तर्यामित्वेन वर्तमानः परमात्मा तु अपरिच्छेद्यनिरंशैकस्वरूप इति ॥

शास्त्रज्ञाः साहित्यामौदासीन्यं प्रदर्शयन्ति बहु ।
अज्ञातशास्त्रगतयो विवरणचापलमुपेत्य सीदन्ति ॥
उभयविदां कुशलधियां परिमितमभिकाङ्क्षितार्थसामग्र्यम् ।
इति वितता क्षतिमगता भुवि बहुधा भवति भगवतो लीला ॥
शशाङ्कवेदाङ्कशशाङ्कसंमिते विदेशवर्षे निरमायि मार्जना ।
वृषाद्रिशृङ्गाग्र्यदुदारचन्द्रमःपदारविन्दप्रवणान्तरात्मना ॥

इति काव्यादर्शव्याख्यायां मार्जनायां
चतुर्थश्चरमः परिच्छेदः ।



[ ३५१ पुटे पञ्चमपङ्क्तौ 'चातुर्विध्यमिहोच्यते' इत्यत्र उपरीदमनुसन्धेयम् ]

वृत्तदेवादिचरितशंसि चोत्पाद्यवस्तु च ।
कलाशास्त्राश्रयं चेति चतुर्धा भिद्यते पुनः ॥

इति भामहीये चतुर्धाविभागे कलाविषयस्य शास्त्रविषयस्य च निबन्धस्य काव्यत्वमेव न भवतीति इह सर्वथा तदुपेक्षा । पूर्वार्धोक्तं तु 'इतिहास-

कथोद्भूतमितरद्वा’ इति सर्गबन्धलक्षणे कथञ्चिदन्तर्भावितम् ।

यत्तु नेयार्थादीन् श्रुतिदुष्टादींश्च कांश्चित् दोषान् भामहः काव्यशरीरप्रकरण एव निरूपयति, तत्र विमर्शनीयं सर्वं गौडवैदर्भमार्गवैलक्षण्यप्रतिपादनोपयोगितया कृतेन गुणनिरूपणेनैव प्रायेण विमृष्टं भवतीति मन्यते ।

शरीरनिरूपणपरप्रथमपरिच्छेदावसाने भामहः ‘एतद्ग्राह्यं सुरभि कुसुमं’ इत्यादिना मालाकारदृष्टान्तं प्रदर्श्य काव्यनिर्माणोपयुक्तपदविशेषावधारणे तत्प्रयोगस्थानावधारणे च यत्नं सावधानं कर्तव्यमुपदिशति । तत्स्थाने अयं काव्योत्पत्तिहेतूनभिप्राय परिच्छेदं समापयति ।



# अनुक्रमणिका ॥



---

**

---

## अनुबन्धः ।

### 1 उपोद्घातानुबन्धः ।

वादिजङ्घालः दशमशतके (९२०) स्थितस्य कर्णाटमहीपालस्य मारसिंहस्य आस्थाने बभूवेति, श्रुतानुपालनीनामकं तदीयं विस्तृततरमन्यत् काव्यादर्शव्याख्यानमस्तीति च श्री. एम्. रामकृष्णकविमुखात् ज्ञायते ।

### 2 मार्जनानुबन्धः ।

I 72. न्यक्षेणेति पदं वाक्यपदीये प्रयुक्तं दृश्यते—

वर्त्मनामत्र केषांचिद् वस्तुमात्रमुदाहृतम् ।
काण्डे तृतीये न्यक्षेण भविष्यति विचारणा ॥ II 491

इति । तत्र तस्य पुण्यराजीयं व्याख्यानमेवम्—

न्यक्षेण आदरविशेषेण

इति । विस्तरेणेत्यप्यर्थो भवितुमर्हतीति भाति प्रकरणमात्रपर्यालोचने ।

तरुणवाचस्पत्युक्ते कात्स्न्र्यरूपेऽर्थे कोशोऽप्यस्तीति विशेषः। यत्तु भार्गवादिरूपमर्थान्तरं, तस्य दण्डिश्लोके क्षत्रियक्षपणान्वयमात्रपर्यालोचनमूलस्य हरिकारिकायां सर्वथाऽसङ्गतत्वेनोपेक्षैव युक्ता।

III 11. मन्मनोऽपीति। 'कर्णमूले गुप्तालापः' इति देशान्तरीये संस्कृतपदकोशे एतत्पदार्थविवरणमुद्धृतम्।

शब्दकल्पद्रुमे एवं दृश्यते--

'मन्मनः पुं। गद्गदध्वनिः इति त्रिकाण्डशेषः। दम्पत्योः कथनविशेषः। यथा चिन्तामणिधृतवचनम्—

सुरते कर्णमूले तु निजदेशीयभाषया।
दम्पत्योः कथनं यत्तु मन्मनं तं विदुर्बुधाः॥'

इति। मुणमुणेत्यादिवदनुकरणशब्दोऽप्ययं भवितुमर्हति। एवंरूपो मत्तकोकिलनिस्वन इति योजना।

